Jan., Feb., & March. 1937.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO'S. 469, 470, & 471.

अपौरुषेयम्—

# श्रीमाहेश्वरतन्त्रम् ।

S'RĪ

# MĀHES'VARATANTRAM

FASCICULUS. I–III १–३

*PUBLISHED BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE,
*Benares City.*
1940

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

No's 469, 470 & 471.



S'RĪ

# MĀHES'VARATANTRAM

*Edited by*

BRAHMACHĀRI S'RĪ KRISHNAPRIYĀCHĀRYA JI

FASCICULIS. I-III. १-३.

BENARES.

JAYA KRISHNA DÂS HARI DÂS GUPTA

THE CHOWKHAMBA SANSKRIT SERIES OFFICE

1940.

॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला

( ग्रन्थ-संख्या ८५ )

ग्रन्थाङ्काः ४६९, ४७०, ४७१.

श्रीसुमङ्गलया पराशक्त्याविर्भावितम् ।

श्रीशिवेनोमाया उपदिष्टं ब्रह्मरहस्यात्मकम् ।

अपौरुषेयम्—

# श्रीमाहेश्वरतन्त्रम् ।

तच्च—

श्रीमङ्गलपुरीतपतीतीरब्रह्मतीर्थपरायणेन नैष्ठिकब्रह्मचारिश्रीकृष्णारामशिष्येण

कृष्णप्रियाचार्येण पाठभेदादियोजनापुरःसरं संशोधितम् ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

बिक्रम संवत् १९९६

# भूमिका

अहो सुविदितमेव कलिकालदावानलतप्तचेतसां सचेतसां निरन्तरं दुःखहानसुखावाप्तिसोपानपरम्परामधिगन्तुमुन्मनीभूतं नितरां जगदिति । तत्र नाचिरविलासिनी सांसारिकसुखखद्योतिका तथा पूर्णतामायाति यथा-'रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवति, (एष एवानन्दयति) को ह्येवान्यात्कः प्राण्याद्यदेष आत्मा आनन्दो न स्यादिति' मत्वा श्रुतिस्मृतीतिहासपुराणप्रतिपादितरहस्याधिगतिसोपानभूतं, विविधानर्थजातसागरमग्नावलम्बनमिव, सिद्धिजलाशयावतरणमिव धर्मध्वजस्थितिस्थानमिव, सर्वविद्यातीर्थमिव, आचाराणामाकरमिव, मङ्गलानामायतनमिवास्थानं परिभूतेरात्मबोधोदयशैलायमानमथेदं प्रकाश्यते श्रीमन्माहेश्वरं तन्त्रम् । परिज्ञातमेव तत्र भवतां भवतां अनन्तसंख्याकानां तन्त्राणां बहूनां करालकलिकालकवलीकृतत्वमित्यतो यावन्मात्रोपलब्धस्य श्रीमन्माहेश्वरतंत्रोत्तरखण्डीयज्ञानखण्डस्य प्रकाशितस्यैव दर्श्यते किञ्चित्प्रास्ताविकम् । तन्त्राणामनादित्वमपौरुषेयत्वमनन्तत्वं च सात्वतादितन्त्रतद्भूमिकादौ सुस्पष्टं निरूपितमिति पिष्टपेषणमकृत्वैतत्तन्त्रप्रतिपादितविषयमवलम्ब्यैवोच्यते ।

इह सत्स्वपि सद्यःप्रत्ययहेतुषु चतुःषष्टितन्त्रेषु श्रीशङ्करोक्तेषु परमार्थप्रकाशकत्वेनास्यैव तंत्रस्य जीवानां कृते परमोपयोगिताप्रयोजकत्वम् । तद्धि माहेश्वरतन्त्रे पृष्ठे २ । १२७ चोक्तम् । धर्मशास्त्रीयग्रन्थेषु बहुषु स्थलेषु तन्त्रवचनोट्टङ्कनदर्शनादस्ति च धर्मशास्त्रैकवाक्यता तन्त्राणाम् । श्रुत्यादिषु च ( क्षरं प्रधानं, अक्षरात्सम्भवतीह विश्वम् , एतदक्षरं विदित्वास्माल्लोकात्प्रैति गार्गि स ब्राह्मणः, त्वमक्षरं परमं वेदितव्यं, तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् , अक्षरात्परतः परः, अक्षरादपि चोत्तमः इति ) संज्ञितस्य पदार्थत्रितयस्य विनिर्णायकत्वेऽस्य तन्त्रस्य मायान्धकारमुकुलितजीवहृत्कमलकोरकविकाशकत्वेन मिहिरायमाणतयाऽबोधविजृम्भितवादिविप्रतिपत्तिनिरसनपटीयस्त्वाच्छ्रुतिहृदयदिव्यप्रकाशरूपत्वात्स्वस्वरूपव्यवस्थितिहेतुतया तन्त्रान्तरातिशायित्वमपि सम्पद्यते । अस्य तन्त्रमूर्द्धन्यस्याविर्भावद्वारं तु सुधासिन्धौ मणिद्वीपे चिन्तामणिगृहे कल्पवल्लीवृतिपरिवृते विधिहरिहरेश्वरसदाशिवात्मके पर्यङ्के शयानस्याक्षरपुरुषस्य हृदयकमलकर्णिकायां खेलन्ती मृङ्गीवादिशक्तिः सुमङ्गलैवेति निश्चितम् मा० पृ० १२९ । तथा हि—

इदं माहेश्वरं तन्त्रं सर्वतन्त्रोत्तमोत्तमम् ।
सामरस्येच्छया शक्त्या यथाभूतार्थमीरितम् ॥ १ ॥
अक्षरस्यात्मनीभूतस्तन्निशम्य सदाशिवः ।
प्रोक्तवानीश्वरायैतद्यथाश्रुतमनिन्दिते ॥ २ ॥

समाधावीश्वरः प्राह मह्यं देवि यथाश्रुतम् ।
मयापि च तव स्नेहादुच्यते नान्यथा प्रिये ॥ ३ ॥

तन्त्रस्यास्य **माहेश्वरतन्त्रे**ति संज्ञितत्वेऽपि पृ० १२६—

समाधावीश्वरेणोक्तमिदं तन्त्रं यतो मम ।
तस्मान्माहेश्वरं तन्त्रमित्येवं ख्यातिमागतम् ॥ ४ ॥
चतुःषष्ठीनि तन्त्राणि मयैवोक्तानि पार्वति ।

इति शिववाक्यमेव प्रमाणम् ।

चतुःषष्टितन्त्राणां मोहोच्चाटाद्यर्थानां वक्ता यः श्रीशिवः स एवास्य तन्त्रराजस्य श्रोता न तु कर्तेति ज्ञातं भवति । अन्यच्च —अखिलपुराणेतिहासब्रह्मसूत्रादिप्रकाशनानन्तरमेकदा **'अक्षरात्परतः परः'** इति श्रुतेरर्थं चिन्तयन्बादरायणो भगवान्**परतः** इतिपदमक्षरेतिपदस्य विशेषणमुत यथाश्रुतमेवार्थोऽस्या इति सन्देहविनिवृत्तये दुश्चरं तपश्चचार, तद्यथा—

अक्षरान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।
इत्येवं श्रूयते वेदे बहुधापि विचारिते ॥ ४४ ॥
गोलोकवासी भगवानक्षरात्पर उच्यते ।
तस्मादपि परः कोऽसौ श्रुतिभिर्गीयते सदा ॥ ९६ ॥
उद्दिष्टो वेदवचनैर्विशेषं ज्ञायते कथम् ।
श्रुतेर्वार्थोऽन्यथा बोध्यः **परतस्त्वक्षरा**दिति ॥ ९७ ॥
श्रुत्यर्थे संशयापन्नः व्यासः सत्यवतीसुतः ।
विचारयामास चिरं न प्रपेदे यथातथम् ॥ ९८ ॥
विचारयन्नपि मुनिर्नाप वेदार्थनिश्चयम् ।
वेदो नारायणः साक्षाद्यत्र मुह्यन्ति सूरयः ॥ १ ॥
तदाप महतीमार्ति सतीं हृदयतापिनीम् ।
पुनर्विचारयामास कं व्रजामि करोमि किम् ॥ २ ॥
पृच्छामि कं जगत्यस्मिन्सर्वज्ञं सर्वदर्शनम् ।
अज्ञात्वाऽन्यतमं लोके सन्देहविनिवर्तकम् ॥ ३ ॥
मेरोः कुहरिणीं गत्वा चचार दुश्चरं तपः ॥ इति पुराणसंहितायां ।

ततः प्रसन्नेभ्यः शब्दमूर्तिधरेभ्यो वेदेभ्यः शिवाच्च यमर्थमधिगम्य परां तृप्ति जगाम स एवार्थोऽत्र तन्त्रे सोपपत्तिकं निरूपितः इति पुराण संहितावचनेन ज्ञायते, तथा हि—

पार्वत्यै मे प्रकटितं ज्ञानमेतन्न कुत्रचित् । (१)
पुनस्तवाग्रे कथितं ज्ञात्वा विष्णुकलामिति ॥ (२९।६६)

---

( १ ) श्रीपुराणसंहितायाः पूर्वमेतत्तंत्रस्याविर्भावोऽनेन सूच्यते ।

अत्र तन्त्रे श्रुतिगदितक्षराक्षराक्षरातीतेतित्रिविधपदार्थान्निरूप्य निगमोद्दिष्टस्य ( दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः, अथ यदिदमस्मिन्ब्रह्मपुरे, यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम् , तं चेद्ब्रूयुरस्मिंश्चेदिदं सर्वं ब्रह्मपुरे समाहितमित्यादि, छान्दोग्ये । दिव्ये ब्रह्मपुरे सम्प्रतिष्ठा भवन्ति, इति ब्रह्मोपनिषदि) ब्रह्मपुरदिव्यब्रह्मपुररूपार्थस्य 'विराजति ब्रह्मपुरे, रत्नद्वीपे ब्रह्मपुरे नित्यवृन्दावनस्थितिः'इत्यादिग्रन्थैः पौनःपुन्येन विशेषतः व्याख्यानाच्छ्रुत्यैकवाक्यता प्रतिपादिता । पूज्यपादैः श्रीमच्छङ्कराचार्यैरपि स्वविरचितसौन्दर्यलहर्यामेतत्तन्त्रार्थः समर्थितो भवति, तथा हि—

सुधासिन्धोर्मध्ये सुरविटपवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्क निलयाम्
भजन्ते त्वां धन्याः कतिचनचिदानन्दलहरीम् ॥

स्तुतिरियमत्रतन्त्रे वर्णितकृष्णप्रियादिमनोरथघटिकाऽघटितघटनापटीयस्याः श्री सुमङ्गलायाः, यतः (मा०पृ०१०७) तथा पुराणसंहितायामपि तस्यास्तथैव वर्णनस्योपलम्भात् ।

तच्च—

ध्यायेत्सुमङ्गलां देवीं कृतन्यासो जितेन्द्रियः ।
चित्सुधाब्धौ मणिद्वीपे कल्पवृक्षवनोज्वले ॥ १ ॥
नवरत्नप्रभापूर्णां चिन्तयेत्तत्र भूमिकाम् ।
तन्मध्ये मन्दिरं ध्यायेत्कोटिबालार्कभासुरम् ॥ २ ॥
अनेकयोजनमायातं प्राङ्गणं सुमनोहरम् ।
तन्मध्ये वेदिकां ध्यायेद्रत्नराशिविचित्रिताम् ॥ ३ ॥
पञ्चब्रह्मात्मके मञ्चे शयानं पुरुषं स्मरेत् ।
तदीयहृदयाम्भोजनिविष्टां भ्रमरीमिव ॥ ४ ॥
चिदानन्दमहांभोधिलहरीं ललिताकृतिम् ।
परात्महृदयाम्भोजकर्णिकामध्यवर्तिनीम् ॥ ५ ॥

इत्थं श्रीशङ्करशङ्कराचार्ययोर्हृदयनिह्नुतैकतत्वस्यात्रैव तन्त्रे सम्यक् तात्पर्यावधारणं दृश्यते । एतत्तन्त्रोदितरसमार्गे सुमङ्गलाया अस्वीकारे रसवियोगदलस्थितेरघटमानत्वे उभयलीलाऽननुभवत्वापत्तिमाशङ्कमानाः श्रीमन्नवरङ्गस्वामिनोऽपीममर्थं समर्थयन्तोऽक्षरब्रह्महृदयरूपे पञ्चब्रह्ममये चिन्मञ्चे सदाशिवहृदये चिदानन्दलीलासिन्धोरियं लहरी विलसतीत्थं वदन्ति ।

तथा—

चिदानन्दमयी सा हि सर्वकारणकारणेति ।

किं बहुना सर्वैरपि तत्त्वदर्शिपुरुषधौरेयैरेतत्तन्त्रार्थे साभिनिवेशं प्रवृत्तिर्दर्शिता, किञ्चात्रोट्टङ्कितप्रत्येकपदार्थान् स्वनिष्कलङ्ककुशाग्रबुद्धिनिकषया समरीक्ष्य प्रबुद्धैः **श्रीमन्मिहिरराजाचार्यपूज्यपादैरस्य** सशिष्यगणैस्तु श्रीमद्भावाण्यादावमूल्यत्वालौकिकत्वाद्वितीयत्वप्रतिपादितत्वान्न वक्तव्यमवशिष्यते किञ्चित् ।

'कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ' (बृ०वा०पु०) 'पद्मकल्पे भविष्यति' (मा०तं०) पद्मकल्पमथो शृणु' मनोरथान्तं श्रुतयो यथा ययुः (भा०) इत्यादौ–कमलासनस्यादौ कमले प्रादुर्भावात्सम्भवत्यपि पद्मकल्पेऽनन्तरं विष्णोः श्वेतवराहरूपधारणादस्य श्वेतवाराहकल्पइति नाम ज्ञानसंहितायाः विदितं तथैवास्य कल्पस्य सरस्वतीस्वरूपऋद्धिनिमित्तकत्वात्सारस्वतइति नाम्न्यप्यविरोधादेकस्या हि कृष्णलीलायास्त्रैविध्यात्कल्पस्यापि तथात्वाक्षतत्वेन तादृशभेदस्य कृष्णलीलायामिवैतन्निमित्तकतादृशकल्पस्यापि स्वान्यतमे समावेशात्कल्पभेदगूढतत्त्वज्ञानां स्वमङ्गलपादोदकपावितब्रह्मतीर्थानां **श्रीजीचरणानामनंत**श्रीमुखवाण्यादौ सुसमाहितत्वादेतत्तन्त्रसमालोचनाजनितसमाधानमिहिरं विलोक्य श्रीमाहेश्वरतन्त्रबृहद्वामनपुराणान्तर्गतवेदस्तुत्युक्तकल्पभेदविप्रतिपत्तितिमिरं द्राग्दिशो द्रवति । अत्र दिव्यब्रह्मपुरविहारिणीनामाविर्भावः श्वेतवाराहकल्पे अभूत्, तत्र गोलोकैश्वर्यबहुले गोकुले ( गोलोकैश्वर्यं यत्किंचिद्गोकुले तत्प्रतिष्ठितम् ) द्विपञ्चाशद्दिनाधिकैकादशवर्षानन्तरं प्रवर्तमाने महारासोत्सवे कालमायाकृतब्रह्माण्डस्याकालिकं प्राकृतं प्रलयं विधाय दिव्यब्रह्मपुरैश्वर्यभूते नित्यवृन्दावने ( यद्ब्रह्मपरमैश्वर्यं नित्यवृन्दावनाश्रयम् ) आधिदैविकीषु रात्रिषु रन्त्वा व्यापिवैकुण्ठलीलाया दर्शनं कारयित्वा श्रुतिभ्यो रमणार्थं वरं ददौ भगवान्, ताश्च सारस्वतापरपर्याये पद्मकल्पे गोप्योऽभवंस्ताभिः समं षाण्मासिक्यां रात्राविहैव वृन्दावने रन्त्वा सप्तदिनावधि गोकुले वेदऋचो मनोरथपूर्णतामनयत् । सोऽयं श्वेतवाराहकल्पः सारस्वतो नाम । सरस्वतीनां श्रुतीनां कृते जातस्यास्य सारस्वतत्वं । नेत्थं पाद्मत्वेऽपि क्षतिः । तत्त्वे, (पृ०११२पं०१० । ५० पटलश्लोके ६२ च) मानस्य दर्शनात् । अन्यथा 'पद्मकल्पमथो शृणु' इति श्रीभागवतवचनस्यापि 'कल्पं सारस्वत' मित्यनेन विरोधाद्भागवतवर्णितकथायाः सर्वस्याः एकवाक्यताभङ्गप्रसङ्गान्महदसामञ्जस्यं स्यादिति सम्प्रदायः । इह **लीलात्रैविध्यमित्थम्**—पूर्णब्रह्मसुखैश्वर्यरूपा वृन्दावनीया, गोलोकैश्वर्यरूपा गोकुलीया, वैकुण्ठवैभवरूपा द्वारिकायाः लीलेति । अत्र श्वेतद्वीपच्छायारूपा माथुरीलीलाप्युक्ता भवति । विशेषस्तु श्रीकृष्णलीलारसास्वादचञ्चरीकैः स्वयमेवोह्यः ।

तन्त्रेऽत्र रसोऽयं संयोगदलमास्थाय यदा तिष्ठति तदेयं लीला मायातीते श्री दिव्यब्रह्मपुरे निजधाम्नि साक्षात्कृष्णकृता भवति । वियोगदलमादाय यदा स वर्तते तदा सा आविर्भूय योगमायानिर्मितदिव्यवृन्दावनादौ तदावेशकृतावृहन्निमित्तिका, यदा च रसः संयोगवियोगदलयोः सन्धिं समाप्नोति तदा कालमायाब्रह्माण्डे श्रीकृष्णप्रियाणां

प्रबोधसमयस्यान्तिकप्राप्तत्वाच्छास्त्रानुरूपसद्गुरुसम्प्रदायेन स्वस्वरूपव्यवस्थितिहेतुसाधनगर्भा श्रीनिष्कलङ्ककृतैश्वर्यगर्भा वा भवतीति लीलावैशिष्ट्यं दृष्टं भवति । पुनश्चात्र त्रिधा रहो दर्शितं । प्रथममुपोद्घाते अक्षरस्वरूपनिरूपणानन्तरं ७ पटले निजधामलीलासंवादादि निरूपितं । ततः ९ पटलतः व्रजादिगमनरूपं द्वितीयं । १५ पटले च प्रियाणां दुःखदर्शनरूपावशिष्टकामपूर्त्यर्थं पुनः कालमायाविर्भावं निरूप्य साधनैर्निजधामप्राप्तिमुदीर्य **'एवं कृष्णप्रियासौधस्थितिरुक्ता तवानघे'** इत्यतः **'लीलासमयभेदार्थमेवं जानीहि पार्वति'** इत्यन्तमात्मस्वरूपलाभात्मकं तृतीयं रहोऽपि सोपपत्तिकमुपसंहृतम् । तद्भगवत्प्रियाप्रबोधसाधनीभूतस्यास्य खलु श्रीमन्माहेश्वरतन्त्रस्य बौद्धशाक्तशैववैष्णवादितन्त्रमूर्धन्यतया श्रीमहाविष्ण्वादिजननीपराशक्तिहेतुकपरमशिवसन्निकटप्रथमाविर्भावत्वेन शिवसमाधिसमागतेश्वराविर्भावितत्वशिवश्रोतृकत्वोभयत्वे सति चतुःषष्टितन्त्रश्रवणजातखेदनिजप्रियोमासान्त्वनप्रकाशितयथाश्रुतार्थशङ्करहृदयसर्वस्वरूपत्वात्समेषां सत्साम्प्रदायिकानां प्रमाणराजत्वम् ।

अत्र विशेषता तु एतत्तन्त्रोक्ततृतीयलीलायां २८ कलावागतायां जीवाधिकारित्वश्रवणात्करालकलिकालान्तःपातिनामस्माकमपि पुरुषोत्तमपादसरोजानुरागिणां द्वापर इव परतःपरलीलानुभवयोग्यतासम्पादनसौकर्यावाहकत्वात्तन्त्रस्यास्य नितरामुपयोगित्वम् (पृ० १२४)।

तदेतदद्ययावदमुद्रितं **श्रीमन्माहेश्वरं तन्त्रं श्रीजयकृष्णदासहरिदासगुप्तश्रेष्ठिमहोदयैः** स्वीयमुद्रणालये प्रकाश्य नितरामानन्दसन्दोहोऽजनि विदुषां पुरत इति दिनानुदिनमेतादृशकृत्यसम्पादनाय दृढसङ्कल्पैर्भूयतामेतैरिति शुभाशंसनं राजतामिति ।

मनुष्यस्वभावसुलभप्रमादतः सीसकाक्षरसंयोजनदोषतश्च समुपजातस्खलनजातं सुधीभिः स्वयमेव संशोधनीयमित्यलमनल्पजल्पनेनेति—

सं० १९९६
फा० कृ० ८ रवौ
श्रीसूर्यपुर्यां (सूरत)

विदुषां विधेयः
**झोपाह्वश्यामसुन्दरशर्म्मा**
न्यायवेदान्ताचार्यः

॥ अपौरुषेयम् ॥

( नारदपञ्चरात्रान्तर्गतम् )

# श्रीमाहेश्वरतन्त्रम् ।

श्रीकृष्णाय नमः ।

श्रीपार्वत्युवाच ।

देवदेव महादेव करुणार्णव शङ्कर ।
हर शम्भो शिव मृड पशुनाथ नमोऽस्तुते ॥ १ ॥
नमस्ते सर्वदेवानां दैवताय परात्मने ।
पिनाकिने नमस्तुभ्यं गङ्गाधर नमोऽस्तुते ॥ २ ॥
भूतिभूषितदेहाय भक्तानामभयङ्कर ।
कर्पूरविशदाभाय त्रिनेत्राय नमोऽस्तुते ॥ ३ ॥
नमश्चन्द्रकलाधारिन् नीलकण्ठ महेश्वर ।
महाभुजङ्गमीबद्धजटाजूट शिवप्रद ॥ ४ ॥
अकिञ्चनाय शुद्धाय ह्यणिमाद्यष्टसिद्धये ।
संसारवारिधितरणे प्लवभूतपदाम्बुज ॥ ५ ॥
योगीश्वराय योगाय योगिनां पतये नमः ।
योगिहृत्पद्ममार्त्तण्ड योगानन्दमयाय ते ॥ ६ ॥
सृष्ट्यर्थं ब्रह्मरूपोऽसि पालनार्थं स्वयं हरिः ।
रुद्रोऽस्यंताय देवेश नमस्त्रितयरूपिणे ॥ ७ ॥
नमो वेदान्तवेद्याय नित्यानन्दमयाय ते ।
निरञ्जनाय शुद्धाय सच्चिदानन्दचेतसे ॥ ८ ॥
निर्मलाय निराशाय निरीशायाखिलात्मने ।
अणोरणीयसे तुभ्यं महतोऽपि महीयसे ॥ ९ ॥

दिक्कालाद्यनवच्छिन्ननित्यचिन्मात्रमूर्त्तये ।
नमस्ते सर्वलोकैकपालकायार्त्तिनाशिने ॥ १० ॥
ब्रह्म त्वं हरिरुद्रोऽसि हव्यवाट् हुतमित्युत ।
मन्त्रर्त्विक् देवताचासि यज्ञस्त्वं तत्फलात्मकः ॥ ११ ॥
दयां कुरु महादेव प्रसीद परमेश्वर ।
त्वयि प्रसन्ने लोकानां फलन्ते कामपादपाः ॥ १२ ॥
त्वयाहं दीननाथेन शरीरार्द्धे निरूपिता ।
कृतकृत्यास्मि तेनाहं किमन्यदवशेषितम् ॥ १३ ॥
तस्मात्संप्रष्टुमिच्छामि रहस्यं किञ्चिदुत्तमम् ।
यद्यहं ते प्रियतमा ब्रूहि नाथ ! तदाखिलम् ॥ १४ ॥
त्वया प्रोक्तानि तन्त्राणि चतुःषष्टिमितानि भोः ।
न तेषु तत्वविज्ञानं प्रकटीकृतमीश्वर ॥ १५ ॥
तत्प्रकाशय देवेश प्रवक्तुं यदि मन्यसे ॥ १६ ॥

शिव उवाच ।

नैतज्ज्ञानं वरारोहे वक्तुं योग्यं वरानने ।
राज्यं देयं शिरो देयं देयं सर्वस्वमप्युत ।
न देयं ब्रह्मविज्ञानं सत्यं सत्यं शुचिस्मिते ॥ १७ ॥
ब्रह्महत्यासहस्राणि कृत्वा यत्पापमाप्नुयात् ।
तत्पापं लभते देवि परमार्थप्रकाशनात् ॥ १८ ॥
बालहत्यासहस्राणि स्त्रीहत्यायुतमेव च ।
गवां लक्षवधात्पापं तथा विश्वासघातकः ॥ १९ ॥
मित्रद्रोहाद्गुरुद्रोहात्साधुद्रोहाच्च यद्भवेत् ।
तत्पापं लभते देवि परमार्थप्रकाशनात् ॥ २० ॥
तस्मात्तु गोपयेद्विद्वान् जननीजारगर्भवत् ।
भक्तासि त्वं प्रियतमा तस्मात्तेऽहं वदामि भोः ॥ २१ ॥
ज्ञानं तत्तु विजानीयात् येनात्मा भासते स्फुटः ।

अज्ञानेनावृतो नित्यं मोहरूपेण नित्यदा ॥ २२ ॥
तावत्संसारभावः स्याद्यावदज्ञानमुल्लसेत् ।
तावन्मोहो भ्रमस्तावत्तावदेव भयं भवेत् ॥ २३ ॥
अहं ममेत्यसद्भावो विस्मृतिर्दुःखदर्शनम् ।
नानाधर्मानुरागश्च कर्मणां च फलैषिणा ॥ २४ ॥
बन्धमोक्षविभागश्च जडदेहाद्यहंकृतिः ।
तावदीश्वरभावः स्यात्पाषाणप्रतिमादिषु ॥ २५ ॥
जलादौ तीर्थभावश्च यावदज्ञानमुल्लसेत् ।
उदिते तु परिज्ञाने नाऽयं लोको न कल्पना ॥ २६ ॥
न त्वं नाहं न वै किञ्चिन्निवृत्ते मोहविभ्रमे ।
स्वयमेवात्मनात्मानमात्मन्यात्माभिपद्यते ॥ २७ ॥
तदा सुखसमुद्रस्य स्वरूपनिरतो भवेत् ।
लयश्चात्यन्तिको देवि कदाचिद्वा भविष्यति ॥ २८ ॥
सदेवात्माक्षरः साक्षादेक एवावशिष्यते ।
स शिवो विष्णुरेवेन्द्रः स एवामरदानवाः ॥ २९ ॥
स एव यक्षरक्षांसि सिद्धचारणकिन्नराः ।
सनकाद्याश्च मुनयो ब्रह्मपुत्राश्च मानसाः ॥ ३० ॥
पशवः पक्षिणश्चैव पर्वतास्तृणवीरुधः ।
स एवेदं जगत्सर्वं स्थूलसूक्ष्ममयं च यत् ॥ ३१ ॥
अज्ञानाद्रजतं भाति शुक्तिकायां यथा प्रिये ।
ज्ञानात्तद्रजतं देवि तस्यामेव विलीयते ॥ ३२ ॥
तथाक्षरे परे ब्रह्मण्याभाति सकलं जगत् ।
मोहेन केनचिद्देवि मोहनाशे तु शाङ्करि ॥ ३३ ॥
अवशिष्यते परं ब्रह्म साक्षादक्षरमव्ययम् ।
न त्वं नाहं तदा विष्णुर्लक्ष्मीर्ब्रह्मासरस्वती ॥ ३४ ॥
नेश्वरो न शिवश्चापि यथापूर्वं भविष्यति ।
मृदुद्भवानि कार्याणि मृच्छेषाणि यथाप्रिये ॥ ३५ ॥

तथैवाखिललोकोयं ब्रह्मभूतो भविष्यति ।
यथा वायुवशाद्देवि समुद्रे तरलोर्मयः ।
प्रादुर्भवन्ति देवेशि तस्मिन् शान्ते तु पूर्ववत् ॥ ३६ ॥
तथा विस्मारितज्ञानान्मोहाद्भ्रान्तं चराचरम् ।
चतुर्विंशतितत्त्वोत्थं सत्यमित्येव रूपितम् ॥ ३७ ॥
तत्र जाता इमे लोकाश्चतुर्दश महेश्वरि ।
अधः सप्त तथा चोर्ध्वमेवं संख्याश्चतुर्दश ॥ ३८ ॥
अतलं वितलं चैवं सुतलं च तलातलम् ।
रसातलं च पातालं भूर्भुवः स्वस्तथोपरि ॥ ३९ ॥
महर्जनस्तप इति सत्यं वैकुण्ठ इत्यपि ।
शिवलोको देवलोकस्तथाऽवान्तर्गता अपि ॥ ४० ॥
मोहशान्तौ भविष्यन्ति सर्वे ब्रह्ममया इमे ।
यावत्सर्पमयी भ्रान्ती रज्जौ तावद्भयं प्रिये ॥ ४१ ॥
रज्जुत्वेन तु विज्ञाता भयं नोद्वहते पुनः ।
अप्रपञ्चे प्रपञ्चोऽयं मोहादुन्मीलति स्फुटः ॥ ४२ ॥
तावद्भयप्रदोज्ञानं यावन्मोहं न विन्दते ।
द्विधा त्रिधा पञ्चधा च चतुर्विंशतिधा पुनः ॥ ४३ ॥
एकधा च पुनस्त्रेधा बहुधा च पुनः स्वयम् ।
विस्तीर्णः स तु मोहोऽयं आवृत्य परमेश्वरम् ॥ ४४ ॥
कालमायांशयोगेन ब्रह्माण्डमसृजत्प्रभुः ।
कोटिब्रह्माण्डलक्षाणां स निर्माताक्षरो विभुः ॥ ४५ ॥
न तस्येच्छा न कर्त्तव्या निर्गुणः प्रकृतेः परः ।
तथापि बालवत् क्रीडन् कोटिब्रह्माण्डसंहतीः ॥ ४६ ॥
सृजते संहरत्येषः कटाक्षाक्षेपमात्रतः ।
चिन्मात्रः परमः शुद्धः कूटस्थः पुरुषः परः ॥ ४७ ॥
विराट् तस्य वपुः स्थूलं पञ्चधा तु समुद्भवम् ।
पातालं पादमूलेऽस्य पार्ष्णिदेशे रसातलम् ॥ ४८ ॥

गुल्फे महातलं तस्य जङ्घयोश्च तलातलम् ।
ज्योतींष्यस्योरःस्थले च ग्रीवायां च महस्तथा ॥ ४९ ॥
वदने जनलोकोऽस्य तपोलोको ललाटके ।
सत्यलोको ब्रह्मरन्ध्रे बाह्वोरिन्द्रादयः सुराः ॥ ५० ॥
दिशः कर्णप्रदेशस्य शब्दस्तच्छ्रोत्रमध्यगः ।
नासयोरस्य नासत्यौ मुखे वह्निः समाश्रितः ॥ ५१ ॥
सूर्योऽस्य चक्षुंषि गतः पक्ष्माणि ह्यहनीशितुः ।
दंष्ट्रायां यमस्तस्य हास्ये माया महेश्वरि ॥ ५२ ॥
उत्तरोष्ठे स्थिता लज्जा लोभः स्यादधरोष्ठके ।
स्तनयोरस्य वै धर्मः पृष्ठेऽधर्मः समाश्रितः ॥ ५३ ॥
कुक्षिष्वस्य समुद्रा वै पर्वता ह्यस्थिसन्धिषु ।
आपगा नाडिदेशस्था वृक्षा रोमपथि स्थिताः ॥ ५४ ॥
मेघाः केशेषु हृदये चन्द्रमाः परिकीर्तिताः (तः) ।
इदं स्थूलशरीरं तु ब्रह्मणः परमात्मनः ॥ ५५ ॥
इयत्तया परिच्छेद्यं अन्तपारविवर्जितम् ।
लिङ्गं नारायणस्तस्य ह्यक्षरस्य चिदात्मनः ॥ ५६ ॥
हिरण्यगर्भं जगदीशितारं नारायणं यं प्रवदन्ति सन्तः ।
सर्वस्य धातारमनन्तमाद्यं प्रधानपुंसोरपि हेतुमीशम् ॥ ५७ ॥
तं सर्वकालावयवं पुराणं परात्परं योगिभिरीड्यपादम् ।
ब्रह्मेशविष्णुप्रमुखैकहेतुं यतः प्रवृत्तो निगमस्य पन्थाः ॥ ५८ ॥
तं देवदेवं जगतां शरण्यं नारायणं यस्य वदन्ति लिङ्गम् ।
यावन्न लिङ्गं प्रलयं प्रयाति स्थूलं वपुश्चापि न शान्तिमेति ॥५९॥
ततः परं कारणमेव तस्य वपुः परस्यात्मन एव मोहः ।
यावद्विमोहः प्रशमं न याति न लिङ्गमुत्सीदति कार्यबद्धम् ॥ ६० ॥
न कारणं तावदुपैति शान्तिं चराचरस्यापि च बीजभूतम् ।
यावन्महाकारणमंबिके तत् न शान्तिमायाति च बीजबीजम् ॥६१॥
गुह्याद्गुह्यतरं शास्त्रमिदमुक्तं तवानघे ।

न कस्याप्यग्रतो वाच्यं सत्यं सत्यं प्रियंवदे ॥ ६२ ॥
न पद्मायै हरिः प्राह प्रार्थितोऽपि पुनः पुनः ।
तन्मयात्र तव स्नेहात्प्रकटीकृतमुच्चकैः ॥ ६३ ॥
न गुह्यायापि पुत्राय गणराजाय नन्दिने ।
सुगोपितमिदं भद्रे तव स्नेहादुदीरितम् ॥ ६४ ॥
तस्माद्गोप्यतरं भद्रे वराङ्गमिव सर्वतः ।
इतीदं ते समाख्यातं किमन्यत्प्रष्टुमिच्छसि ॥ ६५ ॥

इति श्रीपञ्चरात्रे माहेश्वरतन्त्रे ज्ञानखण्डे शिव-
पार्वतीसंवादे प्रथमं पटलम् ॥ १ ॥

---

श्रीपार्वत्युवाच ।

भगवन्देवदेवेश लोकनाथ जगत्प्रभो ।
धन्यास्म्यनुगृहीतास्मि सफलं जीवितं मम ॥ १ ॥
वाक्यपीयूषवर्षेण शीतलीकृतमानसा ।
न जानामि परं श्रेयस्तत्वज्ञानकथादृते ॥ २ ॥
किमायुषा च दीर्घेण पाषाणस्येव दुर्मतेः ।
क्षणं वै यस्यनो लग्नं चेतो वा तत्त्वचिन्तने ॥ ३ ॥
यज्ञदानतपस्तीर्थव्रतानि नियमा यमाः ।
न तुलामभिगच्छन्ति स्वात्मतत्वैकचिन्तया ॥ ४ ॥
आत्मतत्वैकशुद्ध्यर्था (र्थं) यज्ञादीनामनुष्ठितिः ।
शुद्धे मनसि तत्वस्य स्फुरणं भवति प्रिय ॥ ५ ॥
तदेव यदि वा लब्धमनायासेन कुत्रचित् ।
दैवाद्वा गुरुतोषाद्वा साधनैर्वापि शङ्कर ॥ ६ ॥
किन्तु तस्यावशिष्टं वा साधनं स्वात्मदं परं ।
तस्मान्महत्तरमिदं सर्वतस्तत्त्वचिन्तनम् ॥ ७ ॥
श्रुतं मया महेशान पुनर्ब्रूहि यथातथम् ।

प्रष्टव्यं बहुधा भाति तथाप्येकं वदेश्वर ॥ ८ ॥
क्रमयोगेन तच्चापि पुनः पृच्छे कृपानिधे ।
पश्चायै हरिणा नोक्तं यद्रहस्यं महदद्भुतम् ।
तदत्र संशयो जातो तद्भवान् छेत्तुमर्हति ॥ ९ ॥
या लक्ष्मीः परमा शक्तिः नित्यं तत्सहचारिणी ।
तत्प्राणवल्लभा साध्वी किं तया पृष्टमुत्तमम् ॥ १० ॥
किं रहस्यं किमध्यात्म्यं यन्नोक्तं हरिणा स्वयम् ।
तदत्र ब्रूहि भगवन् प्रवक्तुं यदि मन्यसे ॥ ११ ॥
न मे त्वत्तः परं किञ्चित् प्राणादप्यधिको भवान् ।
तथाप्यहं तवैवास्मि यन्मेर्द्धं च पुराहितम् ॥ १२ ॥
न त्वया तद्रहः कार्यं तेन गुप्तमिति प्रभो ।
इत्युक्त्वा शिवपादाब्जप्रणताभूत्पुनः पुनः ॥ १३ ॥

शिव उवाच ।

अहो धन्यासि धन्यासि धन्यासि भुवनत्रये ।
न त्वया सदृशीं पश्येत्प्रेयसीं प्राणवल्लभाम् ॥ १४ ॥
त्वद्वागमृततृप्तोऽहं प्रजल्पामि शृणुष्व तत् ।
एकदा खलु वैकुण्ठे विष्णुरेकान्तसंस्थितः ॥ १५ ॥
सन्नियम्येन्द्रियगणं मनसा बुद्धिसारथिः ।
किञ्चिद्दध्यौ महातेजाः प्रमोदभरनिर्वृतः ॥ १६ ॥
गलद्बाष्पांबुपूर्णाक्षः पुलकाङ्कितविग्रहः ।
स्तिमितोद इवाम्भोधिः स्मृत्वा लीलारसाम्बुधिम् ॥ १७ ॥
प्राणेन्द्रियमनश्चेष्टा निमग्ना ध्यानवर्त्मनि ।
अन्तःप्रमोदभरितो बहिः सम्वेदनाक्षमः ॥ १८ ॥
केवलेन शरीरेण स्थित इत्यद्भुतं च यत् ।
क्रीडन्ती सखिभिः सार्द्धं तत्राभूद्भार्गवी हि सा ॥ १९ ॥
ध्यानवर्त्मनि संलीनप्राणेन्द्रियमनोमतिम् ।
प्रध्वस्तबाह्यविज्ञानं दृष्ट्वा विस्मितमानसा ॥ २० ॥

कोऽसौ त्रिलोकगुरुणा ध्यायते स्थिरचेतसा ।
न चास्मादपरं लोके ध्येयं पश्यामि किञ्चन ॥ २१ ॥
ब्रह्मणो वापि रुद्रस्य कारणं दैवतं च यः ।
यस्यावतारचरितं गायन्ते नारदादयः ॥ २२ ॥
यत्पदं प्राप्तुमिच्छन्तो वानप्रस्थं यविव्रतम् ।
चरन्ति ब्राह्मणाः शुद्धा धृतविद्यातपोवृत्ताः ॥ २३ ॥
न यत्समोऽन्यो लोकेऽस्मिन् ह्यधिकस्तु कुतो भवेत् ।
यदुन्मेषाज्जगज्जातं यन्निमेषात्प्रलीयते ॥ २४ ॥
यस्मिन् चित्तं समाधाय योगिनो ज्ञाननिर्मलम् ।
अविद्यां हृदयग्रन्थिमुन्मुंचन्ति गतक्लमाः ॥ २५ ॥
यस्य चेतस्ययं देवो वर्त्ततेऽसौ कृतार्थकः ।
सोऽयं हरिः परानन्दः कस्मिंश्चित्तं दधात्यहो ॥ २६ ॥
इत्येवं सन्दिहाना सा सखीनां पुरतः स्थिता ।
सस्मितं जगदे सख्या कयाचित्परया मुदा ॥ २७ ॥

सख्युवाच ।

अयं त्रिलोकेशगुरुः कमन्यं ध्यातुमर्हति ।
देवासुरनरा नागा गन्धर्वाप्सरसां गणाः ॥ २८ ॥
सिद्धा योगेश्वरा रुद्रा आदित्या वसवस्तथा ।
मरुद्गणाः सोमपाश्च पितरश्चापि चारणाः ॥ २९ ॥
यं पूजयन्ति सततं भक्तिप्रवणचेतसः ।
न तस्मात् त्रिषु लोकेषु ह्यस्य पूज्यतमो भवेत् ॥ ३० ॥
त्वामेकां ध्यायते चित्ते प्रेयसीं प्राणवल्लभां ।
प्रतिव्रतां पतिप्राणां प्राणनाथो रहो गतः ॥ ३१ ॥
धन्यासि कृतकृत्यासि यत्त्वया हरिरीश्वरः ।
शुद्धभावेन सततं सेवया च प्रसादितः ॥ ३२ ॥
क्षणं तद्विरहं सोढुमशक्तो मिलितेक्षणः ।
रहः स्थितः स्वहृदये त्वन्मूर्तिं ध्यायते हरिः ॥ ३३ ॥

तस्माद्धन्याः स्त्रियो लोके याः पतिप्रेमभाजनम् ।
इति हासच्छलेनोक्ता मेने वितथ्यमेव सा ॥ ३४ ॥

रमोवाच ।

अहो सखि यदात्थ त्वं निरर्थकमिदं वचः ।
न मां स्मरति देवेशो ध्यानमार्गे कदाचन ॥ ३५ ॥
मयि विरक्तः सततमकिञ्चनजनप्रियः ।
कथं मां ध्यायते चित्ते विरहं सोढुमक्षमः ॥ ३६ ॥
अकुण्ठितमहाबोधा प्रसादादस्य सन्ततम् ।
जानामि सकले लोके भजतो मां दृढव्रतान् ॥ ३७ ॥
ये चापि त्रिषु लोकेषु यत्र कुत्रापि संस्थिताः ।
भजन्ते तानहं भक्तान् हृदि पश्यामि सन्ततम् ॥ ३८ ॥
तदा कथं तु हरिणा चिते ध्यातापि तं सखि ।
न वेद्मि सर्वभावज्ञा सर्वलोकान्तरास्थिता ॥ ३९ ॥
तस्मान्न मां न च विधिं न रुद्रमपि शङ्करम् ।
नान्यं वा प्राणसदृशं भक्तं वा ध्यायतीश्वरः ॥ ४० ॥
को वेदास्य परं चित्ते निहितः कश्चिदीश्वरः ।
तस्मात्प्रबुध्यमानेऽस्मिन् सर्वं पृच्छाम्यसंशयम् ॥ ४१ ॥
इत्युक्त्वा सखिवर्गेण कुतूहलसमन्विता ।
पुरः तस्थौ परेशस्य प्रबद्धकरसम्पुटा ॥ ४२ ॥
तावदेव हरिः साक्षान्मुक्तध्यानो ददर्श, तां ।
बद्धहस्ताञ्जलिपुटां सखीमण्डलमध्यगां ॥ ४३ ॥
विरोचयन्तीं प्रभया दिव्यालङ्कारभूषिताम् ।
मणिकुण्डलनिर्भान्तिकपोलविमलप्रभाम् ॥ ४४ ॥
सुनासां सुदतीं सुभ्रूं चिबुकोद्देशशोभितां ।
कम्बुकण्ठीं हृदि भ्राजन्मणिहारमनोहराम् ॥ ४५ ॥
काञ्चीकलापरुचिरां वलयाङ्गदनूपुरां ।
त्रिलोकीदेवतां साक्षाद्विनयावनतेक्षणाम् ॥ ४६ ॥

दृष्ट्वा प्रबोधमापन्नं हरिं कमललोचनम् ।
शीर्ष्णा स्पृशन्ती चरणं प्रोवाच विनयान्विता ॥ ४७ ॥

रमोवाच ॥

अहो देवेश भगवन् भक्तवत्सल भूधर ।
कृपां कुरु जगन्नाथ सन्देहं विनिवारय ॥ ४८ ॥
त्वमेकः सर्वलोकानां स्रष्टा हर्त्ता च पालकः ।
दैवतं सर्वदेवानां न त्वया न समोऽधिकः ॥ ४९ ॥
किं ध्यायसि रहः स्थित्वा विलीनकरणाशयः ।
तद्ध्यानानन्दसन्दोहपुलकाङ्कतनुर्भृशम् ॥ ५० ॥
अस्मिन् खिद्यति मच्चित्तं त्वत्तोऽप्यपरशङ्कया ।
तं ब्रूहि करुणासिन्धो यथाहं प्रकृतिं व्रजे ॥ ५१ ॥
इत्युक्तो रमया देव्या हरिरात्मा शरीरिणाम् ।
गिरा मधुरया वाचा रमणीं रमयन्निव ॥ ५२ ॥

श्रीभगवानुवाच ।

अहो कल्याणि वचनं वदामि शृणु साम्प्रतम् ।
अहं लोकगुरुः साक्षान्न मे ध्येयोऽस्ति कश्चन ।
अहमात्माखिलाधारो ब्रह्मरुद्रेन्द्रवन्दितः ॥ ५३ ॥
विश्वस्मिन्विततं पश्य मामेव सचराचरे ।
विश्वं मयि ततं पश्य किमन्यज्ज्ञातुमिच्छसि ॥ ५४ ॥
तस्य मे विश्वजीवस्य शक्तिस्त्वं समधर्मिणी ।
आद्याखिलाधारमयी मदानन्दमयी शुभा ॥ ५५ ॥
तां त्वां ब्रह्मादयो देवा ऋषयोऽथ धृतव्रताः ।
इन्द्रादयस्तु दिक्पाला मुनयो नारदादयः ॥ ५६ ॥
भजन्तोऽपि न ते सुभ्रु प्रसादकणिकास्पृशः ।
सा त्वं मे हृदये लीना परमानन्दरूपिणी ॥ ५७ ॥
यदा त्वां नैव पश्यामि जगदान्ध्यं विभाति मे ।
दृष्टायां त्वयि देवेशि सम्यक् पश्याम्यहं पुनः ॥ ५८ ॥

त्वं गता सखिभिः सार्धं पुष्पावचयहेतवे ।
तावत्ते विरहं सोढुमशक्तोऽहं वरानने ॥ ५९ ॥
त्वच्चित्तो रहसि स्थित्वा त्वत्प्राणस्त्वन्मनाः प्रिये ।
त्वामेव हृदये ध्यायन्निमीलितविलोचनः ॥ ६० ॥
ललने ललितं रूपं त्वदीयं सुरदुर्लभं ।
ध्यायामि ध्यानयोगेन तावत्त्वं समुपागता ॥ ६१ ॥
इत्येवं ते मया प्रोक्तं सत्यं जानीहि सुव्रते ।

श्रीलक्ष्मीरुवाच

देवेश त्वत्प्रसादेन सर्वेषां हृदि चेष्टितम् ।
जानामि सकलं नाथ यथाकर्म यथारुचि ॥ ६२ ॥
अहं हृदि त्वया ध्याता विरहेणापि माधव ।
त्वय्येव निवसाम्येव त्वदन्तःकरणैक्षिणी ॥ ६३ ॥
अहो चित्रमिदं भाति त्वदन्तःस्थाप्यहं प्रभो ।
न जानामि त्वदन्तःस्थं आत्मानमिवसन्मतिः ॥ ६४ ॥
न प्रतारयितुं योग्या भक्ता तेतीव वल्लभा ।
भक्तप्रतारकं लोके कथमन्यो भजिष्यते ॥ ६५ ॥
त्रिलोक्यां यदि वा कंश्चित् भक्तं ध्यायसि दुर्गतं ।
त्वदिच्छयैव तद्दुःखं सर्वं विलयमेति च ॥ ६६ ॥
तस्मात्त्वदन्यो वै कश्चिदीश्वरस्त्वनुमीयते ।
तं वै वदस्व देवेश यद्यहं तव वल्लभा ॥ ६७ ॥
न चान्यो मे प्रियतमो नेश्वरो वा भवत्परः ।
परं वेदितुमिच्छामि कौतुकेन समन्विता ॥ ६८ ॥

विष्णुरुवाच ।

न कौतुकं त्वया कार्यं मदुक्त्या निर्वृतिं व्रज ।
न चाग्रहं प्रकुर्वन्ति विद्वांसः साधवो जनाः ॥ ६९ ॥
देव्याग्रहवतां पुंसां न धर्मार्थौ न कामना ।
प्रसिध्यन्ति कदाचिद्वा बुद्धेः फलमनाग्रहः ॥ ७० ॥

प्रार्थितं तु शिरो देयं पशुद्रविणसम्पदः ।
राज्यं कोशो मही दुर्गं तथान्यदपि सुन्दरि ॥ ७१ ॥
धनैः प्राणैः शरीरैश्च त्यक्षङ्गिर्नोपकुर्वते ।
ते यास्यन्ति स्वयं त्यक्त्वा कालवेगेन कर्षिताः ॥७२॥
याचकाशा हता येन हतं तेन चराचरम् ।
तस्मात्प्राणादिकं सर्वं याचते देयमेव हि ॥ ७३ ॥
अदेयं तु परं तत्वं लोकातीतं यतो हि तत् ।
तस्माद्दुराग्रहं त्यक्त्वा प्रसन्नेनान्तरात्मना ॥ ७४ ॥
वर्तितव्यं त्वया भद्रे मत्प्रसादपरीप्सया ।
इत्युक्ता सा तदा लक्ष्मीर्विष्णुना प्रभविष्णुना ।
ईषत्कोपसमाविष्टा कषायीभूतलोचना ॥ ७५ ॥
आत्मानमात्मना धृत्वा प्रोवाच वचनं पुनः ।
स्त्रीपुंसोर्देहभागाभ्यामेकमेव वपुः स्मृतम् ॥ ७६ ॥
कथं पश्यसि भेदेन मामेकतनुरूपिणीम् ।
पुरातनैश्च कविभिर्दाम्पत्ये प्रेम रूपितम् ॥ ७७ ॥
तन्नाशितं त्वयैकेन प्रेमरीतिविदापि भोः ।
पत्युः प्रेमबहिर्भूतां धिक् स्त्रियं विमतां गृहे ।
पतिश्चापि शठस्तस्या यः साध्वीमप्युपेक्षते ॥ ७८ ॥
तस्माद्देवाल्पपुण्याहं कथं प्राप्स्यामि चेप्सितं ।
आप्रसादं च भवतः करिष्ये तप उल्बणं ॥ ७९ ॥
येन प्रसन्नो भगवान् उपदेश्यति तत्पदं ।
इत्युक्त्वा भगवत्पादं प्रणम्य च मुहुर्मुहुः ।
प्रदक्षिणीकृत्य ययौ वैकुण्ठात्तपसे रमा ॥ ८० ॥
सामभिर्विविधैश्चापि वचनैश्च नयान्वितैः ।
निवार्यमाणापि रमा न न्यवर्तत निश्चयात् ॥ ८१ ॥

इति श्रीनारदपञ्चरात्रे माहेश्वरतन्त्रे ज्ञानखण्डे शिवोमासंवादे द्वितीयं पटलम् ॥ २ ॥

# अथ तृतीयपटलम्।

पार्वत्युवाच ॥

भगवन् श्रोतुमिच्छामि परं कौतूहलं हि मे।
रमया परया साध्व्या प्रार्थितोपि पुनः पुनः ॥ १ ॥
नोक्तवान्परमं तत्त्वं तदर्थं तपसे गता।
महाश्चर्यतमं देव तन्मे व्याख्यातुमर्हसि ॥ २ ॥

शिव उवाच ॥

शृणु सुन्दरि वक्ष्यामि तव स्नेहादशेषतः।
अवाच्यमन्यथा देवि कोटिकल्पशतैरपि ॥ ३ ॥
प्रार्थितोपि यदा विष्णुर्नोक्तवान् स्वहृदि स्थितम्।
श्रवणेच्छाविघातेन विरहाग्निविधूतया ॥ ४ ॥
कृतं महत्तपश्चोग्रं सर्वलोकोपतापनम्।
केतुमालं (ले) समासाद्य कृत्वा नियममात्मना ॥ ५ ॥
साध्वी चकार प्रतिमां विष्णोः परमसुन्दराम्।
तत्र पर्यचरत् प्रीत्या गर्हयन्ती स्वकं वपुः ॥ ६ ॥
स्नानेन त्रिषु कालेषु नियमेन दमेन च।
भावशुद्धिं गता साध्वी स्थण्डिले शयने गता ॥ ७ ॥
शीतकाले जले मग्ना ग्रीष्मे पञ्चाग्निसेविनी।
वर्षास्वपि स्थलगता वृष्टिवातसहा स्थिता ॥ ८ ॥
स्त्रीत्वचाञ्चल्यमुत्सृज्य नानालङ्कारसम्पदम्।
भूम्यामशेत सततं चिन्तयन्ती हरिं हृदि ॥ ९ ॥
स्वप्ने ददर्श सततं हरिं कमललोचनम्।
तत्रापि प्रार्थयन्तीदं सोपि नेत्याह विक्लवम् ॥ १० ॥
सुप्त्वा सोत्थाय तत्रैव पुनरुद्बोधमागता।
एवं सा तन्मयीभूतहृदया विवशा भृशम् ॥ ११ ॥
आत्मानं गर्हयामास मनोरथमपश्यति।
यदा मनोरथं नैवं प्राप्ता देवी तपस्विनी।

तदैकपादेन भुवमाक्रम्यात्मनि निर्मला ॥ १२ ॥
निधाय स्वामिनं चित्ते तस्मिन् चित्तं निधाय च ।
एकात्म्यं तु गता साध्वी तताप परमं तपः ॥ १३ ॥
तच्छिखायाः समुद्भूतः सधूमोऽग्निः परिज्वलन् ।
तापयामास निखिलं ब्रह्माण्डं भयविह्वलम् ॥ १४ ॥
देवासुरनरा नागा गन्धर्वाप्सरसस्तथा ।
पिशाचा गुह्यकाः सिद्धा विद्याध्राः खगचारणाः ॥१५॥
तपोमयेन ज्वलता वह्निना दुःसहेन च ।
व्यथिताः शोकसंविग्ना न सुखं लेभिरे क्वचित् ॥१६॥
ततश्चेन्द्रादयो देवा मरुतश्चोष्मपादयः ।
आदित्या वसवो रुद्रा ह्यश्विनौ पितरस्तथा ॥१७॥
ब्रह्माणं शरणं जग्मुः पितामहमनिन्दितम् ।
ददृशुः परमं देवं ब्रह्माणं परमासने ॥१८॥
प्राणायामेन युंजानं शुभ्रकूर्चं चतुर्मुखम् ।
सनकाद्यैः परिवृतं नारदाद्यैरुपासितम् ॥ १९ ॥
मूर्तिमद्भिस्तथा वेदैः पृथक्सिंहासनस्थितैः ।
पुराणैः संहिताभिश्च विद्याभिः परिवेष्टितम् ॥ २० ॥
विचारयन्तमात्मानं परमं तमसः परम् ।
पुण्योत्कर्षेण धर्मेण त्यागेन ज्ञानसम्पदा ॥२१॥
विमर्षेणात्मनश्चापि ब्रह्मचर्येण संयमैः ।
नियमैर्योगधर्मैश्च यत्र क्रीडन्ति सङ्गताः ॥ २२ ॥
दृष्ट्वामरास्ते परमासने स्थितं ब्रह्माणमाद्यं पुरुषं पुरातनम्
प्रणेमुरानन्दजलाकुलेक्षणाः कृष्यत्वचो गद्गदयाब्रुवन् गिरः॥२३॥
नमो नमस्ते जगदेककर्त्रे नमो नमस्ते जगदेकपात्रे ।
नमो नमस्ते जगदेकहर्त्रेरजस्तमःसत्वगुणाय भूम्ने ॥२४॥
अण्डं चतुर्विंशतितत्त्वजातं तस्मिन् भवानेष विरञ्चिनामा ।
जगच्छरण्यो जगदुद्भवस्स्वयं पितामहस्त्वं परिगीयसे बुधैः ॥२५॥

त्वं सर्वसाक्षी जगदन्तरात्मा हिरण्यगर्भो जगदेककर्त्ता।
हर्त्ता तथा पालयितासि देव त्वत्तो न चान्यत्परमस्ति किञ्चित् ॥२६॥
त्वमादिदेवः पुरुषः पुराणः साक्षात् स्वयं ज्योतिरजः परेशः ।
त्वन्मायया मोहितचेतसो ये पश्यन्ति नानात्त्वमहो त्वयीशे ॥२७॥
त्वमाद्यः पुरुषः पूर्णस्त्वमनन्तो निराश्रयः ।
सृजसि त्वं च भूतानि भूतैरेवात्ममायया ॥ २८ ॥
त्वया सृष्टमिदं विश्वं सचराचरमोजसा ।
कथं न पालयस्येतत् ज्वलदाकस्मिकाग्निना ॥ २९ ॥
विनाशमेष्यति जगत् त्वया सृष्टमिदं प्रभो ।
न जानीमो वयं तत्र कारणं तद्विचिन्त्यतां ॥ ३० ॥
कोयं वह्निरपूर्वोयमुत्थितः परितो ज्वलन् ।
तेनोद्विग्नमिदं विश्वं ससुरासुरमानवम् ॥ ३१ ॥
तस्य त्वं शमनोपायं विचारय महामते ।
न चेदद्य भविष्यन्ति लोका भस्मावशेषिताः ॥ ३२ ॥
इति तेषां च गृणतां देवानामातुरं वचः ।
विमृश्य ध्यानयोगेन तदिदं ह्यवाप सः ॥ ३३ ॥
ततः प्रोवाच वचनममरांस्तु पितामहः ।
शृणुध्वममराः सर्वे वचनं मदुदाहृतम् ॥ ३४ ॥
तपस्यति रमा देवी साक्षात्पत्यावमानिता ।
किं त्वं ध्यायसि देवेश परं तत्त्वं भवत्परम् ॥
तद्वदस्वेति चाप्युक्तस्तथा नोवाच वै हरिः ॥ ३५ ॥
ततो निर्बन्धनिर्विण्णा रमा देवी रुषान्विता ।
केतुमालं समासाद्य तपो दारुणमाश्रिता ॥ ३६ ॥
सा तपो लोकभयदं दारुणं विष्णुवल्लभा ।
करोति तद्भालदेशादुत्थितोग्निस्तपोमयः ॥ ३७ ॥
तेन लोकाः सुसन्तप्ता दग्धप्राया विचेतसः ।
नाशमेष्यन्त्यसन्देहो यदि सा न तपस्त्यजेत् ॥ ३८

तस्माद्वैकुण्ठनिलयं हरेर्गत्वा दिवौकसः ।
विष्णुं प्रसादयिष्यामः सरुद्राः सर्व एव हि ॥ ३९ ॥
एवं निश्चित्य ते सर्वे मम धाम समाययुः ।
मामस्तुवन् गिरा माध्व्या प्रबद्धकरसम्पुटाः ॥ ४० ॥
मयापि सत्कृता देवि सेन्द्रा ब्रह्मपुरोगमाः ।
दृष्ट्या सम्भाव्य देवेशं उपगुह्य पितामहम् ॥ ४१ ॥
नत्वा बृहस्पतिं देवि यथा योग्यं तथापरान् ।
निषीदध्वं निषीदध्वमित्युक्तास्ते मयामराः ॥ ४२ ॥
निषेदुर्म्लानवदनाः सज्वरास्ते दिवौकसः ।
अपि स्वित् कुशलं देवा भवतामनुवर्तते ॥ ४३ ॥
स्वागतं भो सुराः सर्वे यूयं मे चातिवल्लभाः ।
दृष्टो मदीयो लोकोयमदृष्टो मत्पराङ्मुखैः ॥ ४४ ॥
वनेषूपवनेष्वेव रमध्वमिह चेत्स्पृहा ।
शृण्वन्तु रुचिरालापान् शुकसारसपक्षिणाम् ॥ ४५ ॥
जिघ्रन्तु परमामोदमोहितानेकषट्पदान् ।
लतानामतिदिव्यानां सर्वर्तुकुसुमाकरान् ॥ ४६ ॥
महामरकतक्लृप्तस्वर्णवेदिषु निर्भरम् ।
गङ्गानिलसुखस्पर्शाः परिक्रीडन्तु चामराः ॥ ४७ ॥
नदन्मत्तमरालासु सुधापूर्णासु नित्यशः ।
खेलन्तु सस्त्रियः सर्वे दीर्घिकासु गतक्लमाः ॥ ४८ ॥
यद्यद्वा मनसोभीष्टं तत्कुरुध्वमतन्द्रिताः ।
किमर्थमिह सम्प्राप्ता ब्रह्मोपेन्द्रपुरोगमाः ॥ ४९ ॥
निवेदयध्वं कर्त्तव्यं यदि चेदस्ति किञ्चन ।
इत्येवं ते मया प्रोक्ता मामवोचन् दिवौकसः ॥ ५० ॥
भगवन् करुणासिन्धो भक्तवत्सल धूर्जटे ।
त्वया सञ्चिन्त्यमानानां कुशलेषु च का कथा ॥ ५१ ॥
तदेवाकुशलं विदुमस्त्वत्पादस्मरणच्युतिः ।

जानीमः पूर्णमात्मानं अद्य तेनुग्रहोदयात् ॥ ५२ ॥
किं ध्यायसि चिरं तात निरुध्य हृदये मनः ।
लब्धानन्द इवाभासि स्वयमात्मापि देहिनाम् ॥ ५३ ॥
एतदाचक्ष्व नो ब्रह्मन् प्रवक्तुं यदि मन्यसे ।
अहमाकर्ण्य वै तेषां वाचं परमशोभनां ।
मन आह्लादयन्नेषामवोचं परमोक्तिभिः ॥ ५४ ॥
शृणुध्वं त्रिदशाः सर्वे भवद्भिर्यदुदाहृतम् ।
किं ध्यायसि चिरं तात निरुध्य हृदये मनः ॥ ५५ ॥
लब्धानन्द इवाभासि स्वयमात्मापि देहिनां ।
तन्न वाच्यं मया देवा अपि कल्पायुतायुतैः ॥ ५६ ॥
न यान्ति योगिनो योगैर्न यज्ञैस्तपआदिभिः ।
न ज्ञानतीर्थवैराग्यैर्विना साधुनिषेवया ॥ ५७ ॥
मायामात्रमिदं विश्वं वस्तुतो नास्ति किञ्चन ।
भूरादिसप्तलोकाश्च कालेन कवलीकृताः ॥ ५८ ॥
विषयानन्दसन्तुष्टा लोकाः सर्वेपि देवताः ।
न प्राप्नुवन्ति कणिकां नित्यानन्दमहोदधेः ॥ ५९ ॥
वेदे कर्मप्रधानं हि ततः कर्ममयी गतिः ।
कर्मभिर्भ्राम्यमाणा ये तृणानीवाम्भसो रयैः ॥ ६० ॥
न ते विन्दन्ति तत्तत्त्वं कोटिकल्पशतैरपि ।
केचित्स्वर्गपरा लोके यजन्ते ज्ञानदुर्बलाः ॥ ६१ ॥
केचिदष्टाङ्गयोगेन विग्रहीतधियः परे ।
वर्णाश्रमविधानेन तत्तदाचारशालिना ॥ ६२ ॥
केचित्पत्राशनरता वायुभक्षास्तथेतरे ।
केचिद्दिगम्बराः केचित् कृष्णरक्ताम्बराः परे ॥ ६३ ॥
केचिन्मुण्डितमुण्डाश्च फलमूलाशने रताः ।
केचिद्भस्मनि निष्णाता मोक्षमिच्छन्ति दुर्बलाः ॥ ६४ ॥
नैव ते मुक्तिमायान्ति विना तत्त्वावमर्षणात् ।

मायाम्भोधिरयं भाति ह्यसन्नपि सदात्मकः ॥ ६५ ॥
अनेककोटिब्रह्माण्डबुद्बुदाकुलितो भृशम् ।
तत्त्वोर्मिजालजटिलो वासनाजलगह्वरः ॥ ६६ ॥
पापपुण्यतटोन्नद्धो मोहपङ्कप्रपूरितः ।
सदसत्कर्मकमलकैरवानंतमण्डलः ॥ ६७ ॥
अहन्ताशिशुमारेण निरन्तरमुपासितः ।
तृष्णाफेनौघबहुलः कामनातटपादपः ॥ ६८ ॥
कामक्रोधमहालोभगर्तपाषाणदुःखदः ।
परनिन्दापरद्रोहभुजङ्गमभयानकः ॥ ६९ ॥
श्रद्धोरुपद्मिनीयत्र अक्षयो मोहकल्पितः ।
विषयतृडभिक्रान्ताः पतन्त्यस्मिन्ननेकशः ॥ ७० ॥
दृष्ट्वारमत वै कश्चित् सरागं कमलाकरं ।
सेव्यमानोपि नातृप्यत् षट्पाद इव लोलुपः ॥ ७१ ॥
अह्नः क्षयमजानन्वै लोभितात्माजितेन्द्रियः ।
मधुलिट् मधुलोभेन तत्रैव विलयं व्रजेत् ॥ ७२ ॥
यत्र हंसगणास्तूर्णमाघ्राय कमलाकरम् ।
अशाश्वतमिति ज्ञात्वा सुखं नीडेषु शेरते ॥ ७३ ॥
यत्र पङ्केषु निर्मग्ना सीदन्ती गौस्तृषातुरा ।
महात्मना समुद्धृत्य सुधासिन्धौ निवेशिता ॥ ७४ ॥
यत्र खेलन्ति बहुशो मातङ्गाश्च करेणुभिः ।
अतृप्यमानाः सततं कमलामोदलम्पटाः ॥ ७५ ॥
यत्र मत्स्यगणान् बालान् निघ्नन्ति बलवत्तया ।
माकारास्तानपि क्षिप्रं निगृह्णातीह जालिकः ॥ ७६ ॥
शिशुमारभयोद्विग्नाः पिपासामतिवाह्य ते ।
न पिबन्त्यपि पानीयं पद्मिनीछायमाश्रिताः ॥ ७७ ॥
यत्र पान्थो भुजङ्गेन परिदष्टोम्बुलालसः ।
चिकित्सकेन सुज्ञेन रसदानेन बोधितः ॥ ७८ ॥

यत्राभिमानिनी वेश्या सेव्यमानातिनिर्घृणैः ।
उपस्थिता प्रश्नटैर्नित्यसेवनतत्परैः ॥ ७९ ॥
पिपासवो नटान् यान्ति प्रापयन्ति नटीं हि तान् ।
ततः क्रीडन्ति वेगेन स्वच्छन्दं च तदाज्ञया ॥ ८० ॥
यदि सूर्यसहस्राणां प्रकाशं परमोज्वलम् ।
उदेति ज्ञानविज्ञानं तदा शुष्यति नान्यथा ॥ ८१ ॥
उदिते तु परे ज्ञाने नाहं यूयं न किञ्चन ।
न यास्यन्ति परं तत्त्वं मदाद्या अपि देवताः ॥ ८२ ॥
किमुताल्पधियश्चान्ये स्वाप्निका इव जाग्रतम् ।
यन्निर्बन्धसमाविष्टा प्राणेभ्योप्याति वल्लभा ॥ ८३ ॥
नोपदिष्टा दूनचित्ता केतुमाले तपस्यति ।
तस्मान्मदानन्दमूलं नाहं वक्ष्ये कथञ्चन ॥ ८४ ॥
अन्यं निवेद्यतां कृत्यं यदि योग्यं भवेन्मम ।
इत्युक्तास्तेमराः सर्वे वीक्ष्यमाणाः परस्परं ॥ ८५ ॥
परं विस्मयमापन्नाः श्रुत्वा शङ्करभाषितम् ।

देवा ऊचुः ।

देवदेव महादेव जगतां ज्ञानदो गुरुः ॥ ८६ ॥
यदात्थ देव तत्सत्यं विष्णुपत्नी तपस्यति ।
तत्तपो वह्निना विश्वं परितप्तं समन्ततः ॥ ८७ ॥
किमद्य करणीयं वै तच्च शम्भो विचार्यताम् ।

शिव उवाच ।

रमा देवी जगच्छक्तिः प्रकृत्यंशमयी शिवा ।
विष्णोरानन्दलहरी यया भाति जगच्छिवम् ॥ ८८ ॥
सा तपश्चरते तीव्रं जगद्दाहकरं महत् ।
पतिव्रता पतिं त्यक्त्वा नान्यं चापि प्रभाषते ॥ ८९ ॥
न तस्मादन्यसंसाध्या विना स्वपतिमाधवम् ।
तस्माद्विष्णुं व्रजामोद्य सर्वे चापि वयं सह ॥ ९० ॥

गत्वा निवेदयिष्यामो जगतामशिवं च यत् ।
दृष्ट्वास्मानपि मानार्हान् जगद्भङ्गमपीक्ष्य च ॥ ९१ ॥
निषेधयिष्यति रमां तपसोसौ दुरत्ययात् ।
इति मे वाचमाकर्ण्य देवाः सर्वे गतज्वराः ॥ ९२ ॥
अहं चापि च तैः सार्धं गतः प्रियानिकेतनम् ।
यत्र सर्वे घनश्यामाः पीतकौशेयवाससः ॥ ९३ ॥
किरीटिनः कुण्डलिनः शङ्खचक्रगदाधराः ।
तत्र गत्वा जगन्नाथः स्तुतो देवगणैरपि ॥ ९४ ॥
नमो मत्स्यकूर्मादिनानावतारैर्जगद्रक्षणायोद्यतायार्तिहर्त्रे ।
जगद्बन्धवे बन्धहर्त्रे च भर्त्रे जगद्विप्लवोपस्थितौ पालयित्रे ॥९५॥
यदा वेदपन्थास्त्वदीयः पुराणः प्रभज्येत पाखण्डचण्डोग्रवादैः ।
तदा देवदेवेश सत्त्वेन सत्त्वं वपुश्चारु निर्माय रक्षां विधत्से ॥ ९६ ॥
भूम्यम्बुतेजोनिलखात्मकं यत् ब्रह्माण्डमेतत्प्रविशन्निव त्वम् ।
चराचरं जीव इति प्रसिद्धिं गतोसि तस्मान्न भवत्परं यत् ॥ ९७ ॥
रक्षस्व नाथ लोकांस्त्वं तपसोग्रेण यज्ञया ।
दह्यमानान् गतानन्दान् रक्षितासीश्वरो यतः ॥ ९८ ॥
निवर्त्तय परमां साध्वीं तव प्राणाधिकां प्रियां ।
न वै स्त्रियो विरोद्धव्या गृहमेधिभिरन्वहम् ॥ ९९ ॥
यद्गृहे स्त्री विरुद्धा स्याद्यदिवाप्यवमानिता ।
न तद्गृहे सुखं सम्पन्नचारोग्यं प्रजासुखम् ॥ १०० ॥
कथं सुखेन वर्त्तेत विश्वमेतद्भवद्गृहम् ।
त्वयि विरोधमापन्ने गृहिण्या समशीलया ॥ १०१ ॥
तस्माद्विश्वस्य रक्षार्थं सावधानो भव प्रभो ।
इत्यावेद्यामराः सर्वे प्रणम्य जगतां पतिम् ॥ १०२ ॥
बद्धाञ्जलिपुटास्तूष्णीमासन् म्लानमुखाम्बुजाः ॥१०३॥
इति श्रीपञ्चरात्रे माहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे तृतीयं पटलम् ॥ ३ ॥

# अथ चतुर्थं पटलम् ।

शिव उवाच ॥

अथ तेषां वचः श्रुत्वा देवानामतिविक्लवम् ।
प्रहसन्वाचमकिरत् देवानां हृदयङ्गमां ॥ १ ॥

विष्णुरुवाच ।

भो महेश विधे ब्रह्मन् शक्राद्याः शृणुतामराः ।
मम प्राणप्रिया देवी रमा देवी तपस्विनी ॥ २ ॥
कलहान्तारिता जाता केतुमाले तपस्यति ।
तेनोग्रतपसा विश्वं परितप्तं समन्ततः ॥ ३ ॥
न सा सन्तोषमायाति स्वनिश्चितमृते सुराः ।
स्त्रीणां जातिस्वभावोयं कार्कश्यमविवेकिता ॥ ४ ॥
अशौचं निर्दयत्वं च निर्बन्धः साहसं तथा ।
लोभानृतं च कपटं मूर्खत्वमपदे च रुक् ॥ ५ ॥
नष्टं कुलं कुतनयात् नष्टं राज्यं कुमन्त्रिणा ।
ब्राह्मणः शूद्रसेवाभिरनभ्यासात्सरस्वती ॥ ६ ॥
निद्रया नष्टमायुष्यं(१) अनुद्योगात्समृद्धयः ।
गुणा लोभैर्धनं पापैः सुखं नष्टं कुभार्यया ॥ ७ ॥
यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ।
प्रातिकूल्येन नश्येत ग्रीष्मे बीजाङ्कुरा इव ॥ ८ ॥
देवी निर्बन्धमापन्ना विरमेन्न कथञ्चन ।
जगतामसुखं भूरि प्रवृत्तं तन्निवर्तते ॥ ९ ॥
प्रतिक्रियां करिष्यामि यात यूयं मुदान्विताः ।
इति देवा वचः श्रुत्वा परिक्रम्य जनार्दनम् ॥ १० ॥
प्रणम्य पुनरायाताः स्वं स्वं धाम प्रहर्षिताः
ब्रह्मा विष्णुश्च ईशश्च केतुमालं गतास्तथा ॥ ११ ॥

---

(१) अत्र आयुरेवायुष्यम् नत्वायुषे हितमायुष्यम् ।

यत्र सा निश्चलवपुः पदाङ्गुष्ठेन संस्थिता ।
ऊर्ध्वदृष्टिर्निरुद्धान्तःपवना सा मनस्विनी ॥ १२ ॥
स्वभालशिखिविद्योतज्ज्वालाभिर्ग्रसतीव हि ।
ब्रह्माण्डं कवलाकारं कल्पान्तेग्निशिखा यथा ॥ १३ ॥
दृष्ट्वा तां च तथाभूतां त्रयो ब्रह्मादिका वयं ॥१३॥
परमं विस्मयं जग्मुर्देव्याश्चरितमद्भुतम् ॥ १४ ॥
ततस्तन्निकटं गत्वा हरिः प्राह हसन्निव ।
रमे प्राणप्रिये देवि वृथा किं परितप्यसे ॥ १५ ॥
निवृत्तिमेहि तपसो वृथायासफलादिह ।
बह्वायासं चाल्पफलं न कर्माचरणं सताम् ॥ १६ ॥
ध्यानानन्दरसे लीनं तन्मनोवतरत् क्षणात् ।
एवमुक्ते तु हरिणा प्रियां सान्त्वयता भृशम् ॥ १७ ॥
ददर्श प्रियमङ्कस्थं घनश्यामं चतुर्भुजं ।
विरञ्चीशानसहितं वनमालाविभूषितम् ॥ १८ ॥
ननाम दण्डवद्भूमौ कृताञ्जलिपुटा रमा ।
नोवाच वचनं किञ्चित् नोत्थितापि पुना रमा ॥ १९ ॥
हरिस्तत्प्रेम परमं स्वस्मिन् वीक्ष्य सुविस्मितः ।
प्राह देवीं हरिः प्रीत्या शृण्वतो र्विधिरुद्रयोः ॥ २० ॥

विष्णुरुवाच ।

अहो धन्यासि धन्यासि कमले लोकवन्दिते ।
आत्मनोर्धं स्त्रियः साध्व्यः पुंसो धर्मपरायणाः ॥ २१ ॥
स्त्रीसाहाय्येन जेतव्या लोका धर्मपरायणैः ।
अपत्नीकस्य ते सर्वे भवन्ति विफला यतः ॥ २२ ॥
स्त्रीमूलं सर्वधर्माणां तदभावात्कुतश्च ते ।
तैर्विना न भवन्त्येव लोका ज्ञानपथापि वा ॥ २३ ॥
धिक् जीवितं स्त्री रहितस्य लोके जुगुप्सितं धर्मविदां समाजे ।
देवा मुनीन्द्रातिथयोपि यस्य गृहाण्युपेक्षन्त इवाधनं जनाः ॥२४॥

किं धनैर्विभवाकल्पैर्विभवैः किं सुखच्युतैः ।
किं सुखं यस्य नो वेश्मन्युदारा धर्मचारिणी ॥ २५ ॥
दुःशीलं दुर्नयं दुष्टं दरिद्रं जरया प्लुतं ।
पतिं पुष्णाति कुलजा तस्मात्स्त्री तु गरीयसी ॥ २६ ॥
न मित्रं स्त्रीसमं मन्ये न बन्धुं न सहोदरम् ।
यतस्ते पृथगालोच्याः स्त्री तु नैव कदाचन ॥ २७ ॥
सुखे वा यदि वा दुःखे जीविते मरणेऽपि वा ।
न मित्रं स्त्रीसमं क्वापि सत्यं सत्यं प्रियंवदे ॥ २८ ॥
तस्मात्त्वं तु विशेषेण स्त्रीरत्नं मम रोचसे ।
मूर्धन्या पतिदेवानां यतस्त्वं परिगीयसे ॥ २९ ॥
स्त्रीणामपि परो धर्मः पतिशुश्रूषणं च यत् ।
कायेन मनसा वाचा ततोऽन्यन्नास्ति किञ्चन ॥ ३० ॥
या स्त्री पतिव्रता लोके पतिधर्मपरायणा ।
तदुक्तमेव कुर्वाणा सुखमक्षयमश्नुते ॥ ३१ ॥
तस्मादहं ते तपसा परितुष्टोस्मि साम्प्रतम् ।
उत्तिष्ठोत्तिष्ठ भद्रं ते तपसो लोकदुःखदात् ॥ ३२ ॥
व्यतीयुः सप्तकल्पास्ते साधिकाः कोमलां तनुम् ।
ग्लपयन्त्या ह्यनुदिनं नोचितस्ते वृथा श्रमः ॥ ३३ ॥
पुष्पशय्यासु रुचिरं वपुस्ते परिखिद्यते ।
सा कथं चण्डतिग्मांशुं सहते तापवर्षिणम् ॥ ३४ ॥
शीतोष्णवातवर्षाभ्यां परिक्लिष्टा वपुर्लता ।
वेणीभूता मूर्धजास्ते मनो मे खेदयन्ति च ॥ ३५ ॥
मन्दास्मितप्रभोदारं मुखं बिम्बाधरं तव ।
हिमक्लिष्टं न चाभाति हेमन्तकमलं यथा ॥ ३६ ॥
चण्डतिग्मांशुतापेन कपोलौ श्यामलौ तव ।
मुक्तादामश्रिया हीनौ न शोभा ते ( शोभेते ) यथा पुरा ॥३७॥
अनञ्जनं च नयनं भालं काश्मीरवञ्चितम् ।

मुखं ताम्बूलरहितं वीक्षतः कस्य ते सुखम् ॥ ३८ ॥
मा शोषय वपू रम्यं तपसा दुर्द्धरेण वै ।
मूर्ध्ना प्रणम्य ते पादं प्रार्थयामि पुनः पुनः ॥ ३९ ॥
किं ध्यायसि रह इति यत्प्रष्टं कमले त्वया ।
अवाच्यं तत्तु जानीहि अपि कल्पायुतायुतैः ॥ ४० ॥
तथापि कथयिष्यामि कृतस्ते तपसा ह्यहम् ।
साक्षान्न जिह्वया वाच्यं तत्तु देवि कथञ्चन ॥ ४१ ॥
तथापि कथयिष्यामि प्रकारं शृणु सुन्दरि ।
द्वापरान्तेऽष्टाविंशतिमे असुरा नृपरूपिणः ।
वेदमार्गविनाशाय यतिष्यन्ति दुराशयाः ॥ ४२ ॥
स्त्रीगोब्राह्मणसाधूनां धर्मिष्ठानां तपस्विनां ।
वर्णाश्रमाणां सेतूनां स्वस्वधर्मानुवर्त्तिनाम् ॥ ४३ ॥
करिष्यन्ति यदा पीडां तदाहं धर्मगुप्तये ।
वेदधर्मादिरक्षार्थं विनाशाय दुरात्मनाम् ॥ ४४ ॥
ययातिकुलजातस्य यदुराजस्य वेश्मनि ।
वासुदेवो भविष्यामि नाम्ना कृष्णेति विश्रुतः ॥ ४५ ॥
तत्रापि त्वं रुक्मिणीति भविष्यसि वराङ्गना ।
तत्र त्वां केचन नृपा असुरा ज्ञानदुर्लभाः ॥ ४६ ॥
आयास्यान्ते समुद्वोढुं जित्वा तान् समरे खलान् ।
उद्वहिष्यामि भवतीं मच्चितां नात्र संशयः ॥ ४७ ॥
तदा कुलाङ्गनाः पुत्रपतिवन्त्यः पतिव्रताः ।
गास्यन्ति मङ्गलार्थं तु मच्चरित्राणि सुन्दरि ॥ ४८ ॥
उपचारविधानेन तच्छ्रुत्वा हृदयं मम ।
भविष्यति सुखापूर्ण यथाम्भोधिर्विधूदये ॥ ४९ ॥
ईदृक्तादृगितिगिरां न वक्तुं भवति क्षमम् ।
स्वयमेवानुभवति शर्कराक्षीरपानवत् ॥५० ॥
तत्सुखाम्भोनिधेर्देवि कणिकापि कथञ्चन ।

न ब्रह्मादिषु देवेषु वर्ततेऽन्यत्र का कथा ॥ ५१ ॥
नोपदिष्टं तु तद्वेत्ति न शब्दैरुपदिश्यते ।
केवलानुभाकारं वेत्त्येकोनुभवी सदा(१) ॥ ५२ ॥
अनुमानप्रमाणेन ह्यनुमेयं कथञ्चन ।
लक्षणैर्देव देवेशि नान्योपायैः कथञ्चन ॥ ५३ ॥
लक्षणानि तु ते वच्मि शृणु सुन्दरि यत्नतः ।
अन्तः सुखसमुद्वेल्लो बहिः सन्धानविस्मृतिः ॥ ५४ ॥
नेत्रयोरश्रुसंवाहः कम्पः स्वेदोदयस्तथा ।
रोमाञ्चः कण्ठरोधश्च लक्षणानि च वै विदुः ॥ ५५ ॥
इत्येतैर्लक्षणैर्देवि मदन्तःकरणस्थितं ।
(१)सुखं मद्ध्यानयोग्यं यत्तज्ज्ञास्यति केवलं ॥ ५६ ॥
तावत्त्वं तं च समयं परिपालय वल्लभे ।
इत्येतत्ते समाख्यातं सर्वस्वं मे न संशयः ॥ ५७ ॥
श्रुतीनां चापि सर्वासां रहस्यं त्विदमेव हि ।
इदमेव परं ज्ञानमिदमेव परा क्रिया ॥ ५८ ॥
इदमेव परो योग इदमेव परो मखः ।
इदमेव परं ध्येयमिदमेव परा गतिः ॥ ५९ ॥
इदमेव परं ज्ञेयमिदमेव महाधनं ।
इदमेवाखिला सम्पत् सत्यं सत्यं पतिव्रते ॥ ६० ॥
इत्येवं विष्णुना प्रोक्ता रमा देवी पतिव्रता ।
जहौ तापं च ग्रीष्मार्त्ता भूरिवाम्भोदतर्पिता ॥ ६१ ॥
विकसन्नयनाम्भोजा प्रमोदभरविह्वला ।
पपात पादयोर्भर्त्तुः दण्डवत् विमलाशया ॥ ६२ ॥
ब्रह्मणापि मया चापि संस्तुता बहुधा गिरा ।

---

(१) 'मया वक्तुं न योग्यं यत्' इत्यपि पाठः ।

तपसः फलमभ्येत्य कृतार्थोस्मीत्यमन्यत ॥ ६३ ॥
मुमुचुः पुष्पवर्षाणि नेदुर्दुन्दुभयो दिवि ।
जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ६४ ॥
सप्तर्षयः समभ्येत्य तुष्टुवुस्तामनिन्दितां ।
तापः शशाम जगतां सर्वत्रासीत् सुमङ्गलं ॥ ६५ ॥
ववौ वायुः सुखस्पर्शो दिगासीद्विमलप्रभा ।
जलान्यासन्प्रसन्नानि जज्वलुर्वह्नयः शुभाः ॥ ६६ ॥
मनांस्यासन्प्रसन्नानि भूतानां नष्टचेतसां ।
इत्येवं मङ्गले जाते प्रसन्ना दिवि देवताः ।
पृथिव्यां मानवाः सर्वे पाताले पन्नगेश्वराः ॥ ६७ ॥
ब्रह्मलोकं गतो ब्रह्मा अहं कैलासमागतः ।
गृहीत्वा च करे लक्ष्मीं विष्णुः स्वनिलयं प्रति ॥६८॥
इत्येवं ते मयाख्यातं त्वया पृष्टमनिन्दिते ।
तत्वज्ञानं न सुलभं तस्माद्गोप्यतमं प्रिये ॥ ६९ ॥
तत्वज्ञानाधिकारिण्यो विरलाः सन्ति कचन ।
कालेन बहुना देवि तान्परीक्ष्य प्रकाशयेत् ॥ ७० ॥
स्नेहाल्लोभाद्भयाद्वापि योन्यस्मै वक्ति मूढधीः ।
नासौ ज्ञानी भवेद्देवि उदरम्भरिरेव सः ॥ ७१ ॥
सहसंवाससेवाभिस्ताडनैः परुषोक्तिभिः ।
यदा न याति कालुष्यं सोधिकारी मतो मम ॥ ७२ ॥
श्रुत्वा तत्वकथावादं वपू रोमाञ्चसङ्कुलं ।
हर्षाश्रुव्याकुले नेत्रे सोधिकारी मतो मम ॥ ७३ ॥
परापवादविमुखो परस्त्रीधननिस्पृहः ।
अक्रोधी लोभनिर्मुक्तः शान्तः शास्त्रविचक्षणः ॥७४॥
वेदशास्त्रार्थतत्वज्ञः श्रद्धालुर्गतसाध्वसः ।
गुणरागी सदात्यागी विरागी बाह्यवस्तुषु ॥ ७५ ॥

पापभीतो भवेद्द्वेषी विषयादिष्वलोलुपः ।
अन्यैश्चापि शुभैर्देवि लक्षणैश्चापि लक्षितः ॥ ७५ ॥
अधिकारीति विज्ञेयस्तस्मै देयमिदं रहः ।
वेदगुह्यमिदं देवि नान्यथा तु प्रकाशयेत् ॥ ७६ ॥
प्रकाशयन्विमूढात्मा स भवेदापदां पदं इत्यादि ।
न तस्य तत्वसंसिद्धिर्गुरोः शिष्यस्य चाप्यहो ॥ ७७ ॥
तत्वज्ञेनोपदिष्टा ये तत्वज्ञा एव सुन्दरि ।
अनर्हैरुपदिष्टा ये तेऽप्यनर्हा भवन्ति हि ॥ ७८ ॥
अनर्हैरुपदिष्टा ये येनर्हाश्च स्वयं शिवे(१) ।
उभयभ्रंशदोषेण ते यान्ति नरकं प्रिये ॥ ७९ ॥
लोकभ्रंशः कर्मलोपात् अयोग्यत्वात् फलाग्रहः ।
तेषां तमः स्यादतुलं यावच्चन्द्रार्कतारकं ॥ ८० ॥
सुप्तं प्रबोधयेद्बुद्धो ह्यबुद्धस्तु च तं कथं ।
पाषाणं तारयेत्तुम्बी न पाषाणः परस्परं ॥८१ ॥
तस्मादेवं विनिश्चित्य सद्गुरोः शरणं गतः ।
आत्मानं मोहविभ्रान्तं तारयेत्स च बुद्धिमान् ॥ ८२ ॥
इत्येतन्मे समाख्यातं यत्पृष्टोऽहं त्वया प्रिये ।
समासेन महादेवि किमन्यत्प्रष्टुमिच्छसि ॥ ८३ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वतीसंवादे
चतुर्थं पटलम् ॥ ४ ॥

---

( १ ) तेऽनर्हाः स्वयं शिवे इत्यपि पाठः ।

## अथ पञ्चमं पटलम् ।

पार्वत्युवाच ॥

भगवन् लोकनाथेश देव देवेश धूर्जटे ।
इयं कथा महापुण्या कथिता पापनाशिनी ॥ १ ॥
यद्रमायै न च प्राहा भगवन् प्राणवल्लभः ।
साक्षान्मुखेन देवेशाभिनयेन वदिष्यति ॥ २ ॥
तत्तु तत्वं कथयसि साक्षादेव मम प्रभो ।
त्वमेव तादृशो देव दयालुर्नापरः प्रभो ॥ ३ ॥
तत्तत्वज्ञानसामर्थ्याद्भोगाः सर्वेवधीरिताः ।
दिग्वासा जटिलो नन्दी चरस्येकोपि पण्डितः ॥ ४ ॥
त्वं गुरुः सर्वलोकस्य तत्वमार्गोपदेशकः ।
न त्वया सदृशः कश्चित् तत्वज्ञानानुभूतिमान् ॥ ५ ॥
अर्द्धाङ्गदानतो जाने तव प्राणाधिकास्म्यहम् ।
अतो वदसि भो नाथ तत्वं गुह्यतमं च यत् ॥ ६ ॥
न तच्चित्रं त्वयि विभो कृपासिन्धौ महेश्वरे ।
अतस्त्वां प्रष्टुमिच्छामि सन्दिहाना महेश्वर ॥ ७ ॥
यत्त्वयोक्तं पुरा मोहो जगत्कारणरूपकः ।
यथा बीजादुद्भवन्ति पत्रपुष्पफलादयः ॥ ८ ॥
एवं मोहात्समुद्भूतं सदेवासुरमानुषम् ।
अज्ञानप्रभवो मोहो मोहाज्जातं चराचरम् ॥ ९ ॥
स्रजं शुक्तिं समावृत्य यथाज्ञानं स्वशक्तितः ॥
अहिं चरजतं चैव यथा दर्शयते स्फुटम् ॥ १० ॥
तथाक्षरं परं ब्रह्म ह्यज्ञानं मोहकारणम् ।
समावृत्यात्मशक्त्यैव विश्वं सृजति शङ्कर ॥ ११ ॥
इत्युक्तं यत्त्वया देव तत्र मे संशयो महान् ।
अक्षरं यत्त्वया प्रोक्तं निष्प्रपञ्चं निरामयम् ॥

निर्दोषं निर्मलं शुद्धं निरीहं सङ्गवर्जितम् ॥ १२ ॥
स्वप्रकाशं गुणातीतं ज्ञानरूपं समं शिवम् ।
निर्विकारं सदाभान्तं सदसद्भावतः परम् ॥ १३ ॥
तस्मिन्नज्ञानसंसर्गः को वा वक्तुं समीहते ।
कथमज्ञानजो मोहस्तस्मिन् ज्ञानात्मनीश्वरे ॥ १४ ॥
स्वप्रकाशे यदज्ञानमावृतिं कुरुते यदि ।
तमसापि कथं सूर्यो नाव्रियेत मनागपि ॥ १५ ॥
कथं वा मोहनाशेपि कैवल्यमवशिष्यते ।
असत्यं सत्यवद्भाति संशयोत्र महान्मम ॥
छेत्तुमर्हसि देवेश तत्वज्ञानासिना प्रभो ॥ १६ ॥
शिव उवाच ॥
शृणु सुन्दरि यत्नेन रहस्यं परमाद्भुतम् ।
तव स्नेहवशाद्वच्मि प्रेम्णाहं प्रार्थितस्त्वया ॥ १७ ॥
न वाच्यं यस्य कस्यापि मातृजारसमं रहः ।
गोपयेत्सर्वतो भद्रे विवदेन्न कथञ्चन ॥ १८ ॥
न वादितर्कविषयं परं ब्रह्मसनातनम् ।
तर्कैककर्कशधियो वादिनो मूढबुद्धयः ॥ १९ ॥
सूर्यस्यावरणे शक्तं तिमिरं न कथञ्चन ।
स्वप्रकाशे तथाज्ञानं कदाचित्प्रभवेन्नहि ॥ २० ॥
इति प्रामाणिकैस्तर्कैर्विरुद्धमिव भासते ।
मोहसृष्टिसमुद्भूता ये प्रमाणविदो जनाः ॥ २१ ॥
कथं ते वेदितुं शक्ताः प्रमाणैरपि पण्डिताः ॥ २२ ॥
यथा स्वप्नजनो देवि स्वप्नद्रष्टारमेकलम् ।
न जानाति तथा देवि प्रमाणान्यपि कृत्स्नशः ॥
परे ब्रह्मण्यक्षरेऽस्मिन् अज्ञानावेशमाहितम् ॥ २३ ॥
तस्माद्युक्तिर्न कर्त्तव्या श्रुतिभिर्या विरुध्यते ।
अनुकूला श्रुतिगिरां युक्तिः सा विदुषां मता ॥ २४ ॥

यथा न सत्यादनृतात्केवलाद् व्यावहारिकम् ।
तथा सत्यानृताभ्यां तु व्यवहारः प्रवर्त्तितः ॥ २५ ॥
अनृतं तु तदज्ञानं सत्यं ब्रह्मैव केवलम् ।
न तुषादङ्कुरोत्पत्तिः केवलात्तण्डुलादपि ॥ २६ ॥
तुषतण्डुलयोगेन जायतेऽङ्कुरविस्तृतिः ।
ब्रह्मण्यज्ञानयोगेन जायते विश्वसम्भवः ॥ २७ ॥
तस्मान्न संशयः कार्यो ब्रह्मण्यज्ञानसम्भवे ।
नापनेया मतिस्तर्कैर्भावा ये (१)चाप्यलौकिकाः ॥ २८ ॥
न तांस्तर्केण युञ्जीतेत्याहुश्चोपनिषद्गिरः ।
ब्रह्मण्यज्ञानसद्भावो लोकसिद्धो न विद्यते ॥ २९ ॥
विद्यते वेदसिद्धोऽयं तस्माद्वेदः प्रमाणकम् ।
अलौकिकं न सिध्येत विरुद्धं यच्छ्रुतेः सह ॥ ३० ॥
अपरोक्षं लौकिकं च परोक्षं चाप्यलौकिकम् ।
कथं सिध्येदप्रमाणं परोक्षं लौकिकोक्तिभिः ॥ ३१ ॥
प्रमाणराजो यद्यादृक् निरूपयति केवलम् ।
तत्तादृगेव मन्तव्यमन्यथा स बहिर्मुखः ॥ ३२ ॥
अलौकिकं लौकिकं च तस्यैतदुभयं गतम् ।
स चाण्डालमयीं योनिं प्रविशेत्तद्बहिर्मुखः ॥ ३३ ॥
ब्रह्मक्षत्रियविट्शूद्राश्चैते वेदानुवर्तिनः ।
वेदैस्त्यक्तास्त्यजन्तस्ते यान्ति नीचपरम्पराम् ॥ ३४ ॥
प्रत्यक्षं चानुमानं च शब्दःसादृश्यमेव च ।
चत्वार्येतानि देवेशि प्रमाणानि न संशयः ॥ ३५ ॥
प्रत्यक्षं लौकिकं सिद्धं न चैवालौकिके हितम् ।
पर्वतो वह्निमान् धूमादित्येवमनुमीयते ॥ ३६ ॥
ब्रह्म केनात्र संसाध्यं सदसत्परमव्ययम् ।

---

(१) भावा तच्चाप्यलौकिकाः इतिपाठः ।

तस्माद्ब्रह्मण्यनुमितिर्न सिध्येत कदाचन ॥ ३७ ॥
सदृशाभावतो लोके सादृश्यं नापि सिध्यति ।
अनादिः शब्दब्रह्माख्यो ब्रह्मवक्तीह यादृशम् ।
तादृशं तद्विजीनायात्पाखण्डी चान्यथा हि सः ॥ ३८ ॥
ब्रह्माभासमया जीवा ब्रह्मैवेति विनिश्चयः ।
अहं मनुष्य इत्याद्या अहं बुद्धिर्हि देहिनाम् ॥ ३९ ॥
आत्मत्वेनैव गृह्णाति देहं चैनमचेतनम् ।
विपरीतमिदं भद्रे सन्दिग्धमिदमेव हि ॥ ४० ॥
अलौकिकं हि सन्दिग्धं वेदेनैव निवर्त्तते ।
न निश्चयं विना क्वापि मुक्तिर्भवति शाश्वती ॥ ४१ ॥
तस्माद्वेदान्तवाक्यैश्च सहायैः सर्वतोधिकैः ।
विचारयेत्परं ब्रह्म स्वात्मानं लभते हि सः ॥ ४२ ॥
शब्दातीतं परं ब्रह्म शब्दगोचरमित्यपि ।
तथाप्यनादिशब्दैस्तत् ज्ञायते नान्यथा प्रिये ॥ ४३ ॥
प्रमाणराजो निगमादनुभूतिर्गरीयसी ।
तथाप्यनुभवी साक्षात् शब्दैरेवोपदिश्यति ॥ ४४ ॥
गुरूक्तं चापि वेदोक्तमेकार्थं यदि भासते ।
तदा कृतार्थः पुरुषो मुक्तो भवति संशयात् ॥ ४५ ॥
निवृत्ते संशये देवि जाते स्वानुभवोदये ।
ब्रह्मण्यज्ञानमित्येषः सन्देहो नाशमेष्यति ॥ ४६ ॥
यदि युक्त्या प्रमाणैश्च विरुद्धं श्रुतिसम्मतम् ।
नायं विरुद्धो विदुषां अनुभूतिमतामपि ॥ ४७ ॥
जाग्रत्येतत्प्रतीयेत स्वप्ने तत्प्रातिभासिकम् ।
सुषुप्तौ तन्निरासेऽपि मूलाज्ञानं हि तिष्ठति ॥ ४८ ॥
आभासस्तदवच्छिन्नो जीवत्वेन प्रतीयते ।
आभासो ज्ञानरूपो हि बहिरन्तःप्रकाशकः ॥ ४९ ॥
तदज्ञानं तु देहादिरूपैः परिणतं प्रिये ।

तत्र व्याप्तश्चिदाभास एवं स्याद्व्यावहारिकम् ॥ ५० ॥
मूलाज्ञानमिदं देवि यदात्मनि च धिष्ठितम् ।
तन्निरासं विना देवि जीवा आभासरूपिणः ॥ ५१ ॥
न मुच्यन्ते कदाचिद्वा कथंचिद्वा सुरेश्वरि ।
व्रतोपवासनियमैस्तपोभिर्विविधैरपि ॥ ५२ ॥
स्वाध्यायाध्ययनैर्दानैस्तीर्थैर्वा चान्यसाधनैः ।
ब्रह्मचर्यवानप्रस्थसन्न्यासाचरणैरपि ।
अगाधाज्ञानपाथोधौ दुरन्ते पारवर्जिते ॥ ५३ ॥
उन्मज्जन्ते निमज्जन्ते देवत्वजडतादिभिः ।
नैव पारं गताः केचिन्नैव यास्यन्ति केचन ॥ ५४ ॥
अहोत्र परमानन्दः पुरुषोत्तम ईश्वरः ।
यानीक्षतेनुग्रहदृशा ते यास्यन्ति गिरीन्द्रजे ॥ ५५ ॥
अस्मिन्नज्ञानपाथोधौ वयं ब्रह्मादयोऽपि च ।
बुद्बुदाकारतां प्राप्तास्तदिच्छावायुजृम्भिताः ॥ ५६ ॥
वायूपरामे देवेशि बुद्बुदा नीरतां गताः ।
तथा यास्यति ब्रह्माण्डमस्माभिरविशेषितम् ॥ ५७ ॥
अप्रबोधो यथा स्वप्ने चित्रं सृजति कौतुकम् ।
तथैवात्मा प्रबोधेन जातं सर्वं चराचरम् ॥ ५८ ॥
प्रबोधाद्विलयं याति परं ब्रह्मावशिष्यते ।
स्रजि सर्पलये यद्वत् स्रगेव परिशिष्यते ॥ ५९ ॥
अध्यारोपापवादेन परं ब्रह्मैव शिष्यते ।
इति ते सर्वमाख्यातं यत्पृष्टोहं त्वया प्रिये ॥ ६० ॥
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ६१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे
पञ्चमं पटलम् ॥ ५ ॥

श्रीदेव्युवाच ॥

देवदेव कृपासिन्धो दीनबन्धो जगत्पते ।
आपीय भवतः सूक्तिं महानन्दः प्रवर्तते ॥ १ ॥
अज्ञानान्निखिलं जातं ब्रह्मादिस्थावरान्तकम् ।
इति यद्भवता प्रोक्तं सङ्क्षेपेण महेश्वर ॥ २ ॥
प्रपञ्चय पुनः सर्वं सृष्टिसंहारभेदतः ।

शिव उवाच ॥

शृणु पार्वति वक्ष्यामि यत्त्वं पृच्छसि तत्त्वतः ।
तस्य श्रवणमात्रेण परमात्मा प्रकाशते ॥ ३ ॥
अज्ञानं यन्मया प्रोक्तं न सन्नासत्तदुच्यते ।
सच्चेन्मुक्तिसमुच्छेदो ह्यसच्चेद्भासते कथम् ॥ ४ ॥
अनिर्वाच्यमिदं तस्मात् त्रिगुणोत्पादकं तथा ।
ज्ञाननाश्यं भावरूपं मूलाज्ञानं विदुः प्रिये ॥ ५ ॥
शशशृङ्गनरशृङ्गवन्ध्यापुत्रखपुष्पवत् ।
अज्ञानं कथितं सद्भिः कथं सदिति चोच्यते ॥ ६ ॥
नासत्तु कारणत्वेन ह्युपयुञ्जीत कर्हिचित् ।
कथं सृजति ब्रह्माण्डं ब्रह्मादिस्थावरान्तकम् ॥७॥
न शक्यस्तदभावोपि यस्मात्तत्त्रिगुणात्मकम् ।
श्रुतिप्रसिद्धं व्योमादिरूपेण विततं च यत् ॥ ८ ॥
सत्यवद्भासते वापि मूलाज्ञानं गिरीन्द्रजे ।
दीपार्चिषेव तिमिरं ज्ञानेन विनिवर्त्तते ॥ ९ ॥
स्वस्वरूपावबोधो हि ज्ञानमित्युच्यते प्रिये ।
स्वस्वरूपभ्रमो देवि विकल्पो भवसंज्ञकः ।
भ्रान्तात्मनस्तु शयने विकल्पो जायते महान् ॥ १० ॥
प्राप्तात्मनः समूलोऽपि नश्यते तद्वदेव हि ।
तदज्ञानं द्विधाभूतं कार्यकारणभेदतः ॥ ११ ॥

अक्षरे परमानन्दे मूलं स्यात्कारणं परम् ।
कार्यात्मकं बुद्धिभेदात् बुद्धिराभासदीपिता ॥ १२ ॥
सूते कार्यात्मकं पिण्डं ब्रह्माण्डं कारणात्मकम् ।
ब्रह्माण्डपिण्डयोरैक्यं प्रवदन्ति विपश्चितः ॥ १३ ॥
सरःशरावयोर्मध्ये यथार्कः प्रतिबिम्बितः ।
अक्षरः स्वावभासेन कार्यकारणसङ्गतः ॥ १४ ॥
यथोपाधिद्वयाभावे सूर्य एकः प्रतीयते ।
तथोपाधिद्वयाभावे विशुद्धः केवलोक्षरः ॥ १५ ॥
मूलोपाधिर्विशुद्धश्च सत्वप्राधान्यतः प्रिये ।
क्षुद्रोपाधिर्हि मलिनस्तमःप्राधान्यतो भवेत् ॥ १६ ॥
उत्कृष्टत्वाद्विशुद्धत्वात् सत्वप्राधान्यतस्तथा ।
नारायणादिकान् सूते सर्वज्ञानोपबृंहितान् ॥ १७ ॥
कार्योपाधिर्निकृष्टत्वादशुद्धत्वाच्च तामसः ।
जीवसृष्टिं वितनुते सर्वेशगुणवर्जिताम् ॥ १८ ॥
नारायणादिजीवन्ता सृष्टिर्मोहावधिस्थिता ।
एकमेवाद्वितीयं च ब्रह्मेति श्रुतयो जगुः ॥ १९ ॥
बुद्धिवृत्तिस्त्रिधा यद्वज्जाग्रत्स्वप्नसुषुप्तिकाः ।
आभासात्मनि जीवाख्ये वर्तन्ते ताः पुनः पुनः ॥२०॥
तद्वद्ब्रह्मणि चाज्ञानं त्रिधैव परिवर्तते ।
मूलाज्ञानं लयस्थानं सुषुप्तिः परिकीर्त्तिता ॥ २१ ॥
नारायणोपाधिकं यत्स्वप्नं तत्परिचक्षते ।
विष्णूपाधिमयाज्ञानं जाग्रदित्यभिधीयते ॥ २२ ॥
आदिजीवो महाजीवो विष्ण्वाख्यः परिकीर्त्तितः ।
स एव सर्वजीवाख्यः (१)आभासात्मा परस्य तु ॥ २३ ॥
जाग्रत्स्थानगताज्ञानं नानारूपैर्विजृम्भितम् ।

(१) 'आभासात्मनि पश्यति' इत्यपि पाठः ।

देवासुरमनुष्याद्यैर्गन्धर्वोरगकिन्नरैः ॥ २४ ॥
पशुकीटपतङ्गाद्यैर्विचित्रैः कर्मनिर्मितैः ।
तानेतान्वासनारूढान्नानाभेदव्यवस्थितान् ॥ २५ ॥
नारायणेन रूपेण स्वयं पश्यति चाक्षरः ।
जाग्रत्स्वप्ने विलीयेत स्वप्नस्तु शयनं व्रजेत् ।
तत्तुरीयं लयं याते स्मृतिरत्रावशिष्यते ॥ २६ ॥
यथा जागरणे स्वप्नः स्वप्ने जागरणं यथा ।
तथा वृत्तमिदं देवि यो जानाति स मुच्यते ॥ २७ ॥
अक्षरः परमात्मायं जाग्रत्स्वप्नं प्रपश्यति ।
जीवो जाग्रति वै स्वप्ने चित् क्षरस्य परात्मनः ।
स्वप्नं तज्जागरश्चापि द्वयमेतद्गतार्थकम् ॥ २८ ॥
स्थूलार्थोपासत्तिकालो जागरः परिकीर्तितः ।
स्थूलं त्यक्त्वा तु सूक्ष्मार्थोपासत्तिः स्वाप्निकी मता ॥२९॥
सूक्ष्मार्थानामप्यभावोपासत्तिः शयनात्मिका ।
शयनं तत्तु चाज्ञानं मोहरूपं वरानने ॥ ३० ॥
कारणं तद्विजानीयात् महाकारणनिर्मितम् ।
कार्यरूपेण विततं क्रमात्स्थूलविभेदतः ॥ ३१ ॥
तदहं ते प्रवक्ष्यामि शृणुष्वैकाग्रचेतसा ।
अज्ञानं प्रकृतिर्माया मोहोऽव्यक्तं प्रधानकम् ।
अदृष्टं चेति बहुधा वादिनस्तत्प्रचक्षते ॥ ३२ ॥
एकार्थमेव तत्सर्वं गुणस्तत्त्वाविरोधतः ।
नाममात्रेण कलहो नार्थं दृष्ट्वा कदाचन ।
प्रकृतिश्चापि पुरुषो यतस्तत्सृष्टिसम्भवौ ॥ ३३ ॥
कार्यकारणयोर्भेदः अभेदाख्यः प्रकीर्त्तितः ।
मृत्सुवर्णादिकानां च घटादेर्वलयस्य च ॥ ३४ ॥
भेदोथाभेद एव स्यात् तद्वदेतत्प्रकीर्त्यते ॥ ३५ ॥
तदज्ञानस्य शक्ती द्वे विक्षेपावरणात्मिके ।

ब्रह्मावृणोति सहसा शक्त्यावरणसंज्ञया ॥ ३६ ॥
यथाच्छादयति स्वल्पो मेघो भानुं सहस्रगुम् ।
तथाच्छादयते मिथ्या ब्रह्मानन्तमखण्डकम् ॥ ३७ ॥
अनावृतोऽपि पूर्णात्मा निःसङ्गो निर्विकल्पकः ।
तद्वासनानुवशगस्तिमितात्मा चिदक्षरः ॥ ३८ ॥
अथ विक्षेपशक्तिः सा यथा बहिरिवान्तरे ।
दर्शयामास विततं प्रपञ्चं सकुतूहलम् ॥ ३९ ॥
ददर्शासौ तदात्मानं नारायणमिति स्थितम् ।
वेदानां वेदमार्गाणां लोकानां च परायणम् ॥ ४० ॥
नारायणेन रूपेण स्वयं पश्यति चाक्षरः ।
(१)स वेदात्मा परो देवो बहु स्यामित्यमन्वत ।
अहङ्कारस्ततो जातो विकुर्वन्सम्भूत्त्रिधा ॥ ४१ ॥
सात्विको राजसश्चैव तामसश्चेति वै त्रिधा ।
तामसादप्यहङ्काराज्जडमासीन्नभः प्रिये ॥ ४२ ॥
तस्य शब्दो गुणश्चासीदेक एव सुलोचने ।
सत्वानुविद्धान्नभसो जातं श्रोत्रमथेन्द्रियम् ।
शब्दस्तु विषयस्तस्य सात्विकी दिक्च देवता ॥ ४३ ॥
रजो गुणप्रधानात्तु वागासीद्वचनग्रहा ।
अग्निस्तत्राभवद्देवः सात्विकः सुरवान्दिते ॥ ४४ ॥
अथाकाशादभूद्वायुः शब्दस्पर्शौ च तद्गुणौ ।
सत्त्वानुविद्धात्पवनात् त्वगासीदिन्द्रियं प्रिये ॥ ४५ ॥
रजोऽनुविद्धात्पवनादासीत्पाणीन्द्रियं प्रिये ।
आदानं तस्य विषये इन्द्रस्तस्याधिदेवता ॥ ४६ ॥
अथ वायोरभूदग्निः शब्दस्पर्शस्वरूपवान् ।
तेजसः सत्वविद्धाद्वै चक्षू रूपग्रहं सति ॥ ४७ ॥
रजोगुणप्रधानात्तु पादेन्द्रियमभूत्प्रिये ।

(१) 'स वेदात्मा परो देवो बहु स्यामित्यमन्यत' इत्यपि पाठः ।

उपेन्द्रः सात्विको देवो गमनं विषयो भवेत् ॥ ४८ ॥
आपस्तेजःसमुद्भूता रसाधिकगुणास्त्रयः।
सत्त्वानुविद्धात्सलिलाद्रसनं तद्रसग्रहम् ॥ ४९ ॥
वरुणः सात्विको देवो बभूव सुरवन्दिते।
रजःप्रधानात्सलिलात् पाय्वासीच्च विसर्गकृत् ॥५०॥
यमोधिदेवता तत्र सात्विकः सम्बभूव ह।
अद्भ्योभवद्वसुमती शब्दादिगुणपञ्चका।
पृथिव्याः सत्वविद्धायाः घ्राणं गन्धग्रहं शिवे ॥ ५१ ॥
नासत्यौ देवता तत्र सात्विकी सम्बभूव हा।
रजोनुविद्धया चासीदिन्द्रियं गुह्यसंज्ञकम् ॥ ५२ ॥
आनन्दानुभवस्तेन जायते सुरवन्दिते।
देवः प्रजापतिस्तत्र सात्विकः परिकीर्तितः ॥ ५३ ॥
रजःप्रधानभूतेभ्यो मिलितेभ्यः सुरेश्वरि।
क्रियाशक्त्यात्मकं प्राणपञ्चकं जायते शिवे ॥ ५४ ॥
सत्वप्रधानभूतेभ्यो मिलितेभ्यः सुरेश्वरि।
ज्ञानशक्तिप्रधानं तु ह्यन्तःकरणमुच्यते ॥ ५५ ॥
मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मकम्।
त्वक्चक्षूरसनाघ्राणंश्रोत्रंज्ञानेन्द्रियाणि च ॥ ५६ ॥
वाक् पाणिपादपायूपस्थानि कर्मेन्द्रियाणि च ॥ ५७ ॥
दिक्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः।
दशेन्द्रियाधिदेवाश्च मया ते परिकीर्तिताः ॥ ५८ ॥
पृथिव्यधिपतिर्ब्रह्मा विष्णुः सलिलनायकः।
तेजसोधिपतिः शम्भुर्वायोरीश्वर एव च ॥ ५९ ॥
व्योम्नः सदाशिवः प्रोक्त इत्येता भूतदेवताः।
दशेन्द्रियाणि बुद्धिश्च मनःप्राणादिपञ्चकम्।
एतल्लिङ्गं समाख्यातं जीवोपाधिरिति स्फुटम् ॥ ६० ॥

विशेषं तत्र देवेशि वर्णयामि शृणुष्व तत् ।
प्राणादिपञ्चकं देवि ! कर्मेन्द्रियसमन्वितम् ॥ ६१ ॥
प्राणकोश इति ख्यातः क्षुत्पिपासादिधर्मवान् ।
मनोज्ञानेन्द्रियैर्युक्तं मनःकोश उदीरितः ॥ ६२ ॥
बुद्धिज्ञानेन्द्रियैर्युक्तो विज्ञानाख्यः प्रकीर्तितः ।
इदं कोशत्रयं देवि व्यष्ट्या लिङ्गमुदाहृतम् ॥ ६३ ॥
तत्राभासमयो जीवो याति चायाति सुन्दरि ।
जडं कोशत्रयं देवि ब्रह्माभासेन चेष्टते ॥ ६४ ॥
यथायस्कान्तसान्निध्ये यथा लोहं सुरेश्वरि ।
यज्जडं तदसद्देवि यत्सत्तत्सदिति प्रिये ॥ ६५ ॥
तस्मात्तच्चेतनं ब्रह्म सत्यमित्येव सुन्दरि ।
समुदायस्तु लिङ्गानां तत्राभासस्तु यः प्रिये ॥ ६६ ॥
हिरण्यगर्भं तं प्राहुः सूत्रात्मानं पुनस्तथा ॥ ६७ ॥
इति ते कथितं देवि यत्पृष्टोऽहं त्वया शुभे ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ६८ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे तत्त्वसारे
शिवोमासंवादे षष्ठं पटलम् ॥ ६ ॥

---

## सप्तमं पटलम् ॥ ७ ॥

पार्वत्युवाच ॥

देवदेव महादेव करुणार्णव शङ्कर ।
श्रुत्वा त्वदीयवचनं नात्मा मे परितुष्यति ॥ १ ॥
नारायणादिरूपाणि त्वयोक्तानि च शङ्कर ।
तदुद्भवे हेतुमात्रं ब्रह्माज्ञानं निरूपितम् ॥ २ ॥

ब्रह्मण्यज्ञानसम्बन्धः सन्देहस्ते निवारितः ।
कारणं ब्रूहि देवेश मोहोत्पत्तौ विशेषतः ॥ ३ ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि रहस्यं वेदगोपितम् ।
यस्य कस्यापि नो वाच्यं वाच्यं सर्वस्वदायिने ॥ ४ ॥
तव स्नेहवशाद्देवि कथयामि न चान्यथा ।
सच्चिदानन्दकं ब्रह्म सदंशेन क्षरं जगत् ॥ ५ ॥
चिद्रूपं ब्रह्म परमं नित्यमक्षरमव्ययम् ।
बाललीलाविनोदेन कोटिब्रह्माण्डसंहतीः ॥
सृजते संहरत्येव निर्विकारं तथापि यत् ॥ ६ ॥
तस्मादप्यक्षरादूर्ध्वं परमानन्दसुन्दरम् ।
नित्यवृन्दावनानन्दि नानाक्रीडारसार्णवम् ॥ ७ ॥
विराजति ब्रह्मपुरे मनोवाग्विषयातिगम् ।
अंभोजकर्णिकावच्च नित्यवृन्दावनान्तरे ॥
तत्पत्रवदनेकैश्चिन्महोद्यानैर्विराजितम् ॥ ८ ॥
निजधामं रसानन्दं स्वप्रकाशं महोज्वलम् ।
कालिन्दी यत्र कोट्यर्कभास्वद्रत्नतटोन्नता ॥ ९ ॥
हंससारसकारण्डनानापक्षिनिनादिता ।
फुल्लाम्भोजवनामोदलुब्धभ्रमरमण्डला ॥ १० ॥
नवरत्नमयीभिस्तु सिकताभिरलंकृता ।
महामणितटात्तुङ्गकुट्टिमैः परिमण्डिता ॥ ११ ॥
नानादिव्यलताकुञ्जैरम्लानकुसुमोज्वलैः ।
दिव्यगन्धसमाकृष्टभृङ्गझङ्कारपेशलैः ॥ १२ ॥
सप्ततीर्थैर्दिव्यरत्नराजिराजितभूतलैः ।
उपरिस्थमणिभ्राजत्कुट्टिमैर्दिव्यमण्डपैः ॥ १३ ॥
शोभमानामृतजला स्वर्णपङ्कजमालिनी ।
रक्ततुण्डपदैश्चित्रपक्षैः पक्षिगणैः शिवे ॥ १४ ॥

सेव्यमाना सुखस्पर्शैर्वायुभिश्चलपङ्कजा ।
क्वचित्पर्यस्तमुक्तालिमहामरकतावनौ ।
शुद्धतामसहृद्युच्चैर्भाति भक्त्यङ्कुरा इव ॥ १५ ॥

यत्रोन्नदन्तःशुकसारसाद्याः पठन्ति दिव्यां गुणचित्रसत्कथाम् ।
शाखास्थिताः कल्पमहीरुहाणां मन्दानिलान्दोलितपल्लवश्रियाम् ॥१६॥
न यत्र शोको न भयं मृतिर्वा कालो न यत्र प्रभवेदनन्तः ।
यदेत्य शोचन्ति पुनर्नहीश्वराः कुञ्जेषु लीलावपुषोमलाशयाः ॥१७॥
प्रतप्तजाम्बूनदसुन्दरत्विषः कटाक्षविक्षेपविलोभितेश्वराः ।
चरन्ति मूर्त्ता इव विद्युतः स्फुटा घनेषु कुञ्जध्वनियोषिताङ्गनाः ॥१८॥
प्रफुल्लचाम्पेय वनोल्लसल्लताशतोपशङ्कं ययिता समीरणः ।
तनुष्विवानन्दपरं परंपरां तनोति तारुण्यभृतां नतद्भ्रुवाम् ॥ १९ ॥

सरूपः कुशेशयदृशो विकसद्विभूषाः
प्रोत्तुङ्गपीनकुचमण्डलम्बिहाराः ।
काश्मीरनीरलुलिताम्बररश्मिमाला
निर्भत्सितोदितदिवाकरबिम्बशोभाः ॥ २० ॥
दिव्यन्ति यत्र सुरसिद्धदुरापलोकाः
श्रुत्युल्लसत्कनककुण्डललोलगल्लाः ॥ २१ ॥
(१)द्युमणिमणिसमुद्यत्कान्तिसन्दोहरम्याः
विशदमरकतानामंशुकिर्मीरिताश्च ।
प्रचलदचलशोभैः पद्मरागैः सरागैः
प्रकटपरमशोभा भूमयो यत्र भान्ति ॥ २२ ॥

नीलाद्रिकान्तिसन्दोहैरूर्ध्वगैः सर्वतः प्लुतैः ।
दूरादाभाति वसुधा हरित्तृणमयाङ्कुरा ॥ २३ ॥
परापरविभागेन नीलपुष्पमयौ गिरी ।

---

(१) द्युमणिः=अम्बरमणिः, सूर्य इत्यर्थः, द्युमणिमणिकान्ताः=सूर्यकान्तः ।

नानाश्चर्यमयौ दिव्यौ दिव्योद्यानमनोहरौ ॥ २४ ॥
स्फुरन्मयूखमालाभिः प्रकाशितदिगन्तरः ।
पद्मरागाचलः श्रीमानास्ते यत्र महार्द्धिमान ॥ २५ ॥
सरांसि यत्र भूयांसि चित्सुधारसवन्ति च ।
विलसन्ति महारत्नशिलाबद्धानि सर्वतः ॥ २६ ॥
यत्रोद्यानलताकुल्या वमन्ति मधुरां सुधाम् ।
यूथशः खेलमानास्ताः पिबन्त्यानन्दनिर्भराः ॥ २७ ॥
यत्रैव कुञ्जसदनानि हसन्मुखानि
व्याकीर्णकाञ्चनभुगासनमण्डितानि ।
प्रत्याहसन्मणिविजृम्भितकुट्टिमानि
कूजद्विहङ्गमकुलानि शिवानि नित्यम् ॥ २८ ॥
स्फूर्जन्मणिप्रविततिर्वितनोति लक्ष्मीं
विस्फूर्जदूरुशशिकान्तशिलातलेषु ।
कूलप्ररूढनलिनीदलरश्मिबिम्बा
रूढेषु कामपि नितान्त मुदः प्रणाली ॥ २९ ॥
वैदूर्यवीरुध इह प्रतिभान्ति विष्वक्
यासूल्लसन्त्यरुणविद्रुमनर्त्तनानि ।
दूरादुपेतासितमौक्तिकरश्मिलेश
शोभां दधाति विमलां विलसन्तमार्याम् ॥ ३० ॥
यत्रैव चम्पकवनानि जयन्ति विष्वक्
मत्तभ्रमद्भ्रमरदूरतरोज्झितानि ।
प्रत्युन्नदन्ति विटपेष्वनिशं द्विजेन्द्रा
गीतध्वनिं सुखसमीरसमुन्नमत्सु ॥ ३१ ॥
श्यामोदरद्युतिसरोजवनोत्थिताभिः
कान्तिच्छटाभिरभितोधृतदुर्दिनेषु ।
प्रोत्फुल्लपङ्कजकदम्बपरागपुञ्जो
विदूयुच्छाविं वहति गन्धवहः प्रणुन्नः ॥ ३२ ॥

क्रीडासरः स्फुटमुदश्चति कुञ्जलीनगुञ्जद्द्विरेफपटलाकुलपङ्कजाश्रिः ।
वप्रप्ररूढगुणरूढकदम्बलम्बदोलासहस्रकमनीयगुणं गुणोरुः ॥ ३३ ॥
दूरादिहाद्रितनये कमलाकराणामुद्यत्परागपटलैश्च समीरवेगात् ।
स्फारीभवत्सुरभिगन्धसुधामयाम्भश्चेतः सरा रमयतीत्यनुरागिभावम् ॥
मध्योल्लसद्विपुलविद्रुमदेहलीकविश्रान्तिमण्डपसमृद्धसमस्तभोगम् ।
सोपानवर्त्मसु निविष्टसखीसहस्रव्याहन्यमानमृदुमर्दलपूर्णकुञ्जम् ॥३५॥
उद्यन्मयूखमयशुद्धसुधातिवर्षैं रत्नेन्दुरुल्लसति नित्यमनस्त भावः ।
नित्याभिरन्विततमः स्वकलाभिरन्तः शुद्धेतरप्रथितपक्षविपक्षधामा॥३६॥
यत्रामृताम्भोनिधिमध्यविस्फुरद्रत्नोल्लसद्द्वीपनिवेशमद्भुतम् ।
चकास्ति तस्मिन्परमाद्भुतं महन्मकेन भास्वन्मणिना विनिर्मितम् ॥३७॥
निजालयं मन्दिरमद्भुताकृति महामणिस्तम्भविराजमानम् ।
समोदितानेकदिवाकरेन्दुरुक्प्रभावनिर्भर्त्सनरत्नमण्डितम् ॥ ३८ ॥
नानाविधानन्दविहारभूमिका दशैव यस्मिन् प्रतिभांति पेशलाः ।
विहारशय्यासनचारुचामरामृतानुलेपोत्तमगन्धसाधना ॥ ३९ ॥
गवाक्षमालापथचारिभिर्महागरूद्भवैर्धूमवरैः सुगन्धिभिः ।
इतस्ततः केलिवनानिलोद्धतैः सुवासयन्त्यो वनपुष्पसम्पदः ॥४०॥

क्वचिद्दिनमणिज्योत्स्नाजालैर्मध्याह्नसूचकम् ।
क्वचिदञ्जनसङ्काशैर्मणिभिर्दर्शितक्षपम् ॥ ४१ ॥
उदितार्कमिवान्यत्र पद्मरागप्रभारुणम् ।
सन्ध्यायमानमेकत्र इन्द्रनीलमणित्विषा ॥ ४२ ॥
जलजाकृतिमत्यम्बुचतुरस्राववेदिकां ।
तस्याश्चतुर्षुकोणेषु हेमकुंभाः सुधाभृताः ॥ ४३ ॥
रत्नपङ्कजसंशोभैर्मुखा यत्र चकासते ।
मुक्तामयवितानानि मणिभूमिप्रभाङ्कुरैः ॥ ४४ ॥
निर्भिन्नानीह लक्ष्यन्ते नानाचित्राकृतीनि च ।
कर्णिकावन्महासौधं परितस्तस्य सुन्दरि ॥ ४५ ॥

द्वादशैव सहस्राणि प्रियाणां सौधपङ्क्तयः ।
प्रवालदेहलीकानि मणिद्वाराणि पार्वति ।
मुक्तातोरणवन्त्युच्चैर्नानाश्चर्यमयान्यपि ॥ ४६ ॥
नानावर्णैर्महाचित्रैश्चित्रितानि समन्ततः ।
गवाक्षमालाविलसन्मणिदीपोज्वलानि च ॥ ४७ ॥
दीर्घिकाभिश्च दीर्घाभिर्विकचोत्पलपङ्क्तिभिः ।
गाहमानाभिरनिशं सखीवृन्दैर्विभूषितैः ॥ ४८ ॥
क्वणत्कनकभूषाढ्यैः कौशम्भाम्बरशोभितैः ।
नानाकेलिरसास्वादविघूर्णितविलोचनैः ॥ ४९ ॥
महाद्वारमहं वन्दे भास्वद्रत्नकपाटकम् ।
सन्मुखं दूरतो यस्य विभाति यमुना नदी ॥ ५० ॥
तत्प्राङ्गणं कुङ्कुमपङ्कपिच्छलं समुद्यदादित्यसहस्रभास्वरम् ।
मुक्तामयूखावलिमिश्रितैर्महामणिप्रकाशैररुणीकृतान्तरम् ॥ ५१ ॥
यत्र कार्त्तस्वरमयी पर्यस्तमणिमौक्तिका ।
परमानन्दभवनं विभाति विविधास्थली ॥ ५२ ॥
सव्यापसव्ययोर्यस्य पुरश्चसुरवन्दिते ।
कुट्टिमानि विचित्राणि भान्ति भूयांसि यत्र वै ॥ ५३ ॥
यत्र जाम्बूनदस्तम्भेष्वारोपितमणिव्रजाः ।
प्रपुष्णन्ति महीदीपशोभामधूतवर्चसः ॥ ५४ ॥
तन्मध्यतो जयति कश्चिदनर्घमुक्ता
मणिप्रकरराशिरचितो विलसत्पताकः ।
वैदूर्यविद्रुमविनिर्मितदेहलीकः
श्रीमण्डपः कुसुमराशिभिरुद्यतश्रीः ॥ ५५ ॥
नृत्यन्ति कूजदलधुध्वनिनूपुराणां
केयूरचारुवलयावलिभासुराणाम् ।
यूथानि सस्मितमुखद्युतिनर्त्तकीना
मादर्शिताभिनयमुच्चलकुण्डलश्रीः ॥ ५६ ॥

यत्रेन्द्रनीलमणिनिर्मितनीलपद्मेपूद्भ्रान्तभृङ्गवनितापटलीविभाति ।
यत्रोल्लसत्स्फटिकभूमितलोपविष्टाहंसाविशेषमभजन्पदचञ्चुभाषा ५७
आमोदमोदितदिगन्तरभृङ्गसङ्घकल्पद्रुकोमलपरागसरागमार्गे ॥५८॥
मन्मानसं गिरिसुते सितसैन्धवीयः ।
खण्डो निमज्जतु महामणिमण्डपान्तः ॥ ५९ ॥
यमुनायाः परे कूलं निजं धाम प्रतिष्ठितम् ।
अपरस्मिन्महेशानि धाम स्यादक्षरस्य तु ॥ ६० ॥
धाम्नोभिमुखमीशानि वनान्युपवनानि च ।
चिदानन्दमयी वापी मणिमण्डपमण्डिता ॥ ६१ ॥
पारिजातवनं यत्र प्रवालकुसुमोज्वलम् ।
पद्मरागमयाकारनानावृक्षविराजितम् ॥ ६२ ॥
वैदूर्यमयवल्लीनां पद्मरागपलाशकैः ।
मुक्तास्तबकयुक्तैश्च कांचनांकुरसंगतैः ॥ ६३ ॥
यूथैर्विराजितं विष्वक् नानाक्रीडारसालयम् ।
सपादलक्षयोजनानां संख्यायां विमलं सरः ॥ ६४ ॥
मणिरत्नशिलाबद्धमणिकुट्टिममण्डपम् ।
प्रवालपद्मरागाद्यैः क्लृप्तसोपानसुन्दरम् ॥ ६५ ॥
तत्रस्था भर्त्तुरुद्दाम यशो गायन्ति योषितः ।
काश्चिल्लम्बन्ति दोलाभिर्गायन्त्यो मधुरस्वरम् ॥ ६६ ॥
काश्चिन्मृदङ्गवीणाद्यैर्नानाक्रीडारसोज्वलाः ।
खेलन्ति परमानन्दाः सखीसख्यो मुदान्विताः ॥ ६७ ॥
महापद्मवनं यत्र पद्मरागमयाम्बुजम् ।
वैदूर्यदण्डपत्रालिस्फुरद्वैडूर्यपद्मिनी ॥ ६८ ॥
प्रवालकेसरोल्लासिदिव्यगन्धमनोहरम् ।
सृजद्वितानमाकाशे रजोभिर्वायुनोद्धृतैः ॥ ६९ ॥
संख्यया परितो देवि लक्षयोजनविस्तृतम् ।
यद्गन्धानन्दसंसर्गात् ब्रह्मानन्दपरम्पराः ॥ ७० ॥

अप्रार्थनीयतमाभान्ति केनचित्सर्वथा सदा ।
रमते भगवान् क्वापि सप्रियाभिः समन्वितः ॥ ७१ ॥
वसन्ते कुंकुमाम्भोभिर्जलयन्त्रैर्विनिर्गतैः ।
वसन्तपुष्पाभरणैः स्फुरन्मुक्ताविभूषणैः ॥ ७२ ॥
प्रच्छन्नाभिः प्रकाशाभिः क्रीडाभिरितरेतरम् ।
नानापरिमलोद्गारैर्नानापक्षिगणस्वनैः ॥ ७३ ॥
पिककोलाहलैर्दिव्यैर्नित्यानन्दाविवर्द्धनैः ।
स्फुरत्तडितमेघालिध्वननप्रभासि प्रावृषि ॥ ७४ ॥
भूमिकासु सखीवृन्दैर्गीयमानः प्रमोदते ।
एवं क्रमेण भगवान् क्रीडते ऋतुचर्यया ॥ ७५ ॥
कदाचिन्मणिगेहस्थकुट्टिमे सुमनोहरे ।
चतुर्दिक्षुमहारत्नस्तम्भैः षोडशभिर्युतैः ॥ ७६ ॥
अन्योन्यप्रतिबिम्बत्वादन्योन्येतरथागतैः ।
प्रियामध्यगतो भाति तारामध्ये तथा शशी ॥७७॥
नानानर्मविनोदैश्च नानाक्रीडाकुतूहलैः ।
रमते भगवान् यत्रः स्वयं रसमयः पुमान् ॥ ७८ ॥
अक्षरः परमात्मा च पुरुषोत्तमसंज्ञकः ।
उभावप्येक एवार्थो लीलाभेदेन सुन्दरि ॥ ७९ ॥
अक्षरे सृष्टिकर्तृत्वान्न शृङ्गाररसोदयः ।
अमायत्वाद्रसात्मत्वान्नापरः सृष्टिकृत्प्रिये ॥ ८० ॥
दिदृक्षा ह्यक्षरस्यासील्लीलाया दर्शने प्रिये ।
पूर्णप्रियाप्रेम पश्ये विलसत्पुरुषोत्तमे ॥ ८१ ॥
तज्ज्ञात्वा पुरुषः श्रेष्ठः प्रियास्विच्छां दधे प्रिये ।
प्रार्थयामासुरेतास्तं श्रीस्वामिन्या समन्विताः ॥ ८२ ॥

सख्य ऊचुः ।

भो भो स्वामिन्परानन्द परात्परतर प्रभो ।

वयं प्रियोः प्रियासि त्वं तस्मान्नः प्रियमाचर ॥८३॥
अक्षरात्मा तु भगवान् या लीलाः सृजते प्रभुः ।
अस्माभिर्नानुभूतास्ताः कीदृशीः किंविधा इति ॥ ८४ ॥
तद्दिदृक्षितचित्तानां कामो नः प्रतिबाधते ।
कारयानुभवं तस्याः कारुण्येन कृपानिधे ॥ ८५ ॥

श्रीकृष्ण उवाच ।

प्रियाः शृणुत मे वाक्यं सावधानेन चेतसा ।
न यूयं दर्शने योग्याः नित्यानन्दपदेस्थिताः ॥ ८६ ॥
यत्रानन्दस्वरूपस्य हानिर्भवति सर्वथा ।
त्रिगुणायास्तु लीलाया दर्शनेन प्रियंवदाः ॥ ८७ ॥
मायावेशाद्विचित्रत्वं भावरूपात्मनां भवेत् ।
स्वलीलासहितं मां च नद्रक्ष्यथ कदाचन ॥ ८८ ॥
दुःखानुभव एवास्ति न सुखस्य कदाचन ।
विस्मरिष्यथ मां तत्र किमन्यत्तु वदामि भोः ॥ ८९ ॥
इत्युक्तास्ताः प्रियाः सर्वाः प्रत्यूचुः पुरुषोत्तमम् ।
तथापि प्रिय तत्सर्वं नानुभूतं कदाचन ॥ ९० ॥
तस्मादनुभवारूढं यथा भवति तत्कुरु ।
दुःकामो विनादुःखं दर्शनं न निवर्तते ॥ ९१ ॥
विना दुःखं न च सुखं स्वरूपेण प्रतीयते ।
तस्मात्साधय नः कामं गुणलीलानुदर्शने ॥ ९२ ॥
एवमुक्ते प्रियाभिस्तु तथास्त्विति जगाद सः ।

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे
सप्तमं पटलम् ॥ ७ ॥

# अष्टमं पटलम् ॥ ८ ॥

शिव उवाच ।

इच्छया ससृजे निद्रा त्रिगुणा मोहरूपिणी ।
तया त्रिध्वंसितज्ञानो मुमोह जगदीश्वरः ॥ १ ॥
मोहरूपं तदज्ञानं यस्य शक्तिद्वयं प्रिये ।
आवरणा प्रथमा देवि विक्षेपात्मा परा मता ॥ २ ॥
स्वप्रकाशं यथा दीपमभ्रपत्राद्यार्चियथा ।
निगुह्येतं जितानेन नानाभावान्प्रदर्शयेत् ॥ ३ ॥
एवं कूटस्थपुरुषमावृत्यावरणात्मिका ।
ततो विक्षेपरूपेण विश्वमात्मन्यदर्शयत् ॥ ४ ॥
शक्तिद्वयसमापेतमज्ञानमिति तद्विदुः ।
यथा शयानः पुरुषो जाग्रद्दृष्टं विमुञ्चति ॥ ५ ॥
तद्वासनावसितायां बुद्धौ स्वप्नं प्रपश्यति ।
तथा ददर्शविश्वात्मा स्वप्नारूढं जगत्प्रिये ॥ ६ ॥
यथाशयानः पुरुषः स्वप्ने राजा यथा भवेत् ।
राजदेहेन प्रकृतीः सर्वा एव नियच्छति ॥ ७ ॥
तथा नारायणं रूपं धत्ते देवश्चिदात्मकः ।
तेन रूपेण देवेशि स्वप्नलीलां प्रपश्यति ॥ ८ ॥
सत्वं रजस्तम इति पृथिव्यादीनि सुन्दरि ।
तत्र जातानि देवेशि येभ्योण्डमभवत्प्रिये ॥ ९ ॥
तत्र जाता इमे लोकाः सप्त चोर्ध्वमधस्तथा ।
सप्तार्णवाः सप्तद्वीपा जम्बूद्वीपस्तु मध्यगः ॥ १० ॥
तन्मध्ये भारतं वर्षं माथुरं तत्र मण्डलम् ।
तन्मध्ये गोकुलं जातं स्वाप्निकं सुरसुन्दरि ॥ ११ ॥
बहिर्वत् भासते विश्वं निद्रयान्तर्गतं प्रिये ।
ब्रह्मसत्तैव तत्सत्ता पृथक् सत्ता न विद्यते ॥ १२ ॥

भित्यन्तरगतचित्राणि यथाधिष्ठानतः पृथक् ।
न सन्ति देवदेवेशि तदा त्रासमयान्यपि ॥ १३ ॥
एवं विश्वमयं चित्रं आत्मभित्तिमधिष्ठितम् ।
न पृथक् देवि कुत्रापि पृथक् जानन्त्यपण्डिताः ॥ १४ ॥
ब्रह्मगुह्यमिदं देवि वक्तुं जिह्वाजडायते ।
गात्राणि शिथिलीयन्ते वाणी मे गद्गदायते ।
तथापि प्रेमवशगो दिङ्मात्रं प्रब्रवीमि ते ॥ १५ ॥
एकदा पुरुषः साक्षात्पुरुषोत्तमसंज्ञकः ।
सखीनां मंडलगतः स्वामिन्या श्लिष्टया प्रभुः ॥१६॥
रत्नासिंहासनासीनः पदाक्रान्तमहीतलः ।
पाणिना भ्रामयन्पद्मं पदावष्टब्धात्रिग्रहः ॥१७॥
दिव्यक्रीडारसानन्दो दिव्यभूषणभूषितः ।
दिव्यमाणिक्यमुकुटो दिव्यकुंडलमंडितः ॥१८॥
निश्चलालिकुलाकारकुटिलः स्निग्धकुंतलः ।
शरत्पद्मलसद्वक्त्रो नयनानन्दवर्षणः ॥ १९ ॥
दिव्यहीरालिदशनः प्रवालदशनच्छदः ।
अनंगधनुराकारकुटिलभ्रूलतोत्सवः ॥ २० ॥
स्मितमाधुर्यविजितमाधुर्यरससागरः ।
कंबुकंठलसद्रेखात्रयशोभामनोहरः ॥ २१ ॥
मुक्ताहारलसद्वक्षः स्फुरमाणमणिप्रभः ।
कांचीकपालविस्फुर्जत्किंकिणीजालमण्डितः ॥२२॥
[illegible]लयांगदकेयूरोर्मिकावृन्दविभूषितः ।
[illegible]नासासुन्दरमुखः स्मितोदारमुखांबुजः ॥२३॥
दिव्यगंधानुलिप्तांगो दिव्याम्बरविभूषितः ।
सुधासमुद्रलहरीशीतलाक्षातिसुन्दरः ॥ २४ ॥
गंभीरावर्तनाभ्युद्यत्तनुरोमलतांकुरः ।

स्वामिनी संस्थिता तस्य वामदेशे सहासना ॥ २५ ॥
अचञ्चलतडित्कोटिद्युतिभूषणभूषिता ।
दिव्यधात्रीफलस्थूलनासानटितमौक्तिका ॥ २६ ॥
शृङ्गाररससम्पूर्णनेत्रांदोलनविभ्रमैः ।
विलुम्पन्तीव देवेशि भर्त्तुश्चित्तगभीरताम् ॥ २७ ॥
मधुरोल्लापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्प्राणेशमानसा ॥ २८ ॥
मुखामोदविलुब्धालिझङ्कारोद्विग्नलोचना ।
भ्रूलताजितकन्दर्पवरकार्मुकविभ्रमा ॥ २९ ॥
मणिमंजीरनिर्ह्रादविमोहितमरालिका ।
नखेन्दुरुचिसंदोहमज्जन्नूपुरमण्डला ॥ ३० ॥
आनन्दसागरोद्वेलाविधूपमुखाम्बुजा ।
कुचकुम्भलसन्मुक्ताहारभारमनोहरा ॥ ३१ ॥
ग्रैवेयाभरणोद्दीप्ता कम्बुकण्ठी शुचिस्मिता ।
सख्यः प्रियां पुरस्कृत्य प्राहुः प्राणेश्वरं मुदा ॥ ३२ ॥

सख्य ऊचुः

प्राणनाथ प्रियायास्ते मनोरथमहाद्रुमः ।
फलितो नैव दृश्येत त्वयि भर्त्तरि किं पुनः ॥ ३३ ॥
मनोरथविघातेन दुनोत्येव प्रियामनः ।
बाललीलादिदृक्षास्मान् बाधते हृदयस्थिता ॥ ३४ ॥
यथेन्दोश्चन्द्रिकायाश्च यथा कुसुमगन्धयोः ।
शब्दार्थयोर्यथैवेश यथा वह्न्यार्चिषोः प्रभो ॥ ३५ ॥
अनाद्यभेदो देवेशि स्वामिन्यापि तथैव ते ।
अस्माकमपि भो स्वामिन् स्वामिन्यापि तथैव सः ॥ ३६ ॥
कस्य हेतोर्न कुरुषे तन्मनोरथपूरणम् ।
अविलम्बितमेवैतत्कुरुष्व हृदयस्थितम् ॥ ३७ ॥

इति श्री पं० माहेश्वरतन्त्रे उ० शिवपार्वतीसंवादे
अष्टमं पटलम् ॥ ८ ॥

# नवमं पटलम् ॥ ९ ॥

श्री शिव उवाच ॥

अथ श्रुत्वा सखीवाक्यं दर्शनावश्यकं प्रिये ।
तूष्णीं स्थितोपि मनसा मेने सर्वं भवत्विति ॥ १ ॥
स्वामिनीसहिताः सर्वाः सरूपस्तन्मुखपङ्कजम् ।
वीक्ष्यमाणा इवातस्थुः प्रभुश्चापि तथा स्थितः ॥ २ ॥
वासनांशैर्गताः सर्वा मथुरामण्डलस्थिते ।
गोकुले गोपिका जाता गोपगेहेषु ताः पृथक् ॥ ३ ॥
वृषभानुगृहे जाता राधिकेति च विश्रुता ।
स्वामिनीवासनालेशः केनाप्यंशेन सुन्दरि ॥ ४ ॥
तत्सख्यश्चापि सञ्जातास्तासां नामानि कानिचित् ।
कथयिष्यामि देवेशि शृणुष्वैकाग्रमानसा ॥ ५ ॥
सुन्दरी स्वर्णवर्णा च रम्याङ्गी स्वर्णमालिनी ।
ललिता चित्रवर्णा च विशाखा विजया जया ॥ ६ ॥
सुकुण्डला कुण्डलिनी मालिनी स्वर्णमञ्जरी ।
मञ्जुघोषा विचित्रा च देवसेना वरूथिनी ॥ ७ ॥
गौरी चित्राम्बरा तन्वी चन्द्रलेखा मनोजवा ।
अजिता जयिनी श्यामा बलाकी विमलप्रभा ॥ ८ ॥
तारा कुरङ्गनयना कमला वनमालिका ।
नित्या विलासिनी ताम्रा अनङ्गानङ्गमालिनी ॥ ९ ॥
अनङ्गमेखला माध्वी मोहिनी मदनावती ।
पुष्पावती हेमलता हेममाला मनोजवा ॥ १० ॥
कर्पूरगन्धा काश्मीरी पद्मगन्धा विहारिणी ।
हंसनी चित्रिणी चित्रा सुनन्दा बिन्दुमालिनी ॥ ११ ॥
मनोजापाङ्गलालित्या वैताली विमलप्रभा ।
पद्मरागा विचित्राङ्गी नित्यानन्दा निरङ्कुशा ॥ १२ ॥

इत्येवं कोटिशः ख्याताः सख्यः कुवलयेक्षणाः ।
न संख्यया परिच्छेद्या नित्यवृन्दावनाश्रयाः ॥ १३ ॥
तासां द्वादश साहस्री संख्या प्रोक्ता तथापि या ।
अन्तःपुरगतानां च रहोमिलितचेतसां ॥ १४ ॥
जाग्रत्स्वप्नं गताः सर्वाः स्वात्मानं ददृशुस्तदा ।
नन्दव्रजमिवोपेतमनुल्लङ्घितकेतनाः ॥ १५ ॥
यथा समीरवेगेन नीयते पद्मसौरभः ।
न पद्मस्याधिकं किञ्चिन्न्यूनं वा भवति प्रिये ॥ १६ ॥
तथा मोहेन ता नीता अपि स्वप्नं परात्मनः ।
अनुभूतवन्त्यस्तास्तत्र स्वप्नमायामनोरथम् ॥ १७ ॥
परात्मा भगवांश्चापि लीलामेतां ददर्श सः ।

पार्वत्युवाच ॥

नन्दगोपव्रजं प्राप्ताः सख्यो या भवतोदिताः ।
कूटस्थलीलानुभवप्रकारं वद शङ्कर ॥ १८ ॥
परात्मा भगवांश्चापि कथं लीलां ददर्श सः ।
कीदृशी सा भवेल्लीला सगुणानिर्गुणापि वा ॥ १९ ॥
अनित्या वाथ नित्या वा यथार्थं ब्रूहि शङ्कर ।

शिव उवाच ॥

शृणु पार्वति वक्ष्यामि तव प्रश्नान् सुगोपितान् ॥ २० ॥
न नास्तिकेभ्यो धूर्तेभ्यो हैतुकेभ्यः सुरेश्वरि ।
न वेदनिन्दकेभ्यश्च नाविश्वासाय कर्हिचित् ॥ २१ ॥
वेदशास्त्रपुराणादिश्रद्धापूतान्तरात्मने ।
अनिन्दकाय शुद्धाय सर्वत्र ब्रह्मदर्शिने ॥ २२ ॥
अलोलुपाय शान्ताय निर्मलाय महेश्वरि ।
कृतज्ञाय क्रियाकाण्डाचारसंशुद्धचेतसे ॥ २३ ॥
स्नानदानदयादाक्ष्यदमाद्यमलमूर्त्तये ।

परीक्ष्य शतधा देवि दद्यान्नान्यत्र कर्हिचित् ॥ २४ ॥
स्नेहाद्वा धनलोभाद्वा अज्ञानाद्वा भयादपि ।
प्रकाशयति मूढात्मा नारक्याचन्द्रतारकम् ॥ २५ ॥
तस्मात्त्वयापि देवेशि गोपितव्यं सुरेश्वरि ।
सखीनां ब्रह्मलीलाया दर्शनं तु यथा भवेत् ॥ २६ ॥
तत्प्रकारं प्रवक्ष्यामि शृणुष्वैकाग्रमानसा ।
मथुराधिपतिः कंसः उग्रसेनसुतः खलः ॥ २७ ॥
श्रुत्वात्ममृत्युं देवक्याः पुत्रद्वारेण दुष्टधीः ।
भगिनीं हन्तुमारेभे खड्गेन तरसा बली ॥ २८ ॥
वारितो वसुदेवेन नीत्या चाध्यात्मशिक्षया ।
न निवृत्तः खलः पापस्तदोपायमचिन्तयत् ॥ २९ ॥
न चास्यास्ते भयं वीर पुत्रेभ्यश्चेद्भयं तव ।
समर्पयिष्ये तान्पुत्रान्यानसौ प्रसविष्यति ॥ ३० ॥
न सन्देहस्त्वया कार्यो यतः सत्यमयः पुमान् ।
सत्ये नष्टे स्वयं नष्टो विशतेन्धं महत्तमः ॥ ३१ ॥
इत्युक्तो मोहितमतिर्मुमोच भगिनीं खलः ।
तया प्रसूतः समये पुत्रः पावकसन्निभः ॥ ३२ ॥
तमादाय गतः कंसं वसुदेवः प्रसादयन् ।
अर्पयामास तनयं कंसायात्मजमृत्यवे ॥ ३३ ॥
औग्रसेनिस्तु तं दृष्ट्वा प्रसन्नेनान्तरात्मना ।
प्रत्यर्पयन् सुतं प्राह प्रसन्नोऽहं तवानघ ॥ ३४ ॥
न चास्मान्मे भयं शूरस्तस्मान्नो हन्मि ते शिशुम् ।
युवयोरष्टमाद्गर्भान्मृत्युर्मे संश्रुतः पुरः ॥ ३५ ॥
वृथा किमर्थं ते बालान् हन्मि लोकविगर्हितः ।
अष्टमस्तु यदा पुत्रो भविष्यति तवानघ ॥ ३६ ॥
तदा मां तूर्णमासाद्य निवेदयतु वै भवान् ।

स्वस्त्यस्तु ते चिरं याहि मा भयं धेहि सर्वथा ॥ ३७ ॥
इति कंससमादिष्टो वसुदेवो महाशयः ।
निवृत्तः सुतमादाय कंसवाक्ये ससंशयः ॥ ३८ ॥
ततो नारदवाक्येन विमोहितमतिः खलः ।
अहनत्तं सुतं भूयस्तत्र गत्वा रुषान्वितः ॥ ३९ ॥
जग्राह निगडे चोभौ वसुदेवं च देवकीम् ।
यान्यान्पुत्रान्प्रसुश्रुवे मारयामास तान् खलः ॥ ४० ॥
दधार सप्तमं गर्भं शेषसंज्ञं सुदुःसहम् ।
आदिष्टा देवदेवेन योगमाया महेश्वरि ।
गर्भमाकृष्य देवक्या रोहिण्यां प्रणिनाय सा ॥ ४१ ॥
स्वयं प्रादुरभूतास्मिन् देवकीजठरे प्रभुः ।
शङ्खचक्रगदापद्मधरश्चारुचतुर्भुजः ॥ ४२ ॥
पीतवासा घनश्यामः स्फुरन्मकरकुण्डलः ।
स्फुरन्माणिक्यमुकुटो वलयाङ्गदभूषितः ॥ ४३ ॥
वसुदेवस्तु तं दृष्ट्वा विस्मयोदारलोचनः ।
तुष्टावोपनिषद्वाग्भिस्ततस्तुष्टोऽब्रवीद्वचः ॥ ४४ ॥

विष्णुरुवाच ॥

त्वयाहं तोषितः पूर्वं तपसा दुश्चरेण हि ।
प्रश्निगर्भेति विख्यातो नाम्ना पुत्रोऽभवं तव ॥४५॥
द्वितीये जन्मनि तथा कश्यपस्त्वं प्रजापतिः ।
उपेन्द्र इति विख्यातिं गतोऽहं यदुनन्दन ॥ ४६ ॥
वसुदेव तृतीयेस्मिन् भवे जातो भवद्गृहे ।
मुक्तिदानाय भवते प्रादुर्भूतोस्मि साम्प्रतम् ॥ ४७ ॥
नय मां गोकुलं यत्र यशोदा नन्दगेहिनी ।
तत्र जाता महामाया तां नयस्व स्वकं गृहम् ॥ ४८ ॥
तव मास्तु भयं क्वापि कंसान्मज्जन्मशङ्कितात् ।

इत्युक्त्वा देवदेवेशो दम्पत्योः पश्यतोः पुरः ॥ ४९ ॥
अक्षरस्य तु या चित्तवृत्तिर्लीलावलोकने ।
तदुपाधिकतत्सत्तारूपे व्यूहत्त्वमागतः ॥ ५० ॥
बभूव द्विभुजः सद्यः शिशुभावं गतः प्रभुः ।
तस्मिन्नाविविशे साक्षाद्ब्रह्मरूपी स्वयं प्रभुः ॥ ५१ ॥
निनाय गोकुले नन्दगेहं निद्राविमोहिते ।
आदाय योगनिद्रां तां वसुदेवो गृहं गतः ॥ ५२ ॥
देवकीप्रसवं प्रातः कंसायाचख्युरुत्सुकाः ।
गृहपाला ध्वनिं श्रुत्वा बालस्येति त्वरान्विताः ॥ ५३ ॥
कंसस्त्वरितमागम्य हठादाक्षिप्य तां खलः ।
भूपृष्ठे प्रोथयद्देवीं ततः सा दिवमुत्पतत् ॥ ५४ ॥
सा प्रोवाच वचः क्रुद्धा हरिर्जातस्तवान्तकृत् ।
यो वेदधर्मरक्षार्थं पाखण्डविनिवृत्तये ॥ ५५ ॥
असुराणां विनाशार्थमाविर्भवति लीलया ।
युगान्ते तमसा ग्रस्तान् वेदानुद्धर्तुमिच्छया ।
मत्स्यरूपी स्वयं जातः सर्वज्ञः सर्वशक्तिमान् ॥ ५६ ॥
कूर्मरूपेण यः पृष्ठे दधार मन्दराचलम् ।
उद्दिधीर्षुर्भुवं मूढा योऽसृजत् शौकरीं तनुम् ॥ ५७ ॥
स्वभक्तद्रोहिणं हन्तुं त्रातुं भक्तजनं तु यः ।
नृसिंहरूपी यः स्तम्भात्प्रादुरासीत्कृपानिधिः ॥ ५८ ॥
आत्मानं वामनं कृत्वा भक्तकार्यार्थमुद्यतः ।
बलिं बध्वा मघवते त्रिलोकीमददात्प्रभुः ॥ ५९ ॥
क्षत्रियान् दुर्नयान् दृष्ट्वा जमदग्निगृहे तु यः ।
जातश्चकार पृथिवीं क्षत्रबीजविवर्जिताम् ॥ ६० ॥
योसौ दाशरथिर्भूत्वा रावणं लोकरावणम् ।
जघान समरे दुष्टं शरण्यः शत्रुसूदनः ॥ ६१ ॥

कलौ जनिष्यमाणानां असुराणां दुरात्मनाम् ।
वेदमार्गप्रवृत्तानां अतदर्हतया तु यः ॥ ६२ ॥
अरुच्युत्पादनार्थाय नानापाषण्डकल्पनाम् ।
कृत्वा विनाशमेतेषां करिष्यति परः प्रभुः ॥ ६३ ॥
स जातो यत्र कुत्रापि मृत्युस्तव विमूढधे ।
इत्युक्त्वान्तर्दधे माया कंसस्तु विमनाः स्थितः ॥ ६४ ॥

इति श्रीपञ्चरात्रे माहेश्वरतन्त्रे उत्तरखण्डे शिव-
पार्वतीसंवादे नवमं पटलम् ॥ ९ ॥

## दशमं पटलम् ॥ १० ॥

शिव उवाच ॥

अथ नन्दगृहे जातः प्रातरेव महोत्सवः ।
नन्दः स्नातः शुचिर्विप्रानाहूयागमपारगान् ।
ददौ महामना गावो वासांस्याभरणानि च ॥ १ ॥
गोपा गोप्यो ययुर्हृष्टा नानाभूषाम्बरावृत्ताः ।
नन्दं वर्धापयामासुराशीर्भिः सर्वतो मुखम् ॥ २ ॥
यशोदां च महाभागां गत्वा गोप्योति हर्षिताः ।
उत्सुकानि मनांस्यासां बभूवुः कृष्ण(१) दर्शने ॥ ३ ॥
श्रीकृष्णदर्शनानन्दनिमग्नानिजमूर्तयः ।
बभूवुर्गोपिकाः सर्वाः निजलोकं गता इव ॥ ४ ॥
गृहे गृहे समभवन्महोत्सवपरम्पराः ।
याचका बन्दिनः सूता मागधाः समुपाययुः ॥ ५ ॥
तेभ्यो ददौ महार्हाणि भूषावासांसि गोपराट् ।

---

(१) ब्रह्मसृष्टिभ्यः तदानीं किशोरस्वरूपेण श्रीकृष्णो निजदर्शनं दत्तवान् ।

अथ कंससमादिष्टा पूतना बालघातिनी ॥ ६ ॥
निघ्नन्ती बालकान् जातान् चचार परितो व्रजम् ।
शिशवस्ते पराभूताः प्रविष्टाः पूतनान्तरं ॥ ७ ॥
नन्दगृहे पुत्रजनिं श्रुत्वा तस्य जिघांसया ।
कृत्वा विमोहनं रूपं दिव्यालङ्कारचर्चितम् ॥ ८ ॥
दिव्यमालाम्बरधरं दिव्यगन्धमनोहरम् ।
मनोहरन्ती नन्दस्य प्रविवेश शनैर्गृहम् ॥ ९ ॥
अथ सा सूतिकागारमभ्येत्य क्रूरनिश्चया ।
मोहयित्वा वचोभिस्तां बहिःप्रेमनिरूपितैः ॥ १० ॥
सुप्ताहिमिव जग्राह बालं कमललोचनम् ।
अङ्कमारोप्य बहुधा लालयन्ती शुचिस्मिता ॥ ११ ॥
ददौ हालाहलालिप्तं स्तनं तन्मुखपङ्कजे ।
तदन्तःस्थशिशून् प्राणान् पूतनायाः पपौ हरिः ॥ १२ ॥
सार्द्धयोजनविस्तारो देहस्तस्या महीतले ।
पपात पातध्वानिना कम्पयन् व्रजमण्डलम् ॥ १३ ॥
स्तन्यं हालाहलमयं हरये परमात्मने ।
दत्वापि सद्गतिं प्राप्ता किं पुनः साधुकारिणः ॥ १४ ॥

पार्वत्युवाच ॥

व्रजस्थाः शिशवो ये च तया व्यापादिता इति ।
पूतनायां स्थितान् सर्वान् तत्प्राणैरपिबद्धरिः ॥ १५ ॥
इति यद्भवता प्रोक्तं केतेत्र शिशवः प्रभो ।

शिव उवाच ॥

एकदा ब्रह्मणः सत्रे देवगन्धर्वपन्नगाः ॥ १६ ॥
सिद्धा विद्याधराः सर्वे समाजग्मुर्महर्षयः ।
आदित्या वसवो रुद्रा मरुतः पितरस्तथा ॥ १७ ॥
अग्नयो वायवश्चान्ये तेषामासीन्महासदः ।

जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ १८ ॥
अप्सरोदर्शनक्षुब्धस्मरग्रस्तोन्यथा मतिः ।
न शशाक मनो यन्तुं यतन्नपि पितामहः॥ १९ ॥
चस्कन्द रेतस्तस्याशु तपो विद्यामयं महत् ।
अज्ञात्वा तस्य संस्थानं कुण्डाग्नावजुहोत्प्रभुः ॥ २० ॥
अग्निमध्यात्समुद्भूताः कुमारा वह्नितेजसः ।
बद्धाञ्जलिपुटाः सर्वे प्रणेमुस्ते पितामहम् ॥ २१ ॥
ब्रह्मन् पितासि नः कामं वयं ते तनयाः प्रभो ।
उत्पादिताश्च भवता किंकुर्मस्तदुदीर्यताम् ॥ २२ ॥

ब्रह्मोवाच ॥

अग्नौ क्षिप्तं मया रेतस्तपोविद्यामयं शुभम् ।
तत्र जाता भवन्तो हि तस्मादग्निकुमारकाः ॥ २३ ॥
दण्डकारण्यमासाद्य तपश्चरत पुत्रकाः ।
इत्युक्ता ब्रह्मणा सर्वे दण्डकारण्यमाश्रिताः ॥ २४ ॥
तपो कुर्वन्तो यत्नेन ब्रह्मणोद्देशयन्त्रिताः ।
ततः कतिपये काले रामो दाशरथिः स्वयम् ॥ २५ ॥
रावणं समरे हत्वा राज्यं कृत्वा बिभीषणे ।
विमानं वरमारूढो दण्डकारण्यमाश्रितः ॥ २६ ॥
तत्रागस्त्याश्रमं रामो गत्वा चक्रेभिवादनम् ।
मुनिः सम्भावयामास कन्दैर्मूलफलादिभिः ॥ २७ ॥
रामस्य दर्शनं चक्रुर्मुनयोपि धृतव्रताः ।
उवास रामः कतिचिद्दिनानि मुनिसत्कृतः ॥ २८ ॥
एकदा जानकी द्रष्टुं मुनीनामाश्रमान् शुभान् ।
जगाम मुनिपत्नीनां सौहार्देनापि सुन्दरि ॥ २९ ॥
चक्रे रामकथाः पुण्याः रावणस्य वधं प्रति ।
सत्कृता मुनिपत्नीभिः मुनिभिः साधुभिस्तथा ॥३०॥

निवृत्ता जानकी तत्र जगामाग्निकुमारकान् ।
द्रष्टुं तपस्यतः पूर्णान् मुनिकन्यासमावृता ॥ ३१ ॥
जानकी तान्नमस्कृत्य कुमारानलप्रभान् ।
निषसाद क्षणं तत्र वनशोभाहितेक्षणा ॥ ३२ ॥
ते विचित्रेण दैवेन प्रेर्यमाणाः कुमारकाः ।
अमर्षजननं वाक्यमब्रुवन्कृतहेलनाः ॥ ३३ ॥
अहो सीते प्रभुः साक्षादीश्वरो जगतां पतिः ।
वेदरक्षाविधानार्थमवतीर्णो महीतले ॥ ३४ ॥
न यस्य स्वपरो वापि न द्वेष्यः प्रिय एव च ।
सत्यसन्धः क्षमी शूरो रामः कमललोचनः ॥ ३५ ॥
जटीवल्कलसंवीतो मोहमग्नो वने वने ।
भ्रान्तश्चचार निर्विण्णः पृच्छमानो वनस्पतीन् ॥ ३६ ॥
इयं कान्तेति वै मत्वा मोहविभ्रंशिताशयः ।
क्वचित्पल्लविनीं हृद्यां लतामालिंग्य निर्वृतः ॥ ३७ ॥
निवारितो लक्ष्मणेन नेयं कान्तेति जल्पता ।
दधाराम्भोनिधौ सेतुं सख्यं कृत्वा च वानरैः ॥ ३८ ॥
त्वन्निमित्तमिदं सीते प्रभोरपि विडम्बनम् ।
तस्मात्स्त्रियः पापरूपा दोषैकनिलयाः सदा ॥ ३९ ॥
न धार्या सुखमिच्छद्भिः कदाचित् क्वापि पण्डितैः ।
इत्येवं वचनं तेषां श्रुत्वा दाशरथेः प्रिया ॥ ४० ॥
चुक्रोध रक्तनयना शापं दातुं मनोदधे ।

सीतोवाच ॥

मन्निन्दायाः फलं शीघ्रमवाप्स्यथ कुमारकाः ॥ ४१ ॥
द्विधाविदीर्णदेहाश्च यूयं पण्डितमानिनः ।
पतन्तु भूतले सर्वे सर्वे स्वात्मकृतं भुजः ॥ ४२ ॥
इत्युक्त सीतया तूर्णं द्विधाभूतकलेवराः ।
व्यसवः पेतुरुर्व्यान्ते मुनिपत्न्यो विसिस्मिरे ॥ ४३ ॥

हाहाकारो महानासीन्मुनीनां तत्र शृण्वताम् ।
एवं शप्त्वा कुमारांस्तान् ययौ सीता निकेतनम् ॥४४॥
रामः श्रुत्वाथ तां वार्त्तामप्रियां दुर्मना भृशम् ।
निनिन्द सीतां मनसा किमेतद्दुर्विनीतया ॥ ४५ ॥
अविचारितमेवेह कृतं नष्टविमर्षया ।
अहो मूढधियो दुष्टाः स्त्रियो दारुणचेतसः ॥ ४६ ॥
श्रेयसां परिपन्थिन्यो मायेयं दैवनिर्मिता ।
संसारान्मुक्तिकामानां याः स्वयं निगडोपमाः ॥ ४७ ॥
महामोहस्य मञ्जूषा स्वार्थायानर्थतत्पराः ।
क्रोधलोभानृतधियो न विश्वस्ताः कदाचन ॥ ४८ ॥
न च ता विश्वसेत्क्वापि विश्वस्तान्घ्नन्त्यसंशयम् ।
अल्पार्थे बहनर्थेषु प्रवर्त्तन्ते दुराशयाः ॥ ४९ ॥
न विद्वान् स्त्रीवशं गच्छेद्वशं प्राप्तो विनश्यति ।
इत्याकलय्य हृदये जानकीं प्राह स प्रभुः ॥ ५० ॥
राम उवाच ॥
किमेतत्साधुचरिते विनिन्दितमचीकरः ।
नास्माकमुचितं कर्म यत्कुमारविहिंसनम् ॥ ५१ ॥
तपोविद्याधृतधियो विनयाचारशालिनः ।
न चैते शापमर्हन्ति यदि घ्नन्त्यपि सुन्दरि ॥ ५२ ॥
यथार्थवादिनां पुंसां श्रुत्वा वाचो यथार्थकाः ।
कुप्यन्ति ये मूढधियो न तेषां निष्कृतिः क्वचित् ॥५३॥
सीते यथार्थमुक्तं तैर्मामुद्दिश्य दयालुभिः ।
तेष्वमर्षः कथं जात ईदृशोनर्थदर्शनः ॥ ५४ ॥
यदि स्वल्पोपराधोपि तस्मिन् दण्डो महान् धृतः ।
न चैतदुचितं चण्डि क्षत्रियाणां दयावताम् ॥ ५५ ॥
वनेचराणामस्माकं मुन्याश्रमवासिनाम् ।
साध्वीत्थमुक्ता रामेण लज्जया नम्रकन्धरा ॥ ५६ ॥

बद्धहस्ताञ्जलिः प्राह भर्तृवाक्यविबोधिता ।
सीतोवाच ॥
अपराधो महान् देव कृतो मे नात्र संशयः ॥ ५७ ॥
अदण्डेष्वप्यपापेषु यन्मया ह्युद्दमः(१) कृतः ।
अपि मे दुर्नयं देव क्षमस्व त्वं दयानिधे ॥ ५८ ॥
तेष्वनुग्रहमाधत्स्व साधुष्वपि तपस्विषु ।
राम उवाच ॥
न करिष्याम्यहं भद्रे कुमाराणामनुग्रहम् ॥ ५९ ॥
मया त्वनुग्रहीतानां मुक्तिः स्याज्जलवज्जले ।
वेदवेदान्तसङ्गीतः परमात्मा परः प्रभुः ।
करोत्वनुग्रहं तेषामनुभूतिर्यथा भवेत् ॥ ६० ॥
तस्मादिमे लिङ्गदेहमात्रशेषाः सुलोचने ।
मयि स्थास्यंति सततं काळाविर्भावहेतवे ॥ ६१ ॥
रामे च भगवत्येते विळीनास्ते ततः परम् ।
वसुदेवगृहे साक्षादवतीर्णे हरौ स्वयम् ॥ ६२ ॥
तेवतीर्णा व्रजभुवि तद्देहस्थाः कुमारकाः ।
पूतनायां स्थिताः सर्वे तया व्यापादिता इति ॥ ६३ ॥
तत्प्राणैरपिबद्बालान् दक्षिणांगव्यवस्थितान् ।
वामांगभूताः सकलाः गौडदेशेऽभवन् स्त्रियः ॥ ६४ ॥
कुमारीरानयामास परचक्रं जिघांसता ।
निरुद्धा राजधर्मेण नन्दस्तद्देशमागतः ॥ ६५ ॥
इति ते कथितं देवि यत्पृष्टोऽहं सुलोचने ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ६६ ॥

इति श्रीपञ्चरात्रे माहेश्वरतन्त्रे उत्तरखण्डे
शिवपार्वतीसंवादे दशमं पटलम् ॥

(१) "यन्मयोरुद्दमः कृतः" इति मूल पाठः ।

# एकादशं पटलम् ॥ ११ ॥

शिव उवाच ।

हत्वाथ पूतनाप्राणान् सहबालान् कृपानिधिः ।
शकटं पातयामास पादपल्लवलीलया ॥ १ ॥
तृणावर्त्तमथाकाशे हरन्तमहनद्धरिः ।
स्तनं पीत्वा यशोदायै जृम्भमाणस्तु केवलम् ॥ २ ॥
मुखे प्रदर्शयामास भुवनानि चतुर्दश ।
बाललीलाविनोदेन मृदमश्नन् कृपानिधिः ।
अकल्पयद्देहयोगं कुमाराणामलौकिकम् ॥ ३ ॥
नाश्नाति मृदमानन्दो दधिदुग्धान्यपि स्वयम् ।
पुष्ट्यर्थं च कुमाराणामकरोत्सकलं प्रभुः ॥ ४ ॥
व्रजस्था गोपिकाः सर्वाः कृष्णलीलाहृताशयाः ।
विलोभयन्त्यः श्रीकृष्णं दास्ये दुग्धं दधीन्यपि ॥ ५ ॥
मृदूनि नवनीतानीत्युक्त्वा निन्युर्गृहान् स्वकान ।
ततोप्येकान्त आहूय दत्वा दधिमधूनि च ॥ ६ ॥
कृष्णमालिङ्गयामासुश्चुचुम्बुर्मुखपङ्कजम् ।
बालोभूत्वापि लोकस्य यशोदानन्दयोरपि ॥ ७ ॥
आलिङ्गयत्यालिङ्गमानः प्रतिचुम्बति चुम्बितः ।
गोपिकाहृदयानन्दं वर्धयन् रतिचेष्टितैः ॥ ८ ॥
रतिज्ञमिव तं मत्वा गोपिका रतिचेष्टया ।
कुतूहलनिमग्नास्ता न वक्तुं शेकुरुत्सुकाः ॥ ९ ॥
अन्यापि गृहमानीय खाद्यपानैरतोषयत् ।
भूषयित्वांजनाकल्पैरङ्गरागैः सुगन्धिभिः ॥ १० ॥
शुभासने समारोप्य दत्वा ताम्बूलवीटिकाम् ।
इहैव बालकैरेतैः परिक्रीडस्व निर्भयः ॥ ११ ॥
मान्यत्र गच्छ ते माता ज्ञापिता ताडयिष्यति ।

इत्याहुर्गोपिकाः काश्चित्प्रेमबद्धा व्रजार्भके ॥ १२ ॥
व्रजेश्वरसुतं नीत्वा गृहमूचुः पराः स्त्रियः ।
यदि नृत्यति सत्कृष्ण भवान् दास्ये मनोरथम् ॥१३॥
इत्युक्तो नृत्यति स्मासौ रभसा वै मुदान्वितः ।
हरन् कटाक्षमालाभिर्भावपूर्णाभिरावृतः ॥ १४ ॥
वव्रे नृत्यविधानार्थं कामं देहि प्रतिश्रुतम् ।
कस्ते कामं तयोक्तेसौ वव्रे कृष्णः स्ववांछितम् ॥१५॥
त्वदीयहृदये भाति कन्दुकद्वयमुत्तमम् ।
देह्येतद्रमणार्थाय मित्रैः गोपिसुतैः सह ॥ १६ ॥
जहास गोपीकृष्णस्य वाक्यश्रवणहर्षिता ।
वृषभानोः सुता देवि राधिकानामविश्रुता ॥ १७ ॥
स्वामिनी वासना जाता श्रीकृष्णप्रेमविह्वला ।
द्वादशैवसहस्राणि याः सख्यः परिकीर्त्तिताः ॥ १८ ॥
तदंगभूतास्ताःसर्वाः वस्तुभेदो न किंचन ।
स्वामिन्यात्मा भवेत्कृष्णः कृष्णात्मा स्वामिनी हि सा ॥१९॥
न तयोर्विद्यते भेदश्चन्द्रचन्द्रिकयोरिव ।
रसात्मकं रसभोक्तृ परं ब्रह्म श्रुतीरितम् ॥ २० ॥
रसः शृंगार एवोक्तो रसशास्त्रविशारदैः ।
संयोगो विप्रलंभश्च शृंगारो द्विविधो मतः ॥ २१ ॥
संयुक्तयोश्च संयोगो विप्रलंभो वियुक्तयोः ।
रसनित्यतया जातो वियोगस्तद्दलात्मकः ॥ २२ ॥
रसस्वभाव एवायं यत्संयोगवियोगवान् ।
अन्यथा ह्यक्षरे कस्माद्दिदृक्षा जायते तथा ॥ २३ ॥
कथं प्रियाणां च तथा रसस्तस्माद्धि तादृशः ।
सच्चिदानन्दकं ब्रह्म यदुक्तं श्रुतिमौलिभिः ॥ २४ ॥
चिदानन्दौ तु कूटस्थे पुरुषोत्तम एव च ।

उभावपि भवेद्ब्रह्म ब्रह्मभेदैर्विवर्जितम् ॥ २५ ॥
सजातीयविजातीयस्वगतैश्च सुलोचने ।
ब्रह्मत्वे ह्यक्षरस्यापि आनन्दो द्विदलात्मकः ॥ २६ ॥
सदंशबीजमूला च प्रकृतिर्ह्यक्षरात्मगा ।
न तस्माद्रसलीलायाः स्थितिः कूटस्थ ईश्वरे ।
प्रकृतेश्च परत्वाच्च निर्गुणत्वान्महेश्वरि ॥ २७ ॥
उत्तमे पुरुषे पूर्णे ह्यानन्दात्मनि केवले ।
लीला रसमयी रम्याः प्रतिक्षणनवा स्थिता ॥ २८ ॥
दिदृक्षितान्तःकरणवृत्तिः स्यादक्षरस्य या ।
पुरुषोत्तमावेशवती जाता नन्दगृहे तु सा ॥ २९ ॥
गुणलीलादिदृक्षायुक्वासनास्तत्प्रियासु याः ।
ता एव व्रजसुन्दर्यस्ताभिः संक्रीडते रसः ॥ ३० ॥
स्वामिनीवासना राधा स्वयं वृन्दावनेश्वरी ।
लवमात्रकालावच्छिन्नो विरहोऽभूद्रसात्मकः ॥ ३१ ॥
नलिनीपत्रसंहत्याः सूक्ष्मसूच्याभिवेधने ।
दले दले च यः कालः स कालो लववाचकः ॥ ३२ ॥
अत्रापि संयोगवियोगभावैः क्रीडति वै हरिः ।
कृष्णो राधास्वरूपेण विरहाक्रान्तचेतनः ॥ ३३ ॥
कथं सा संगता मे स्यादिति चिंतापरोभवत् ।
तत्सखीकृतमैत्रस्तु तत्कथाः कुरुतेऽनिशम् ॥ ३४ ॥
नित्यं स्वरूपस्तवनैर्गतिहासनिरूपणैः ।
वस्त्रमद्यतनं हृद्यं तव सख्याः परिस्कृतम् ॥ ३५ ॥
इत्यावेदितहार्दास्ताः सख्यः प्राहुश्च राधिकाम् ।
राधे नन्दसुतः सोयं सुन्दरः प्रतिभाति मे ॥ ३६ ॥
तव रूपानुरूपोयं चतुरो व्रजवल्लभः ।
नित्यं च त्वत्कथालापः त्वत्प्राणस्त्वन्मनाः सदा ॥
त्वामेव ध्यायते चित्ते सङ्गमस्ते यथा भवेत् ॥ ३७ ॥

॥ राधोवाच ॥

कुत्र सङ्गतिरेतेन मम स्यात्सखि चिन्तय ।
अहमप्यस्य रूपेण सौन्दर्येण गुणेन च ।
मोहितास्मि क्षणं नैनं विस्मरामि कथंचन ॥ ३८ ॥
यशोदानन्दनं कृष्णं स्वप्ने पश्यामि सन्ततम् ।
क्रीडमानं मया सार्द्धं पिबन्तमधरासवं ॥ ३९ ॥
यस्मिन् दृष्टे ममांगेषु स्वेदरोमांचकंचुकं ।
वेपथुः स्वरभङ्गो वा जायते साम्प्रतं सखि ॥ ४० ॥
यत्सौंदर्यरसांभोधौ निमग्नं सखि मे मनः ।
न निवृत्तिमवाप्नोति विना तद्दर्शनं क्वचित् ॥ ४१ ॥
कृष्णमूर्तिं प्रपश्यामि प्रमान्निकटवर्तिनीम् ।
क्षणादन्तर्हितां दृष्ट्वा मदात्मा तप्यते भृशम् ॥ ४२ ॥
किं करोमि क्व गच्छामि कस्याग्रे कथयाम्यहम् ।
नय मां नन्दतनयं कृष्णं प्राणाधिकं मम ॥ ४३ ॥
विरहाग्निमहाज्वालावलीढा मे वपुर्लता ।
कृष्णाधरसुधापूरप्लाविता शान्तिमेष्यति ॥ ४४ ॥
तस्य मे सङ्गमोपायं विचारय निजे हृदि ।
गच्छ कृष्णागमे यत्नं कुरु सङ्केतसद्मनि ॥ ४५ ॥
इत्येवं राधया प्रोक्ता सखी प्राणपतिं ययौ ॥ ४६ ॥

इति श्रीपञ्चरात्रे माहेश्वरतन्त्रे उत्तरखण्डे
शिवोमासंवादे एकादशं पटलम् ॥ ११ ॥

## द्वादशं पटलम् ॥ १२ ॥

शिव उवाच ॥

कृष्णस्तामागतां दृष्ट्वा हर्षाकुलितचेतसीम् ।
कार्यसिद्धिमिमां ज्ञात्वा हर्षादुल्लसितेक्षणः ॥ १ ॥
पप्रच्छ तां सखीं प्रेम्णा किमुक्तं राधया सखि ।
तदिदानीं ममाचक्ष्व श्रुत्वा सन्तोषमाप्नुयाम् ॥ २ ॥
त्वयि गतायां यावन्तः कालस्यावयवा ययुः ।
तावन्त्येव युगान्यासन् विरहाकुलितस्य मे ॥ ३ ॥

सख्युवाच ॥

त्वत्सङ्गविरहात्कृष्ण राधापि क्लिश्यतेतराम् ।
न निवृत्तिमवाप्नोति विना ते दर्शनं क्वचित् ॥ ४ ॥
कृष्ण कृष्णेत्यमुं मन्त्रं विरहाकुलया तया ।
जप्यतेऽहर्निशं मन्यमानया निकटे मृतिम् ॥ ५ ॥
विरहानलनिर्दग्धा शोभते न वपुर्लता ।
हिमक्लिष्टेव हेमन्ते मृदुला पद्मिनी यथा ॥ ६ ॥
दिवारात्रौ तु रहसि कृत्वा चित्रमयीं प्रभो ।
मूर्त्तिं निधाय हृदये शेते विरहकर्षिता ॥ ७ ॥
शुष्कौ बिम्बाधरौ तस्यास्तन्द्रा लोचनयोः स्थिता ।
अन्यथा भाषणं वक्त्रात्किमन्यत्कथयामि ते ॥ ८ ॥
नानुसन्धानमाधत्ते मनोवृत्तिर्मनागपि ।
अन्यथासिद्ध एवासौ कामस्ते नन्दनन्दन ॥ ९ ॥
तस्मात्तन्निकटं याहि सङ्केते कृतनिश्चयः ।
इति सख्योदितं श्रुत्वा उल्लुलास हृदि प्रभुः ॥ १० ॥

श्रीकृष्ण उवाच ॥

अहं तत्रागमिष्यामि सङ्केते सकृतनिश्चयात् ।
तत्र तामानय क्षिप्रं वेषगुप्तिं विधाय च ॥ ११ ॥

कस्यापि न भयं भीरु त्वया कर्त्तव्यमण्वपि ।
वञ्चयिष्ये जनान् सर्वान् इन्द्रजालकलादिभिः ॥ १२ ॥
राधिकायै प्रणामं मे तत्र गत्वा निवेदय ।
त्वं मे प्रियासि नितरां प्राणादप्यधिका मम ॥ १३ ॥
नावयोरन्तरं किञ्चित् प्राणरूपात्मनामपि ।
त्वन्नामस्मरणाच्चाहं यथा तुष्यामि सुन्दरि ।
मत्सेवया मम ध्यानात्तथा तुष्टिर्न मे क्वचित् ॥ १४ ॥
इत्यादि मम वाक्यानि राधिकायै निवेदय ।
पुनर्याता सखी राधामुवाच सकलं हि तत् ॥ १५ ॥
सुधामाधुर्यधिक्कारक्षमं कृष्णवचोमृतम् ।
पीत्वोल्ललास हृदयं ग्रीष्मतप्तेव भूर्यथा ॥ १६ ॥
अथ सङ्केतसदने शय्या पुष्पमयोचिता ।
नानागन्धमहामोदपुष्पराजिविराजिते ॥ १७ ॥
निर्दग्धागरुसद्धूमधूपिते च समन्ततः ।
पानयोग्यरसैर्दिव्यैस्ताम्बूलैरङ्गलेपनैः ॥ १८ ॥
कृत्कृते सदने रम्ये राधा सख्यावृता ययौ ।
तत्रासनगता राधा काङ्क्षन्ती प्रियसङ्गमम् ॥ १९ ॥
अचञ्चलतडित्कोटिप्रभापिञ्जरिताम्बरा ।
समावृत्तसुवृत्तोरुजघनस्तनमण्डला ॥ २० ॥
कटाक्षसरणीनिर्यद्रसमोहितमन्मथा ।
शुकाकारसमाकारनासाभरणभासुरा ॥ २१ ॥
दाडिमीबीजसन्देहकारिदशनहीरका ।
वीणारवघृणादायिनिजवाणीगुणोदया ।
कर्पूरबीटिकामोदसुगन्धितदिगन्तरा ॥ २२ ॥
मणिदर्पणदर्पघ्नकपोलफलकप्रभा ।
मणिमङ्गलसूत्रेण विलसत्कम्बुकन्धरा ॥ २३ ॥

रत्नाङ्गुलीयनिवहोल्लसदङ्गुलिपल्लवा ।
कुचभारलसन्मध्यत्रिवलीकलितोदरा ॥ २४ ॥
चन्दनागरुकस्तूरीकर्पूरादिसुगन्धिनी ।
निःश्वासहारिकुर्पासानिबद्धस्तनमण्डका ॥ २५ ॥
कुचोपरिलसन्मुक्ताहारतारसुशोभिता ।
क्वणन्माणिक्यमञ्जीरप्रभाभिर्बद्धमण्डला ॥ २६ ॥
रेजे राधासनगता कथंचक्रे प्रियश्रया ।
कथं नाद्यावधि प्रेयान् नागतः सखि तर्कय ॥ २७ ॥
रुद्धः कयाचित्प्रियया किं वा त्वं तेन वञ्चिता ।
तद्वचः किमतथ्यं वा तथ्यं वा ज्ञायते कथं ॥ २८ ॥
नागमिष्यति चेत्कान्तः प्राणांस्त्यक्ष्याम्यसंशयं ।
वयस्यामेतदाश्राव्य कृत्वा करतले मुखम् ॥ २९ ॥
विरहाग्निशिखात्युष्णं निशश्वास प्रियंवदा ।
ताम्बूलगन्धपुष्पादिरतिसाधनमाहितं ।
निनिन्द मनसा सर्वं वियोगज्वरविप्लुता ॥ ३० ॥
तद्वक्त्रं हसितेन्दुमण्डलमतिस्फारं तदालोकितम्
सा वाणीजितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं सन्ततमालि वल्लभतमध्यानप्रसक्तात्मन
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ॥ ३१ ॥
तदैव कृष्णः सङ्केतं प्राप्तः प्राण इव स्वयम् ।
स्वासनाच्चूर्णमुत्तस्थौ राधा कमललोचना ॥ ३२ ॥
समानासनसमासीनौ परस्परतिप्रियौ ॥
भावपूरितदृक्प्रान्तनिक्षेपान्योन्यमोहितौ ॥ ३३ ॥

श्रीकृष्ण उवाच ॥

प्रिये त्वद्विरहज्वालावलीढवपुषो हि मे ।
न शान्तये सुधाम्भोधिकोटिपीयूषसेचनम् ॥ ३४ ॥

त्वदीयविरहे राधे प्रियमप्यास विप्रियम् ।
अमृतांशोरपिकराश्चण्डांशोरिव दारुणाः ॥ ३५ ॥
ग्लपयन्ति वपुर्वल्लीं विरहे तव सुन्दरि ।
शय्या पीयूषरचिता वह्न्यङ्गाराचितेव सा ॥ ३६ ॥
मलयालेपनं देहे व्यथते विस्फुलिङ्गवत् ।
कोटिकल्पायते रात्रिः पुष्पं सूचीफलायते ।
दावाग्निज्वालेव मरुत् शीतलो व्यथयेत्तनुम् ॥ ३७ ॥
ध्यायामि त्वां दिवारात्रौ त्वत्प्राणस्त्वन्मनाः प्रिये ।
राधिके राधिके चेति महामन्त्रजपेन च ॥ ३८ ॥
विरहाहिविषं प्राणहारि प्रशमयाम्यहम् ।
अद्य लब्धासि भो कान्ते निधानमिव निर्धनैः ॥ ३९ ॥
विवेकविद्याविनयप्रसादमहेन्धने चासुविदीप्यमाने ।
वियोगवातद्विगुणीकृतेन्तः स्मरानले गोपि जुहोमि देहम् ॥४०॥
इतः क्षणं वा च ततः क्षणं वा गृहे क्षणं वा शयने क्षणं वा ।
बहिस्तथान्तः क्षणमात्मनस्त्वद्ग्रहग्रहीतस्य निवृत्तिरस्ता ॥४१॥
कियन्त्य एवात्र न सन्ति राधे सुलोचना मां तु न हर्षयन्ति ।
पयोदबिन्दुप्रतिरुद्धबुद्धेर्विहङ्गमस्येव जलोपकण्ठम् ॥ ४२ ॥
दिशां मुखेषु प्रमदे त्वदीयां भ्रमोपनीतामपि वीक्ष्य मूर्त्तिम् ।
गतावधिव्याप्तिमुपैति चित्ते हर्षस्य वैयर्थ्यमुदीक्ष्य शोकम् ॥४३॥
समुद्ररुद्रौ प्रथितौ जगत्यामौर्वेण हालाहलधारणेन ।
अहं तु कल्पान्तहुताशकल्पवियोगदग्धोपि न चित्रमेतत् ॥४४॥
अपि प्रिये त्वद्विरहानलोत्थज्वालाहुतीभूतशरीरयष्टेः ।
त्व(१)मेव मे जन्मनि जन्मनि स्याःप्रिया सखी चेति विधिर्व्यधत्ताम् ।४५।
अपि प्रिये केसककुड्मलौघाः स्फुटन्ति मे हृदयेन साकम् ।

---

(१) अत्र प्रतिपादिताक्षरातीताख्यस्य कृष्णस्यानवतारित्वेपि स्व-प्रेममहिमप्रदर्शनार्थमेवेत्थमुक्तं श्रीराधिकां प्रतीति विद्वद्भिरवगन्तव्यम् ।

विलोचनाभ्यां तु समं पयोदाः किरन्ति वारिप्रकरानमन्दाम् ॥ ४६॥
वियोगदावानल एष एव क्षणात् क्षिणोत्येव तनुं मदीयाम् ।
यदा सुधारश्मिसहोदरास्यमसङ्कुचध्यानपथादपैति ॥ ४७ ॥
धुन्वन्पयोदावलिविस्फुरन्तस्तडित्प्रकाशाः शिखिनर्त्तनानि ।
सुकेतकामोदमुचश्च वाताः सहस्रधा मे हृदयं दलन्ति ॥४८॥
स्मराशुगीभूतविलोचने द्वे भ्रूभ्यां धनुर्भावमुपागताभ्यां ।
स्फुटं वहन्ती जनमोहविद्या विद्या किमेषा मम मोक्षकर्त्री ॥४९॥
स्मितोदयादर्शितदन्तपङ्क्तिप्रभावलीढाननपङ्कजेन ।
परिस्फुरल्लोचनषट्पदेन विमोहयन्ती हृदयं मदीयम् ॥५०॥
ध्येयं ममैतत्तवपादपङ्कजं गेयं ममैतत्तव रूपसौभगम् ।
त्वत्तो न किञ्चित्प्रतिभाति तत्वं त्वया विनांध्यं जगतो विभाति।५१।
इत्थं प्रियामनुनयन् वचोभिः प्रेमगर्भितैः ।
रेमे कृष्णः कुचतटीपरिरम्भादिभिस्तथा ॥ ५२ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे द्वादशं पटलम् ॥ १२ ॥

---

## त्रयोदशं पटलम् ॥ १३ ॥

शिव उवाच ॥

एकदा तु कुमार्यस्ता व्रतं चेरुः समाहिताः ।
कात्यायनीमर्चयन्त्यः कृष्णो भर्त्ता भवेदिति ॥ १ ॥
मासान्ते फलदानाय गतः कृष्णः सरित्तटम् ।
तीरस्थितानि वासांसि हृत्वा नीपमथारुहत् ॥ २ ॥
कुमार्यः कृष्णचरितं दृष्ट्वा प्रेमपरिप्लुताः ।
लज्जितस्मेरवदनाः कृष्णमूचुः कदम्बकम् ॥ ३ ॥

कृष्ण, वासांसि नो देहि खिन्नाः स्म सलिले वयम् ।
त्वं वृद्धसम्मतो भूत्वा नैतत्कर्तुं त्वमर्हसि ॥ ४ ॥
यदि जानाति वै कश्चित्तदायं दुर्नयो महान् ।
जानिष्यति यदा राजा कंसः क्रूरमतिर्मनाक् ॥ ५ ॥
तदा ह्यनर्थ एवायमस्माकं भवतोपि च ।

श्रीकृष्ण उवाच ॥

इहागत्य प्रतीच्छध्वं स्वं स्वं वासः सुलोचनाः ॥ ६ ॥
अन्यथा न ददाम्येव कंसभीत्या बिभीषितः ।
निशम्य वचनं तस्य गोप्यो लज्जास्मितेक्षणाः ।
जलादुत्तीर्य वासांसि कृष्ण देहीति चाब्रुवन् ॥७॥
कृष्णः प्रीतमनास्ताभ्यो वासांसि पृथगाददौ ॥ ८ ॥
तत्तद्भागैश्च(१) ताः सर्वाः स्वान्तःस्थैः सन्नियुज्य च ।
चक्रे पूर्णतराः कृष्णो रसयोग्या रसप्रियः ॥ ९ ॥
ततः प्रसन्नो भगवान् कुमारीभ्यो वरं ददौ ।

श्रीकृष्ण उवाच ॥

रात्रयो ह्याधिदैविक्यो मयि तिष्ठन्ति ताः प्रियाः ॥१०॥
पश्यध्वं रमयिष्यामि तासुः वः पद्मलोचनाः ।
प्रतियात गृहं तस्मात्कामः कालेन सेत्स्यति ॥ ११ ॥
ततो लब्धवराः सर्वा गोप्यः पूर्णमनोरथाः ।
गृहं जग्मुः प्रगायन्त्यः कृष्णलीलां मुदान्विताः ॥१२॥
जनयन् मन्युमिन्द्रस्य कृत्वा गोवर्धनोत्सवम् ।
इन्द्रोत्सृष्टजलैरश्वैः सङ्कर्षणमहीश्वरम् ॥ १३ ॥
वर्षद्वादशकं योसौ त्यक्ताम्बुफलमूलकः ।
तर्पयामास तं कृष्णः पुरूहूतमदं नुदन् ॥ १४ ॥

---

(१) कुमारीभ्यः स्वगततत्तदंशस्वरूपदानायैव वस्त्रहरणलीलां कृतवान् भगवानिति ध्येयम् ।

एकदा कृष्ण एवैको गतो वृन्दावनं शुभम्।
रमणाय मतिं चक्रे सखीभिः सह केवलम्॥ १५॥
दृष्ट्वा वृन्दावनं रम्यं नमत्कुसुमपादपम्।
कूजत्पक्षिमरालालिप्रतिध्वनिमनोहरम्॥ १६॥
प्रफुल्लमल्लिकाम्भोजं मन्दमारुतकम्पितम्।
योगमायामथो कृष्णः कालमायाविनाशिनीं॥ १७॥
जाग्रदन्ते सुषुप्त्यादौ स्फुरणायोपलभ्यते।
तादृशीमकरोद्देवि लीलार्थं पुरुषोत्तमः॥ १८॥
प्रकाशा चाप्रकाशा च द्विधा सेयं व्यवस्थिता।
दर्शनांशे प्रकाशा च दृवृत्त्वाच्छादने तथा॥ १९॥
बहिः प्रकाशं विच्छिद्य अन्तराकाशते यथा।
योगमायेति विख्याता जाग्रत्स्वप्नमयीशितुः॥ २०॥
कालमाया हृता तूर्णं तया तच्चित्स्वरूपया।
तत्कार्यमात्रमखिलं लीनं स्थावरजङ्गमम्॥ २१॥
योगमायोद्भवं स्वप्नमक्षरः संददर्श ह।
अन्यूनाधिकमीशानि भूतेन्द्रियगुणात्मकम्॥ २२॥
दिव्यमाणिक्यमुकुटं स्फुरन्मकरकुण्डलम्।
दिव्यमुक्तामणिभ्राजन्नानाभूषणभूषितम्॥ २३॥
कृष्णरूपमभूत्तत्र योगमायोपबृंहितम्।
अलौकिकलतादिव्यकुसुमामोदवायुना॥ २४॥
सेवितं सर्वतः श्रीमद् वृन्दावनमहाद्भुतम्।
खगा मृगा लता वृक्षा वायवश्चन्द्रतारकाः॥
ऋतुः पुष्पाणि रात्रिश्च सर्वमासीन्नवं प्रिये॥ २५॥
प्रससारोत्सृजन्ती सा प्रसन्ती विश्वमोजसा।
उत्सारयन्ती तिमिरं यथा दीपशिखाम्बभोः॥ २६॥
योगमायाप्रपञ्चोपि सदेवासुरमानवः।

तासु सङ्कल्पमकरोन्मनसा पुरुषोत्तमः ॥ २७ ॥
अबोधयत्पूर्वकामं कामरूपतया हृदि ।
यावदङ्कुरितो भूयात् हृदि कामस्तु सुभ्रुवाम् ॥ २८ ॥
तावत्तद्वर्धनार्थाय वेणुनादमथाकरोत् ।
योगमायोद्भवाकाशे वेणुनादः प्रतिष्ठितः ।
तं नादमेव गोप्यस्ताः शुश्रुवुः प्रथमं प्रिये ॥ २९ ॥
अधरामृतसंसिक्तवेणुनादः सहानिलः ।
प्रविश्य कर्णरन्ध्रेण हृच्छयं समतेजयत् ॥ ३० ॥
ततस्ताः सहसा हित्वा शयनासनभोजनम् ।
सात्त्विकी राजसी चैव तामसी चेति विश्रुताः ॥ ३१ ॥
श्रुतिरूपा कुमार्यश्च आजग्मुर्नादमोहिताः ।
निषिद्धा अपि यत्नेन बन्धुवर्गैरनेकधा ॥ ३२ ॥
न निवृत्ता यथा वेगः सरितामर्णवं प्रति ॥ ३३ ॥
बलात् रुद्धा अपि जहुः प्राणान् विरहकर्षिताः ।
काश्चिद्गोप्यः क्षणादेव दिव्यदेहाः समाययुः ॥ ३४ ॥
पुरः प्रकाशः पश्चात्तु शून्यमासीत् व्रजास्त्रियः ।
प्रविष्टा मण्डलं सर्वा योगमायिकमुत्तमम् ॥ ३५ ॥
कुमार्यो द्वादश प्रोक्ताः सहस्राणि तथा पराः ।
तावन्त्यः किल विज्ञेयाः श्रुत्वा वेणुरवं निशि ॥ ३६ ॥
चत्वारिंशत्तु यूथानि तासां प्रोक्तानि योषितां ।
तासां द्वादशसाहस्री संख्या संयोगभावतः ॥ ३७ ॥
प्रियसङ्गार्हमेतासां माया वेषमरीरचत् ।
भूषामालाम्बराण्यासन् लोकसिद्धेतराणि च ॥ ३८ ॥
समानवेषाभरणाः सर्वाः सवयसः प्रिये ॥
समचित्ताः समरसाः कृष्णस्य निकटं ययुः ॥ ३९ ॥
वेदस्थित्यर्थमेवासौ क्रीडन्नपि समाहितः ।

मर्यादामुक्तवान् वाचा वागासीत्कारणोदया ॥ ४० ॥
न निषिद्धाः स्वरूपेण स्वरूपं वागगोचरम् ।
रसभोक्तृरसात्मत्वं विरुद्धेदन्यथा प्रिये ॥ ४१ ॥

श्रीकृष्ण उवाच ॥

किमर्थमागताः सर्वाः मिलिताश्च परस्परं ।
रात्र्यामघटमानं तु वनेष्वागमनं स्त्रियः ॥ ४२ ॥
स्त्रीधर्मं सहसा हित्वा भर्तृसेवामयं शुभम् ।
ऐहिकं पारलौकिक्यं स्त्रियो नाशयति ध्रुवम् ॥ ४३ ॥
येन संतुष्यते भर्त्ता स धर्म उचितः स्त्रियः ।
तं विहाय ध्रुवं नारी पतत्येव न संशयः ॥ ४४ ॥
तस्माद्व्रजं स्त्रियो यात मदुक्त्या यन्त्रिताशयाः ।
गोप्यस्तद्वाक्यमाकर्ण्य तीक्ष्णं हालाहलोपमम् ॥ ४५ ॥
किं वज्रनिर्घातहता इव पेतुः क्षितेस्तले ॥ ४६ ॥

इति श्रीमाहेश्वरतन्त्रे गुप्तसारे शिवोमासंवादे
त्रयोदशं पटलम् ॥ १३ ।

## चतुर्दशं पटलम् ॥ १४ ॥

पार्वत्युवाच ॥

देवेश परमेशान धूर्जटे नीललोहित ।
ततः किमभवत्तत्र तन्मे ब्रूहि सदाशिव ॥ १ ॥

शिव उवाच ॥

रूक्षं वचनमाश्रुत्य सहसा जातसम्भ्रमाः ।
गतप्राणा इवासंस्ताः प्राणरूपी प्रियोभवत् ॥ २ ॥
दुःखाकुला रुद्धवाचो निरुछ्वासा व्रजस्त्रियः ।

अश्रूण्यमुञ्चन्नेत्रेभ्यस्तापेनोष्णतराणि च ॥ ३ ॥
अब्रुवन् धैर्यमालम्ब्य तामस्यो विरहातुराः ।
किमेवं भाषसे कृष्ण विचाररहितं वचः ॥ ४ ॥
अविचारितवक्तारो लोके मूर्खा इति स्थिताः ।
तस्माद्विचार्य वक्तव्यं सर्वज्ञोसि यतः स्वयम् ॥ ५ ॥
वयं गोप्यो भवद्दास्यस्त्वच्चित्तास्त्वत्परायणाः ।
त्वत्प्राणास्त्वन्मयाः कृष्ण नान्यत्पश्यामि किञ्चन ॥ ६ ॥
नास्माकं पतयः पुत्रा भ्रातरो न च बान्धवाः ।
वयं त्वदेकशरणाः त्वन्न्यस्तात्मकलेवराः ॥ ७ ॥
अहं स्त्री मत्पतिश्चायमिति यासां मतिः स्थिता ।
तासामयं परो धर्मो यस्त्वया चोपदिश्यते ॥ ८ ॥
यस्याधिकारो यद्धर्मे त्यजेत्तं न कदाचन ।
नोचेत्सन्न्यासिनः कुर्युः कथं न गृहिवादिनाम् ॥ ९ ॥
देहातीता गृहातीता लोकातीता वयं प्रभो ।
त्वामेव शरणं प्राप्ताः कथमर्हन्ति लौकिकम् ॥ १० ॥
विकारेऽहमिति भ्रान्तिः पुत्रदारधनादिषु ।
तदध्यासवशात्तेषां देहधर्माधिकारिता ॥ ११ ॥
प्रवृत्ते ह्यधिकारे तु धर्मं लुम्पति यः खलः ।
पतत्येव न सन्देहो यतः स वासनान्तरे ॥ १२ ॥
अहं ममायमित्येषः पतिपुत्रादिषु स्थितः ।
समूलमाग्रहो नष्टः कथं तत्र नियुञ्जसि ॥ १३ ॥
न प्रेम्णि बाधकं किञ्चित्प्रेमस्थितिरलौकिकी ।
वयं प्रेमसमाकृष्टा निशि प्राप्ता वनान्तरे ॥ १४ ॥
अविद्वानिव तद्विद्वानपि त्वं किं प्रजल्पसि ।
लोकवेदपथांस्त्यक्त्वा समूलान्विपिनान्तरे ॥ १५ ॥
निशि स्त्रियो वयं प्राप्तास्ता अपि त्यजता त्वया ।

विनाशिता प्रेमरीतिः कृतघ्नत्वमुपार्जितम् ॥ १६ ॥
वयं तु न गमिष्यामस्त्यक्तसर्वपरिग्रहाः ।
विरहाग्नौ तनूर्हुत्वा त्वामेष्यामो न संशयः ॥ १७ ॥
तस्माद्भजस्व गोविन्द नोपेक्ष्या गोपिका वयम् ।
त्यजाग्रहमिमं कृष्ण प्रेमरीतिं समाश्रय ॥ १८ ॥
इत्यावेदितमाकर्ण्य गोपिकानां यथार्थतः ।
वचःपीयूषधाराभिस्तासामाह्लादयन्मनः ॥ १९ ॥
उवाच वचनं कृष्णो मधुरस्मितवीक्षणः ।
धन्यातिधन्या भो गोप्यो यूयं मत्प्राणवल्लभाः ॥ २० ॥
न निवार्याः कदाचिद्वा भवत्प्राणमयेन मे ।
निषेधो वाग्विलासोत्थो मयि युञ्ज्यो न कर्हिचित् ॥२१॥
जानेऽहं भवतीः प्रेमबद्धा एव मयि स्फुटम् ।
त्वद्वचः श्रोतुकामत्वान्निषेधोयं न वास्तवः ॥ २२ ॥
जिज्ञासूनामसन्दिग्धो रूपितो धर्मनिर्णयः ।
पतिसेवापरं शास्त्रं मामेव पतिरूपिणम् ॥ २३ ॥
निरूपयत्यलब्धत्वाद्भावनामात्रमन्यतः ।
भवतीनां पतिस्तस्मादहमेव सनातनः ॥ २४ ॥
इत्युक्त्वा मध्यगस्तासां रेमे रामाभिरन्वितः ।
पृथगालिङ्ग्य ताः सर्वा बिम्बाधरसुधां पपौ ॥ २५ ॥
हासयन् प्रहसन्कृष्णो नानाक्रीडाकुतूहलैः ।
नीवीराकर्षयन्कासां कासामास्यं पिबन्नपि ॥ २६ ॥
आलिङ्गतीर्विहायान्या अन्यां आलिङ्गयन्नपि ।
पिबन्नधरपीयूषं कासाञ्चिदाङ्घ्रिरादशत् ॥ २७ ॥
सीत्कृतान्यसृजन् गोप्यः अर्द्धमीलितलोचनाः ।
एवं रसवशः कृष्णो रेमे तन्मण्डले प्रभुः ॥ २८ ॥
अत्यातुरमिति ज्ञात्वा कृष्णं स्ववशमागतम् ।

मेनिरे गोपिकाः सर्वाः स भावोपि रासात्मकः ॥ २९ ॥
रसः परिणतः सोयं मानरूपेण निश्चितम् ।
एषा शृङ्गारमर्यादा रसशास्त्रनिरूपिता ॥ ३० ॥
कारणं शृणु तत्रापि यन्न वाच्यं कथञ्चन ।
अक्षरस्य दिदृक्षाय या पूरणार्थमपेक्षिता ॥ ३१ ॥
अन्तर्द्धानं च तत्रापि मानो हेतुतयोद्गतः ।
अथ मानवतीर्वीक्ष्य तासामेव हृदि प्रभुः ।
रसरूपो विलीनोभून्मानमुत्सादयन्निव ॥ ३२ ॥
अक्षरस्य मनोवृत्तिरावेशरहिता पुनः ।
स्थानं प्राप्ता रासलीलावासनावासिता सती ॥ ३३ ॥
तया विहितविज्ञानो मण्डलस्थमतर्कयत् ।
एवं ददर्श भगवान् रासक्रीडामहोदयम् ॥३४॥

इति श्रीमाहेश्वरतन्त्रे शिवपार्वतीसंवादे
चतुर्दशं पटलम् ॥ १४ ॥

---

## पञ्चदशं पटलम् ॥ १५ ॥

शिव उवाच ॥

अन्तर्भूते परानन्दे द्विधा च हृदि मण्डले ।
अदृष्ट्वा निजनाथं तमतप्यन्विरहातुराः ॥ १ ॥
मनस्यानन्दसम्पूर्णे लतावृक्षादिषु स्फुटम् ।
चैतन्यस्फूर्त्तिरभवत्ततोऽपृच्छंस्तरूँल्लताः ॥ २ ॥
यो नादादुत्तरं तं तं निनिन्दुर्धूतनिश्चयाः ।
कृष्णावेशात्कृष्णभावं गताः कृष्णोहमूचिरे ॥ ३ ॥
एवं नानाविधा लीलाः कुर्वन्त्यो विरहातुराः ।
तामसीशिक्षया सर्वा एकीभूत्वाथ यूथशः ॥ ४ ॥

व्रजस्य लीलानुकृतिं चक्रुस्तत्प्राप्तिसाधनम् ।
पूतनावधमारभ्य यावद्दाम्ना निबन्धनम् ॥ ५ ॥
व्रजलीला(१)विधेर्भावश्चित्तगो(२)भूत्परात्मनः ।
नित्याखण्डा व्रजस्येयं लीला वेदेनुवार्णिता ॥ ६ ॥

पुनरक्षरचित्तवृत्तिराविष्टाविर्बभौ ततः ।
सखीनां मण्डलादेव विस्मितोदारमुखाम्बुजः ॥ ७ ॥
तडित्प्रकाशवसनस्तारहाराविराजितः ।
स्फुरत्कटाक्षमालाभिः सुधाभिरिव शीकयन् ॥ ८ ॥

तं दृष्ट्वा विरहाक्रान्ता दुःखमात्यन्तिकं गताः ।
पुनरानन्दसन्दोहमग्ना एव हि केवलम् ॥ ९ ॥
रुदन्तीनां मुखान्यश्रुप्रवाहकलुषान्यपि ।
स्ववस्त्राञ्चलमादाय करेणामृजदच्युतः ॥ १० ॥

आलिङ्गनानि चुम्बानि नानाभावनिदर्शनम् ।
चकार भगवांस्ताभी रसलीलामहोदयम् ॥ ११ ॥
सखीभिर्विरहे दुःखमनुभूतमभूच्च यत् ॥
तच्चानन्दसुधाम्भोधौ विलापितमभूदहो ॥ १२ ॥

जलक्रीडां ततश्चक्रे यमुनाया जले शुचौ ।
तीरे स्थित्वा पुनर्गोप्यो विवादांश्चक्रिरे ततः ॥१३॥
समाहिता भगवता परमानन्दसम्प्लुताः ।
इत्येषा रासलीलायाः स्थितिः प्रोक्ता तवानघे ॥१४॥

---

(१) "व्रजलीलाविभवतश्चित्तगो" इत्यपि पाठः ।

(२) रासलीलावसाने जलक्रीडानन्तरं श्रीयमुनातटमण्डपस्थसखीमध्यगतः भगवान् स्मृतरासमध्यान्तर्धानेन सखीगणेन "अन्तर्हिते भवति मया सम्पूर्णतया व्रजलीला कृतेति" यदा विज्ञापितस्तदैव सम्पूर्णव्रजलीलां स्मृतिपथारूढां कृतवानिति सम्प्रसादो नवरङ्गस्वामी किलाज्ञापयति ।

शिव उवाच ॥

अवशिष्टस्य कामस्य सखीनां पूरणाय च ।
आविश्चकार कालमायां पुनस्तां पुरुषोत्तमः ॥ १५ ॥
अपश्यदक्षरः स्वप्नं कालमायाविजृम्भितम् ।
प्रातर्नन्दगृहे सुप्तः प्रबुद्धोस्मीति निश्चितम् ॥ १६ ॥
सखीश्च ददृशे सर्वा गोपगेहेभ्य उत्थिताः ।
नमूलावेशतः(१) किञ्चित् कूटस्थस्यैव वासनाः ॥१७॥
उज्जृम्भिता बहुविधा तदद्भुतमिवाभवत् ।
कृपाद्याः श्रुतयश्चापि कालमायाप्रपञ्चगाः ॥ १८ ॥
अत्युग्रविरहावेशादुद्धवस्यापि शिक्षया ।
कूटस्थान्तर्हृदि स्फूर्जद्व्रजलीलारसोदधौ ॥ १९ ॥
निम्नगा इव तिष्ठन्ति तच्चित्तस्य रसस्पृशः ।
अथ कंससमादिष्टो ह्यक्रूरो गोकुलं गतः ॥ २० ॥
तेन साकं गते कृष्णे गोपिका विरहातुराः ।
दुःखेन निन्युर्दिवसान् तत्कथा(२)ख्यापनादिभिः ॥२१॥
हत्वा कंसं मल्लयुद्धे चाणूरं मुष्टिकं तथा ।
बद्धकच्छोल्लसद्धूलिधूसरश्चास्रगांकितः ॥ २२ ॥
पश्यतां सर्वलोकानां प्राप्तः कारागृहं गृहम् ।
देवकी वसुदेवश्च यत्रैवास्तामुत्सुकौ ॥ २३ ॥
ववन्दे चरणौ मातुः पितुः प्रणयविह्वलः ।
बद्धाञ्जलिर्जगादेदं क्षम्यतामिति मां प्रति ॥ २४ ॥
प्रसाद्य पितरं कृष्णो मातरं च विशेषतः ।
यमुनायां ततः स्नात्वा शुचिर्दिव्याम्बरं दधौ ॥ २५ ॥

---

(१) "ए तीसरा इएड नया श्रया जो अब, अक्षर की सुरत का सब" ॥ इति पूर्णानन्दवचनमपि विषयमेनं पोषयति ।
(२) तत्कथोल्लापनादिभिरित्यपि पाठः ।

जरासन्धादिकान् हत्वा समुद्राब्धे सुलोचनाः ।
षोडशैव सहस्राणि शतमष्टोत्तरं तथा ॥ २६ ॥
हत्वासुरभरं पृथ्व्याः यादवैरुपबृंहितम् ।
भारं जिहीर्षुर्भगवान् कुले शापमपातयत् ॥ २७ ॥
शापदग्धधियः सर्वे यादवाश्च परस्परम् ।
विनेशुर्भगवांस्तत्र प्रभासे रहसि स्थितः ॥ २८ ॥
चतुर्भुजः कञ्जपलाशलोचनः पीताम्बरः कौस्तुभशोभिताकृतिः ।
स्वपाश्वजन्याम्बुजचक्रसद्गदः प्रगल्भसङ्गीतगुणो बभौ हरिः ॥२९॥
व्याधेन शरसंस्पृष्टः पादे मृगविशङ्कितः ।
वैकुण्ठमगमत्साक्षाद्धरिः कमललोचनः ॥ ३० ॥
कालमायागृहीताङ्गा मूलसख्यस्तुयाः स्थिताः ।
ता अपि स्वप्नलीलायां विचित्राकृतयोऽभवन् ॥ ३१ ॥
तद्वासनास्तासु लीना भविष्यन्ति यदा प्रिये ।
बोधमाप्स्यति कूटस्थः प्रलयोयं महान् शिवे ॥ ३२ ॥
मोहनाशे भविष्यन्ति सर्वे ब्रह्ममया इमे ।
इत्येतत्ते समाख्यातं यत्पृष्टोहं त्वया शिवे ॥ ३३ ॥
गुह्याद्गुह्यतरं शास्त्रमिदमुक्तं मया नघे ।
गोपितव्यं प्रयत्नेन जननीजारगर्भवत् ॥ ३४ ॥

इति श्रीमाहेश्वरतन्त्रे शिवपार्वतीसंवादे
पञ्चदशं पटलम् ॥ १९ ॥

## षोडशं पटलम् ॥ १६ ॥

श्रीदेव्युवाच ॥

देवेश भगवन् शम्भो यत्त्वयोक्तमलौकिकम् ।
तच्छ्रुत्वा हृदयं मेद्य मज्जते विस्मयोदधौ ॥ १ ॥
तत्रोक्तं यत्त्वया देव प्रिया भगवतस्तु याः ।
कामशेषानुभूत्यर्थमिहासन्निति शङ्कर ॥ २ ॥
अवशिष्टः कथं कामोऽनुभूतस्ताभिरीश्वर ।
कथं वा लक्षयेयुस्ता लक्षणैरिति तद्वद ॥ ३ ॥
मर्त्यलोकं गतानां च कृष्णस्त्रीणां महेश्वर ।
गुरुभावं गतोसि त्वं प्रोक्तवानसि यद्रहः ॥ ४ ॥
योगिनो ज्ञानिनो भक्ताः कर्मनिष्ठास्तपोधनाः ।
तेषां गुरुस्त्वमाद्यो हि तत्तत्त्वोपदेशकः ॥ ५ ॥
त्वामनादृत्य ये पापाः प्रवर्त्तन्ते स्वकर्मसु ।
न तेषां जायते सिद्धिः कोटिकल्पशतैरपि ॥ ६ ॥
त्वमेव सर्वधर्माणां कर्त्ता वक्ताभिरक्षिता ।
त्वद्भक्त्यैव हि संसिद्धिर्नृणां भवति कर्मजा ॥ ७ ॥
त्वदुक्त्या बोधमाप्स्यन्ति भूतले भगवत्प्रियाः ।
मर्त्यदेहगतानां तु गुरुभूतोसि शङ्कर ॥ ८ ॥
तस्मादवश्यमेवैतदुपदेष्टव्यमीश्वरः ।
मय्यपि कृपया नूनं रहस्यमिदमद्भुतम् ॥ ९ ॥

शिव उवाच ॥

धन्यासि देवदेवेशि ललितं ते परं वचः ।
श्रुत्वा प्रसन्नहृदयः कथयिष्ये कथां शुभाम् ॥ १० ॥
अहं लोकगुरुः साक्षात् धर्मवक्ता जगत्त्रये ।
तं मां निन्दन्ति ये मूढास्तेषां सिद्धिः कथं भवेत् ॥११॥

नानादैवतसद्भक्त्या नानाधर्मैर्व्यवस्थिताः ॥
तत्र तत्रोपदिष्टोऽहं तं मां निन्दन्ति पामराः ॥ १२ ॥
किं न कुर्वन्ति ते मूढाः यतो माया महेशितुः ।
बलीयसी विमोहार्हान् विमोहयति चापरान् ॥ १३ ॥
भविता फलरूपश्च तेषां धर्मः सनातनः ।
ये(१)न निन्दन्ति देवांश्च धर्मान्वेदान्मतानि च ॥ १४ ॥
पाखण्डवादनिरता वेदधर्मविनिन्दकाः ।
नरकं प्रतिपद्यन्ते न निवर्त्तन्ति कर्हिचित् ॥ १५ ॥
इदमेव लक्षणं देवि मर्त्यलोकगतासु तत् ।
अक्षरः परमात्मा च स्वभिन्नौ पुरुषावुभौ ॥ १६ ॥
शब्दब्रह्म परब्रह्म ह्येतदप्यद्वयं प्रिये ।
शब्दब्रह्मोदिता धर्माः कर्मज्ञानादयः प्रिये ॥ १७ ॥
ते सर्वे स्वात्मबोधाय यदि कामविवर्जिताः ।
धर्मानुष्ठातृनिन्दाभिर्धर्मा एव विनिन्दिताः ॥ १८ ॥
तत्र धर्मस्य निन्दाभिः शब्दब्रह्मैव निन्दितम् ।
तन्निन्दया परब्रह्म अक्षरः स्याद्विगर्हितम् ॥ १९ ॥
गर्हिते ह्यक्षरे देवि गर्हितः पुरुषोत्तमः ।
स्वभर्तुर्निन्दया देवि तत्प्रियाणां कुतो गतिः ॥ २० ॥
न निन्देन्मनसा वाचा धर्मान्वेदपथान् शिवान् ।
ब्राह्मणान्कर्मनिष्ठांश्च हविः कामदुघाश्च गाः ॥ २१ ॥
तस्मादित्यादिकं सर्वं मनसा वेद्य तत्वतः ।
निन्दाद्वेषादिरहितो भजते पुरुषोत्तमं ॥ २२ ॥
प्रतिविंद्याद्देवदेवेशि कृष्णस्यैव प्रियेति ताम् ।

(१) बहुधाधुनिका मूढधियः "सुखमिति स्वर्गः' दुःखमिति नरक" इति अभिधायान्यत्र स्वर्गनरकस्थानं पृथक् न मन्यन्ते तदसत्, चतुर्दशलोकानां मध्ये इत ऊर्ध्वं तृतीयं स्वः, अधः सप्तमः पातालाख्यो लोकस्तत्रैव दक्षिणाशायां निरयाणामनेकेषां स्थितिरिति सत्यम् ।

सर्वमक्षरसम्भूतं विदित्वानन्यभावतः ॥ २३ ॥
प्रणमेन्मनसा वाचा तमाहुः कृष्णावल्लभाम् ।
पातिव्रत्यमिदं देवि तदन्यदविभावितं ॥ २४ ॥
स एवेदं बभूवाग्रे पश्चादप्येवमेव सः ।
क एवान्योस्ति देवेशि तत्त्वदृष्ट्यावलोकने ॥ २५ ॥
तस्मादिदं पातिव्रत्यं कृष्णस्त्रीणां मयोदितं ।
पातिव्रत्यपरिज्ञानं यो न जानाति केवलं ॥ २६ ॥
न तस्मिन्वासनाक्लेशो निश्चितं सुरवन्दिते ।
पातिव्रत्यधर्ममिमं सद्गुरोः शास्त्रतोपि वा ॥ २७ ॥
निशम्याप्नोति तन्निष्ठां तमाहुः कृष्णवल्लभां ।
केचिद्वदन्ति वै मूढाः पातिव्रत्यमितोन्यथा ॥ २८ ॥
एक एव पतिः सेव्यो नान्यो मान्यः कदाचन ।
अन्यस्य सेवया लोके योषित्सा पतिता भवेत् ॥ २९ ॥
पातिव्रत्यमिदं देवि लौकिकं न त्वलौकिकम् ।
अनीश्वरः परिच्छिन्नः सदोषो लौकिकः पतिः ॥ ३० ॥
योषित्सापि तथा लोके पातिव्रत्यमतस्तथा ।
ईश्वरस्तु विभुः साक्षाद्विश्वात्मा विश्वविग्रहः ॥ ३१ ॥
स एव सर्वरूपैश्च नामभिः ख्यातिमागतः ।
सर्वनामस्वरूपं च ज्ञात्वा ब्रह्म सनातनम् ॥ ३२ ॥
दृष्ट्याऽविषमया देवि सर्वत्र परिपश्यति ।
पातिव्रत्यमिदं भद्रे मयैतत्कथितं शुभम् ॥ ३३ ॥
इत्येतन्निर्णयाज्ञानाद्भ्रमन्ति विमोहिताः ।
षड् दर्शनानि मेऽङ्गानि पादौ कुक्षी करौ शिरः ॥ ३४ ॥
तेषु भेदं तु यः कुर्यान्मदङ्गच्छेदको हि सः ॥
एवं पतिव्रताधर्मं सम्यक् ज्ञात्वा गुरोर्मुखात् ॥ ३५ ॥
पतिं परिचरेद्यस्तु तमाहुः कृष्णवल्लभाम् ।

श्रुत्वा कृष्णकथालापं यद्वपुः पुलकाङ्कितम् ।
आनन्दाश्रुजलं नेत्रे तमाहुः कृष्णवल्लभाम् ॥ ३६ ॥

श्री पार्वत्युवाच ॥

कामसङ्कल्परहितं कर्म वर्णाश्रमोचितं ।
कस्मात्करोति यस्येच्छा कामसङ्कल्पवार्जिता ॥ ३७ ॥
अनुद्दिश्य फलं देव न बालोपि प्रवर्तते ।
ब्रह्मसृष्टि(१)गतो जीवः कस्माद्व्यर्थं प्रवर्तते ॥ ३८ ॥
मोहसृष्टिसमुद्भूताः स्वर्गादिफलमोहिताः ।
ते कर्मणि प्रवर्त्तन्ते न तच्चित्रं महेश्वर ॥ ३९ ॥
कृष्णप्रियाः कृष्णरूपा (२)वासनाभिः समागताः ।
कथं ताः कर्माणि व्यर्थे नियोजयसि शङ्कर ॥ ४० ॥

शिव उवाच ॥

अप्रबुद्धः प्रबुद्धो वा कर्म कुर्यात्सदाहितम् ।
सकामं निन्दितं कर्म मुमुक्षुं प्रति मानिनि ॥ ४१ ॥
क्रियावान् पुरुषः श्रेष्ठो भवाब्धिं तरते सुखम् ।
क्रियाविरहिता लोके धर्मभ्रष्टा विभान्ति मे ॥ ४२ ॥
अश्रद्दधानात् धर्मेषु विद्वांसः कृपया विभो ।
नोपदेक्ष्यन्ति शास्त्रार्थमपरे बीजवत्प्रिये ॥ ४३ ॥
न च तत्वस्य निर्धारः शास्त्रहीनस्य जायते ।
तदर्थे निर्णयं शास्त्रं त्यक्त्वान्यत् साधनं मुधा ॥ ४४ ॥
श्वपुच्छालम्बनं यद्वत्तितीर्षोः सागरं यथा ॥
विना तत्वस्य निर्धारं शङ्कापि न निवर्त्तते ॥ ४५ ॥
शङ्कापङ्काङ्कमलिने हृदये नैव सुन्दरि ।
प्रेमार्कप्रतिबिम्बः स्याद्येन कृष्णः प्रभासते ॥ ४६ ॥

---

(१) ब्रह्मसृष्टिवासनेह ह्युत्तमजीवानामुपरि संस्थिता मायामनुभवति ।
(२) कामनाभिरित्यपि पाठः ।

तस्माद्वर्णाश्रमाचारभ्रष्टे नरचतुष्पदे ।
नैव ज्ञानं तथा भक्तिर्यथार्थोदेति निश्चयः ॥ ४७ ॥
नित्यं नैमित्तिकं तस्मात्कर्तव्यं तदशङ्कया ।
काम्यं निषिद्धं यत्कर्म तत्तुदूरात्परित्यजेत् ॥ ४८ ॥
नित्यं नैमित्तिकं कर्म फलं बध्नाति न क्वचित् ।
अननुष्ठानमात्रेण प्रत्यवायस्तु जायते ॥ ४९ ॥
अनुष्ठाने फलं नास्ति चित्तशुद्धिं विनेतरत् ।
काम्यादिकर्मकर्त्तारो देहभाजः पुनः पुनः ॥ ५० ॥
तस्मात्काम्यं परित्यज्य नित्यं विद्वान् समाचरेत् ।
अप्रबुद्धदशायां च प्रबुद्धायामपि प्रिये ॥ ५१ ॥
कर्त्तव्यं सहजं कर्म न तान्विघ्नः प्रभूयते ।
प्रबुद्धस्यापि यत्कर्म तत्र मे निर्णयं शृणु ॥ ५२ ॥
वार्त्तामात्रेण विज्ञानं प्रबोधो नैव वास्तवः ।
साक्षात्प्रबोधे देवेशि देहः सद्यो विलीयते ॥ ५३ ॥
तस्माच्छाब्दप्रबोधोयं परमार्थो न विद्यते ।
संसारमोहनाशाय शाब्दबोधो न हि क्षमः ॥ ५४ ॥
न निवर्त्तेत तिमिरं कदाचिद्दीपवार्तया ।
ज्वलितः पतितो देहो यदा विरहवह्निना ॥ ५५ ॥
तदा विंद्यादात्मबोधमन्यथा शाब्द एव सः ।
शाब्दप्रबोधमात्रेण नित्यं नैमित्तिकं त्यजेत् ॥ ५६ ॥
प्रत्यवायी स विज्ञेयो नासौ बोधमवाप्नुयात् ।
यावद्देहाभिमानः स्यान्ममता तावदेव हि ॥ ५७ ॥
तावद्देहानुबन्धित्वात्कर्म कर्तव्यमेव हि ।
शास्त्रोक्तं कर्म कर्त्तव्यं विकर्म विनिवृत्तये ॥ ५८ ॥
विकर्मणि प्रवृत्तिस्तु नृणां स्वाभाविकी यतः ।
विकर्मणः प्रभावेन देहभाजः पुनः पुनः ॥ ५९ ॥

नित्यं नैमित्तिकं देवि फलं सङ्कल्पवर्जितं ।
चित्तं शोधयते साध्वि न तु देहाय जायते ॥ ६० ॥
का हानिस्तत्र देवेशि निष्कामाचरणे नृणां ।
इत्येवं निर्णयाज्ञानान्मूढाः पण्डितमानिनः ॥ ६१ ॥
त्यजन्तः शोधनं कर्म पापचित्ता भ्रमन्ति वै ।
सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीति वादिनम् ॥ ६२ ॥
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ।
देहेन्द्रियसुखासक्तो(१) ब्रह्मज्ञोस्मीति यो वदेत् ॥ ६३ ॥
न तं वैज्ञानिनं मन्ये मणिभूषितगर्दभम् ।
ब्रह्मवादं पुरस्कृत्य वर्णाश्रमनिबन्धनाः ॥ ६४ ॥
विलुंपन्तः क्रियाः सर्वाः लोकनाशकरा हि ते ।
ब्रह्मवादः कलियुगे गेहे गेहे जने जने ॥ ६५ ॥
भविष्यति ततः काले धर्मकर्मविलोपनं ।
धर्मकर्मविहीनानां पापमेवानुसेवतां ॥ ६६ ॥
तेषामासुरजीवानां नरकं न निवर्त्तते ।
तस्मादेवं सुनिर्णीय धर्मकर्मपरायणाः ॥ ६७ ॥
कृष्णमेवानुसेवन्तस्तान्मन्ये कृष्णवल्लभाः ।
इति ते कथितं देवि वासनालक्षणं मया ॥ ६८ ॥
यज्ज्ञात्वा ह्यचिरादेव स्वात्मबोधः प्रजायते ॥ ६९ ॥

इति श्रीपञ्चरात्रे श्रीमाहेश्वरतन्त्रे शिवपार्व
तीसंवादे षोड्शं पटलम् ॥ १६ ॥

(१) सुखासक्तमिति मूलपाठः ।

## ॥ सप्तदशं पटलम् ॥ १७ ॥

॥ पार्वत्युवाच ॥

भगवान् देवदेवेश निर्णयः साधुसंमतः ।
कथितोयं सदाचारलक्षणः पावनो नृणाम् ॥ १ ॥
धर्मकर्मविहीनानां सदाचारं विमुञ्चतां ।
मलीमसानां दुष्टानां ब्रह्मसिद्धिर्न जायते ॥ २ ॥
यथा जह्यात् शनैरम्भः सोपानानि क्रमात् क्रमात् ।
तथा देहानुसम्बन्धान् शनैर्जह्यात् स पण्डितः ॥ ३ ॥
देहाभिमाने गलिते विज्ञाते स्वात्मनि स्वयम् ।
अश्मकाञ्चनयोस्तुल्यं भावमाप्तौ समस्थितौ ॥ ४ ॥
उदासीनारिमित्रेषु स्वानन्दानुभवोदये ।
न कर्मभिस्तदा कार्यं सम्राजो भिक्षया यथा ॥ ५ ॥
यथामृतेन तृप्तस्य नाहारेण प्रयोजनम् ।
स्वात्मानन्दोदये तद्वत्कर्माभिर्न प्रयोजनम् ॥ ६ ॥
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ।
स्वात्मानन्दोदये जाते कर्मणा किं प्रयोजनम् ॥ ७ ॥
साध्वेतद्व्याहृतं देव त्वया भागवता प्रभो ।
परं वेदितुमिच्छामि सन्देहाकुलमानसा ॥ ८ ॥
ब्रह्मवादः कलियुगे गेहे गेहे जने जने ।
धर्मकर्मविलोपार्थं भविष्यति न संशयः ॥ ९ ॥
इति यज्ञवता प्रोक्तं तत्र मे संशयोमहान् ।
ब्रह्मवादेन सदृशं पवित्रं नहि किञ्चन ॥ १० ॥
तपो दानं क्रिया योगः स्वाध्यायनियमा यमाः ।
समाप्यन्ते महेशान ब्रह्मज्ञानोदयादनु ॥ ११ ॥
ब्रह्मज्ञानैकनिष्ठानां महादेव महात्मनां ।
सर्वं सम्पूर्णतां याति नित्यं नैमित्तिकं च यत् ॥ १२ ॥

ब्रह्मज्ञानेन मुच्येत यदि चेद्विश्वघातकः ।
न तस्य कर्मलोपोऽस्ति पद्मस्येवाम्भसा यथा ॥ १३ ॥
कलिस्तु सुमहान् पापस्तामसात्मा मलीमसः ।
अधर्मे रमते नित्यं येन स्पृष्टा प्रजा भुवि ॥ १४ ॥
यत्रोदेष्यन्ति पाषण्डा धर्मनिर्नाशहेतवः ।
वर्णानां सङ्करो यत्र स्वस्वकर्मविलुम्पतां ॥ १५ ॥
कन्या विक्रयिणश्चैव वेदविक्रयिणो द्विजाः ।
म्लेच्छाचाररता लोके म्लेच्छभाषाविशारदाः ॥ १६ ॥
म्लेच्छान्नपानपुष्टाङ्गा धर्मकर्मविनिन्दकाः ।
स्वाहास्वधाविरहिताः शिश्नोदरपरायणाः ॥ १७ ॥
परस्त्रीपरधनलोभाय हेतुवादपरायणाः ।
कलौ सर्वे भविष्यन्ति सर्वधर्मविवर्जिताः ॥ १८ ॥
ब्रह्मवादः कलियुगे गेहे गेहे जने जने ।
असम्भाव्यमिवाभाति ममैतत्सुरपूजित ॥ १९ ॥
कलावपि महापापे प्रवृत्तं ब्रह्मकीर्तनं ।
तत्कथं धर्मलोपाय लोकानां मेऽत्र विस्मयः ॥ २० ॥
विचार्य ब्रूहि मे देव कृपया करुणानिधे ।

शिव उवाच ॥

साधु पृष्टं त्वया भद्रे सर्वलोकैकहेतवे ॥ २१ ॥
तदहं ते प्रवक्ष्यामि शृणुष्वैकाग्रमानसा ।
यस्य श्रवणमात्रेण धर्मश्रद्धा प्रजायते ॥ २२ ॥
पुरा द्वादशवार्षिक्यामनावृष्ट्यामनम्भसि ।
दवाग्न्यर्कविनिर्दग्धवनकन्दादिसम्पदि ॥ २३ ॥
(१)क्षुत्तृट्परीता वै काश्चित्प्रजा गिरिगुहाश्रिताः ।
परस्परं भक्ष्यमाणा मम्रिरे व्याधिकर्षिताः ॥ २४ ॥

---

(१) "क्षुतृड्भ्यां च परीतापैः" इत्यपि पाठः ।

गौतमस्याश्रमे रम्ये तपतीतीरसंस्थिते ।
क्षुधार्ता ब्राह्मणाः प्राप्ता देहनिर्वाहकाम्यया ॥ २५ ॥
अलक्षन् गौतममुनिं शिष्यराशिपरिवृतम् ।
ब्रह्मतेजःप्रभावेन ज्वलन्तमिव पावकम् ॥ २६ ॥
अन्नान्युत्पाद्य तपसा पुष्णन्तं शिष्यसंहतिम् ॥
प्रणेमुर्ब्राह्मणाः सर्वे निबद्धकरसम्पुटाः ॥ २७ ॥

ब्राह्मणा ऊचुः ॥

त्राहि त्राहि मुने प्राप्तान् शरण्यान् शरणप्रद ।
जाठरेणाग्निना तप्ता वयं सर्वे द्विजातयः ॥ २८ ॥
अलभ्यं कन्दमूलादि निर्जलेक्षितिमण्डले ।
न प्रवर्त्तन्त एवेह क्रिया निगमचोदिताः ॥ २९ ॥
अन्नं वै प्राणिनां प्राणाः प्राणदोऽन्नं ददाति यः ।
तस्मादन्नप्रदानेन प्राणदो नः पिता भवान् ॥ ३० ॥
एकतः सकला धर्मा यज्ञाः सर्वस्वदक्षिणाः ।
तपांस्युग्राणि दानानि व्रतानि सुबहून्यपि ॥ ३१ ॥
न तुलामधिगच्छन्ति ह्यन्नदानस्य वै मुने ।
क्षुत्पिपासे प्राणधर्मौ क्षुधया कृष्यते वपुः ॥ ३२ ॥
वपुःकार्श्ये चेन्द्रियाणि कर्षितानि भवन्ति वै ।
म्लानेन्द्रियमनोवृत्तेः विनाशित्वं प्रपद्यते ॥ ३३ ॥
मनोम्लानौ बुद्धिलयस्ततो ध्यानं निवर्तते ।
अध्यायतः कुतः स्वात्मानुभूतिर्भवति प्रभो ॥ ३४ ॥
तस्मादन्नेन सदृशं दानं नास्ति जगत्त्रये ।
म्लानेन्द्रियमनोवृत्तेः क्षुधया पीडितस्य च ॥ ३५ ॥
अन्नाभिकाङ्क्षिणो येन प्राणतृप्तिः कृता मुने ।
तेन दत्तं हुतं जप्तं तपस्तप्तं शुभं कृतम् ॥ ३६ ॥

पृथ्वी रत्नेन सम्पूर्णा तेन दत्ता द्विजातये ।
तस्यैव ज्ञानसंसिद्धिर्भवतीति श्रुतं हि नः ॥ ३७ ॥
किमन्यज् ज्ञाप्यते तुभ्यं सर्वज्ञाय मुनीश्वर ।
तथाविधेह्यंग तूर्णं यथा नः प्राणधारणा ॥ ३८ ॥
शरीमूलमन्नं हि धर्ममूलमिदं वपुः ।
चित्तशुद्धौ विशेषेण धर्म एव हि कारणम् ॥ ३९ ॥
भक्तिर्ज्ञानं च वैराग्यं (१)शुद्धचित्तस्य जायते ।
सर्वार्थसाधनं तस्माच्छरीरमिदमुच्यते ॥ ४० ॥
पुनर्ग्रामं पुनर्वित्तं पुनः क्षेत्रं पुनर्गृहम् ।
पुनः शुभाशुभं कर्म न शरीरं पुनः पुनः ॥ ४१ ॥
शरीररक्षणायासः कर्त्तव्यः सर्वथा बुधैः ।
नहीच्छन्ति तनुत्यागमपि कुष्ठादिरोगिणः ॥ ४२ ॥
तद्गोपितं स्याद्धर्मार्थं धर्मो ज्ञानार्थमेव च ।
ज्ञानं तु ध्यानयोगार्थमचिरात्तेन मुच्यते ॥ ४३ ॥
तपः प्रभावमास्थाय पाह्यस्मान् कृपणानिह ।
इत्येवं वचनं तेषां ब्राह्मणानां तपोधनः ॥ ४४ ॥
दीनानां क्षुधयार्त्तानां निशम्य करुणोभवत् ।

गौतम उवाच ।

साधु साधु महाप्राज्ञा न्याय्यमेतद्वचो हि वः ॥ ४५ ॥
धर्मार्थकाममोक्षाणां साधनं देह उच्यते ।
रक्षितव्यः प्रयत्नेन तस्माद्देहो मुनीश्वराः ॥ ४६ ॥
देहत्यागं न चेच्छन्ति ये भक्ता ये च साधकाः ।
महापापादिभिर्लिप्तः सर्वकर्मविनिर्गतः ॥ ४७ ॥
पृथिवीभारभूतो यो देहस्त्याज्यः स एव हि ।
पितृदेवातिथीनां च कर्माणि यः सुपुण्यकृत् ॥ ४८ ॥

---

(१) "शुद्धिश्चित्तस्य" इत्यपि पाठः ।

ईश्वरध्यानयोग्यश्च स कथं त्यागमर्हति ।
कर्मणापि निषिद्धेन देहः पोष्य इहापदि ॥ ४९ ॥
दग्ध्वा तानि पुनः सोऽयं नयते हि गतिं पराम् ।
यावद्देहस्थितिर्लोके तावत्कुशलमाचरेत् ॥ ५० ॥
जलबुद्बुदतुल्योयं यस्मादेषो विनश्वरः ।
अस्थिरेण शरीरेण स्थिरधर्मं समाचरेत् ॥ ५१ ॥
सर्वं ब्रह्ममयं पश्यन् मुच्यते मोहसङ्कटात् ।
स चाहं तपसा तस्मात्करिष्ये वः समीहितम् ॥ ५२ ॥
विज्वराः सन्तु भो विप्राः स्वस्वकर्मण्यतान्द्रिताः ।
धन्यस्य कृतपुण्यस्य द्वार्यायान्त्यर्थिनो जनाः ॥ ५३ ॥
तेन सम्भावनीयास्ते प्राणैरपि धनैरपि ।
पञ्चभूतात्मको देहस्त्वनित्यः क्षणभङ्गुरः ॥ ५४ ॥
अवश्यं नाशमायाति कीर्तिधर्मौ न सर्वथा ।
भूतद्रोहं परित्यज्य दया भूतेषु नो धृता ॥ ५५ ॥
नोपार्जितोपि सद्धर्मः स्फारितं न यशो भुवि ।
नात्मा विमर्शितः शुद्धो वेदविद्भिश्च साधुभिः ॥ ५६ ॥
भूमिभराय तज्जन्म जीवन्नेव मृतो हि सः ।
तस्मात्तपोव्ययेनाहमर्थिनां वो मुनीश्वराः ॥ ५७ ॥
परिचर्यां करिष्येहं यथा स्याद्देहधारणा ।
इत्युक्त्वा गौतमस्तान्वै दानमानार्हणादिभिः ॥ ५८ ॥
सम्भावयामास तदातिथ्यागमनहर्षितः ॥ ५९ ॥

इति श्रीपञ्चरात्रे श्रीमाहेश्वरतन्त्रे उत्तरखण्डे
शिवोमासंवादे सप्तदशं पटलम् ॥ १७ ॥



# अष्टादशं पटलम् ॥ १८ ॥

## शिव उवाच ॥

एवं सम्भाविताास्तेन मुनिना मुनयस्तदा ।
असम्बाधे शिवे तस्मिन्नाश्रमे न्यवसन्सुखम् ॥ १ ॥
(१)प्रातरुप्तानि मध्याह्ने परिणामं गतानि च ।
अन्यान्यपरभागे तु तैर्मुनिस्तानजीवयत् ॥ २ ॥
हव्यैर्देवान् पितॄन्कव्यैस्तर्पयन्तो मुनीश्वराः ।
ततः शेषामृतभुजो निन्युस्तेऽहर्गणान् बहून् ॥ ३ ॥
ततो द्वादशवर्षान्ते वृष्टिरासीत्सुशोभना ।
साङ्कुरा सजला पृथ्वी पुनरासीद्यथा पुरा ॥ ४ ॥
प्रजाः स्थानानि भेजुस्ताः पूर्वं गिरिगुहाशयाः ।
अन्नादिविरहान्नष्टो धर्मः प्रावर्तत प्रिये ॥ ५ ॥
क्षितिरन्नादिसम्पूर्णा विश्वमासीत्सुमङ्गलम् ।
ततः कतिपये काले गन्तुकामाः मुनीश्वराः ॥ ६ ॥
प्रेमबद्धोऽन्वहं विप्रान्न्येषधद्विरहाक्षमः ।
निषिद्धाः कतिचिन्मासान् न्यवसंस्ते मुनीश्वराः ॥ ७ ॥
पुनः प्रपच्छुरौत्सुक्यात्स्वस्वाश्रमगतिं प्रति ।
नेत्याह गौतमो विप्रान् विरहव्यथितो भृशम् ॥ ८ ॥
ततस्ते कृतसङ्केताः केचित्तेष्वपि वाडवाः ।
ऊचुः परस्परं येन मुनित्यागः कथं भवेत् ॥ ९ ॥
मुनिः स्नेहवशाद्बद्धः स्वयमस्मान्न सन्त्यजेत् ।
अस्माभिस्त्यज्यते सोयं तथा कुर्वध्वमादृताः ॥ १० ॥
विमर्षतस्तथान्योन्यमुपायं मनसागमन् ।
अभिशापं मुनौ धृत्वा गमिष्यामो यथारुचि ॥ ११ ॥
ते दैवनिहताः सर्वे परस्परममन्त्रयन् ।

---

(१)'प्रातरुत्थाय' इत्यपि पाठः ।

कदाचिदथ मध्याह्ने कर्तुं माध्याह्निकीं क्रियां ॥ १२ ॥
ऋषिसङ्घैः परिवृतो जगाम तपतीं प्रति ।
निर्मितां मुनिभिर्धेनुं जरठामतिवेपतीं ॥ १३ ॥
सीदन्तीं कलिले वीक्ष्य गौतमः करुणोऽभवत् ।
आसाद्य सुरभेः पार्श्वं यावत्तामस्पृशन्मुनिः ॥ १४ ॥
तावत्पपात सहसा मायाधेनुर्मृतिं गता ।
तद्दृष्ट्वा मुनयः प्रोचुर्धिक्धिक् गौतम ते कृतिं ॥ १५ ॥
हिंसिता धेनुरबला किमतो निन्दितं भवेत् ।
अद्य प्रभृति ते द्वारि जलमात्रार्थिभिर्नरैः ॥ १६ ॥
न स्थातुमर्हाः किं कुर्मो गमिष्यामो वयं ततः ।
एवमुक्तो मुनिर्ध्यात्वा तत्कृतानर्थमाप सः ॥ १७ ॥
उवाच वचनं क्रुद्धो ज्वलन्निव हुताशनः ।
वेदबाह्या भविष्यध्वं कृतघ्नाः स्वेन कर्मणा ॥ १८ ॥
वेदब्राह्मणगोमन्त्रनिन्दावादपरायणाः ।
कलौ भविष्यथो मूढाः ब्रह्मवादपरायणाः ॥ १९ ॥
अन्तर्दुष्टा बहिः स्वच्छा हेतुवादपरायणाः ।
ब्रह्मज्ञत्वाभिमानेन धर्मकर्मबहिर्मुखाः ॥ २० ॥
ब्रह्म सत्यं जगन्मिथ्येत्यनुवादविचक्षणाः ।
मिथ्यात्वाज्जगतः किं स्यात्कर्मभिश्च शुभाशुभैः ॥ २१ ॥
इत्येवं नास्तिका मूढा दुर्हृदा वेदनिन्दकाः ।
ब्रह्मवादविलासोत्थैर्वचनैर्भावगर्वितैः ॥ २२ ॥
साधुवेषेण शिक्षाभिः प्रियवाक्यामृतादिभिः ।
एतैर्जवनिकाकारैः पापमावृत्य केवलम् ॥ २३ ॥
ज्ञानित्वमात्मनो लोके ख्यापयन्तो दुराशयाः ॥
यूयं वैडालिनो लोके भवन्तु चरमे युगे ॥ २४ ॥
न तु वो वास्तवं ज्ञानमुदेष्यति कदाचन ।
इति गौतमशप्तानां धर्मच्छेदोद्यमे ततः ॥ २५ ॥

वासना समभूत्तेषां गौतमं प्रतिकुर्वतां ।
अथ तद्वासनायुक्ताः कलौ पापयुगे शठाः ॥ २६ ॥
अवतीर्य क्षितितले (१)ब्रह्मसृष्टिमुपाश्रिताः ।
वेदशास्त्रविरुद्धानि ह्याचरन्तीह पामराः ॥ २७ ॥
द्विषन्त्याचारमास्तिक्यं यज्ञव्रततपांसि च ।
द्रुह्यन्त्यन्योन्यमासाद्य नष्टज्ञाना विचेतसः ॥ २८ ॥
परद्रव्यपरद्रोहपरस्त्रीगमनोत्सुकाः ।
तत्सम्बन्धात् ब्रह्मसृष्टिर्मालिन्यमुपयास्यति ॥ २९ ॥
यथा कालिमसम्बन्धात् स्फटिकोपि मलीमसः ।
आभाति तद्वदेवेयं ब्रह्मसृष्टिस्तदाश्रयात् ॥ ३० ॥
तस्माद् बुभुत्सुभिः साध्वि त्याज्यो वैडालिकाश्रयः ।
समधर्मक्रियाछद्मधारिणस्ते तु कीर्त्तिताः ॥ ३१ ॥
अन्येपि सन्ति पाषण्डा आसुरं भावमाश्रिताः ।
तेऽपि निन्दन्ति पापिष्ठा वेदधर्मं पुरातनम् ॥ ३२ ॥
तांस्ते ब्रवीमि सङ्क्षेपात् शृणुष्वेकाग्रमानसा ।
यत् शृण्वतां न पाखण्डो बुद्धिं मोहयति क्वचित् ॥ ३३ ॥
पुरा देवासुरयुद्धे निर्जितेष्वसुरेष्वथ ।
पाखण्डाधिकृताः सर्वे ह्येते सृष्टाः स्वयम्भुवा ॥ ३४ ॥
तपश्चरत्सु सर्वेषु असुरेषु जयार्थिषु ।
विष्णुः सुदुस्तरां मायामास्थाय सुरनोदितः ॥ ३५ ॥
मोहयामास योगात्मा तपोविघ्नाय तान्प्रभुः ।
स मूढान् बुद्धरूपेण तानुवाच महामनाः ॥ ३६ ॥
शक्या जेतुं सुराः सर्वे युष्माभिरिति दर्शनैः ।

---

(१) वचनमिदमाकर्ण्य श्रीपूर्णपुरुषोत्तमसेवामतिक्रम्य वेदप्रतिपादितकर्मकाण्डादि चावलम्ब्य निजधाममार्गो ब्रह्मसृष्टिभिरिह नैव त्याज्यः, पतिसेवात्यागेन प्रत्यवायदर्शनात् अतो ब्रह्मसृष्टीनां निजपतिपुरुषोत्तमसेवैव परमो धर्मः ।

बौधधर्मं समास्थाय शक्यास्ते तु बभूविरे ॥ ३७ ॥
तानुवाचार्हतो मम यूयं भवत मद्विधाः ।
ज्ञानेन सहितं धर्मं ते चार्हन्त इति स्मृताः ॥ ३८ ॥
बौधश्रावकनिर्ग्रंथाः सिद्धपुत्रास्तथैव च ।
ऐते सर्वेपि चार्हन्तो विज्ञेया दुष्टचारिणः ॥ ३९ ॥
त्रयीक्लेशं समुत्सृज्य जीवतेत्यब्रवीत्तु यान् ।
जीवकानाम ते जाताः सर्वधर्मबहिष्कृताः ॥ ४० ॥
यान भूत्वादित्यवद्व्योम्नि धर्मान्वै प्रतिपादयत् ।
कापिलास्तेपि सम्प्रोक्ताः कपिलो हि दिवाकरः ॥४१॥
चरध्वं तानुवाचेदं मच्छासनमतिद्युति ।
चरकास्तेपि विज्ञेया अधर्माचारणाः शठाः ॥ ४२ ॥
दीर्घचरमिति प्रोक्तं सूक्ष्मं वा धर्मरूपकम् ।
धर्मचरध्वमित्युक्ता यस्मात्ते दीर्घचक्षुषः ॥ ४३ ॥
चीराणि चैव नीलानि बिभ्राणाश्चीरकास्ततः ।
एषश्चोक्षोतिसंशुद्धो धर्मस्तं श्रयतेति यान् ॥ ४४ ॥
उवाच मायया विष्णुस्ते हि चौक्षाः प्रकीर्त्तिताः ।
विट्भक्षाश्चैव ये केचित् कपालकृतभूषणाः ॥ ४५ ॥
तथेतरे दुरात्मानः सर्वेप्यासुरदेवताः ।
बौद्धश्रावकनिर्ग्रन्थाः सिद्धपुत्रास्तथैव च ॥ ४६ ॥
नैरात्म्यवादिनः सर्वे अपज्ञानास्तिवादिनः ।
वर्त्तमानास्त्वधर्मेषु जायन्ते तु पुनः पुनः ॥ ४७ ॥
निरयं प्राप्य तैरेव कर्मभिर्भावितैः पुनः ।
वृथा जटी वृथा मुण्डी वृथा नग्नश्च ये नराः ॥ ४८ ॥
एतेन्ये च त्रयीबाह्याः पाखण्डाः पाप चरिणः ।
पाशब्देन त्रयीधर्मः पालनाज्जगतः स्मृतः ॥ ४९ ॥
तं खण्डयन्ति यस्माच्चे पाखण्डास्तेन हेतुना ।

यदि ह्यनादरेणैषां न कथ्येता प्रमाणता ॥ ५० ॥
अशक्यैवेति मत्वान्ये भवेयुः समदृष्टयः ।
त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ॥ ५१ ॥
अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते ।
पाखण्डिनो विकर्मस्थान् वैडालान् हेतुकांस्तथा ॥५२॥
बकवृत्तांश्च यान् तान्वै वाङ्मात्रेणापि नार्चयेत् ।
या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ॥ ५३ ॥
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ते स्मृताः ।
पुराणानि तथा सांख्यं योगः पाशुपतं तथा ॥ ५४ ॥
देशजातिकुलानां च धर्माश्चान्ये महत्तराः ।
सर्वे वेदाविरोधेन प्रमाणं नान्यथा भवेत् ॥ ५५ ॥
या वेद्बाह्याः स्मृतयो याश्च काश्चकुदृष्टयः ।
सर्वास्ता निष्फलाः किञ्च प्रत्यवायस्य हेतवः ॥ ५६ ॥
तस्मात्सर्वप्रयत्नेन देवि देवेन्द्रवन्दिते ।
त्यक्त्वा वेदविरुद्धानि वेदमेकं समाश्रयेत् ॥ ५७ ॥
पुराणन्यायमीमांसाधर्मशास्त्रांगामिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्येति चतुर्दश ॥ ५८ ॥
यथा वेदास्तथा तन्त्रं धर्मनिर्द्धारहेतवे ।
तदुक्तमाचरन् देवि भवपाशाद्विमुच्यते ॥ ५९ ॥
अन्तोन्यथा प्रवर्त्तन्ते ये मूढाः पापबुद्धयः ।
असुरास्तान्विजानीहि विष्णुना मोहिताः पुरा ॥ ६० ॥
ब्रह्मवादेषु वाचाला धर्मोच्छेदैकतत्पराः ।
तेषां मुखावलोकेन कुर्यात्सूर्यावलोकनम् ॥ ६१ ॥
तस्य संस्पर्शमात्रेण सवासा जलमाविशेत् ।
कलौ ते घोषयिष्यन्ति ब्रह्मवादं जने जने ॥ ६२ ॥
इति मे कथितं देवि यत्त्वया पृष्टमुत्तमम् ।

समासेन महादेवि किं भूयः श्रोतुमिच्छसि ॥ ६३ ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
अष्टादशं पटलम् ॥ १८ ॥

---

## एकोनविंशं पटलम् ॥ १९ ॥

शिव उवाच ।

अथेदानीं शृणु शिवे प्रियाणां कालनिर्णयम् ।
यस्य श्रवणमात्रेण वैराग्यं देहगेहयोः ॥ १ ॥
मनोरथश्च यश्चासीत् प्रियाणां दुःखदर्शने ।
रासे प्रदर्शिते प्रायो ह्यसम्पूर्णोविशेषितः ॥ २ ॥
तद्भोगार्थं पुनः सर्वाः प्रियास्ता रासविच्युताः ।
कालमायामयं देवि ब्रह्माण्डं विविशुः सहः ॥ ३ ॥
सम्भूता भारते वर्षे नैकत्र स्थितयोभवन् ।
मोहावेशवशाद्देवि दुस्तरादीशनिर्मितात् ॥ ४ ॥
विच्युतात्मानुसन्धाना बभूवुर्भगवत्प्रियाः ।
यथा स्वप्ने जनः कश्चिन्निद्रात्ययाजितसंस्मृतिः ॥ ५ ॥
स्वप्नलब्धगजाकार आत्मानं मनुते गजम् ।
मोहलब्धाकृतिस्तद्वल्लब्ध्वा तादात्म्यभावतः ॥ ६ ॥
उच्चावचासु योनीषु विभ्रमन्ति विचित्रधा ।
तत्र देहाभिमानोत्थकर्मसंसर्गदूषिताः ॥ ७ ॥
कर्मबन्धस्ततो जातो यथा स्यादुत्तरोत्तरम् ।
श्वकाकोलूकमार्जार खरगृध्रादियोनिषु ॥ ८ ॥

भ्रान्त्वा भ्रान्त्वा मनुष्येषु भूत्वा भूत्वा पुनः पुनः ।
जायन्ते च म्रियन्ते च तेषामन्तो न विद्यते ॥ ९ ॥
जन्मदुःखं जरादुःखं वार्द्धे यद्दुःखमुल्बणम् ।
देहत्यागनिमित्तं च दुःखमाप्ताः पुनः पुनः ॥ १० ॥
क्वचिद्धर्मः क्वचिच्छोको रागद्वेषादिकं क्वचित् ।
क्वचिद्बन्धः क्वचिन्मोक्षो राजसन्ताडनं क्वचित् ॥ ११ ॥
अन्नादिकाङ्क्षया कापि दरिद्रेणापि विप्लुताः ।
म्लानेन्द्रियमुखाकारा दैन्यभावं समागताः ॥ १२ ॥
पुत्रमित्रकलत्रादिनाशोत्थं दुःखमद्भुतम् ।
प्राप्य हाहेति हाहेति परितापान्न जुषन्ति ताः ॥ १३ ॥
बृहत्सेनस्य राजर्षेर्यथा राज्ञी पतिव्रता ।
अधौतपादा चोच्छिष्टा सुष्वाप विधिमोहिता ॥ १४ ॥
यक्षः कश्चिन्निशाचारी प्रसुप्तामहरच्च ताम् ।
समुद्रद्वीपमानीय यक्षमायामयं महत् ॥ १५ ॥
ददर्श नगरं दिव्यं दिव्याट्टालकगोपुरम् ।
यक्षस्तिरोदधे तस्यां तदावेशाविमोहिता ॥ १६ ॥
सैका बभ्राम नगरे गृहे गृहे विचेतना ।
यत्र यत्र गता सा तु जनैस्तत्र विभीषिता ॥ १७ ॥
तमिस्रायां तमोमय्यां भ्रमन्ती भ्रांतमानसा ।
हृतवस्त्राम्बरा कापि मत्ता परिपन्थिभिः ॥ १८ ॥
मुक्तकेशा वस्त्रहीना धूलिधूसरविग्रहा ।
पिशाचिनीव नगरे बभ्रामैका दिवानिशम् ॥ १९ ॥
रुदन्ती करुणा दीना ताड्यमाना जनैर्मुहुः ।
क्षुत्तृड्भ्यामाकुलत्विता सा वल्गन्तीव जनाज्जनम्॥ २० ॥
महाजनैश्च विपिने नगरात्तु विवासिता ।
व्याघ्रसिंहध्वनिं श्रुत्वा भीषणं त्रस्तमानसा ॥ २१ ॥

दृष्ट्वा तांस्तु पुनः साध्वी वृक्षखण्डेष्वलीयत ।
वृक्षकोटरगैः सर्पैर्दंशिता विवशाभवत् ॥ २२ ॥
अशेत भूमिशयने विषव्याघूर्णमानसा ।
भूविलोत्थैर्वृश्चिकाद्यैः सन्दष्टा सर्वसन्धिषु ॥ २३ ॥
एवं नानाविधांस्तापान् प्राप्ता नृपतिसुन्दरी ।
कर्कराकण्टकैर्विद्धपादाम्भोजा महावने ॥ २४ ॥
का त्वं कस्यासि वामोरु पृष्टा सप्तर्षिभिस्तु सा ।
नाहं विदामि चात्मानं न तातं मातरं पतिं ॥ २५ ॥
दुःखातिदुःखपाथोधौ मग्नास्मीत्यभ्यभाषत ।
भृशं नागरिकैर्दुष्टैः पीडिता भर्त्सिता पुनः ॥ २६ ॥
तस्करैर्वस्त्रभूषादि दुष्टैरपहृतं हि मे ।
क्षुत्तृट्परीता पापिष्ठैर्नगराच्च विवासिता ॥ २७ ॥
याता महावनं भ्रान्ता व्याघ्रसिंहभयाकुला ।
भुजङ्गवृश्चिकैः क्रूरैर्विषव्यापादितान्तरा ॥ २८ ॥
भ्रमाम्यहं दिवारात्रौ न जाने विदिशं दिशम् ।
अतः कुरुध्वं साहाय्यमनाथायाः कृपालवः ॥ २९ ॥
एवमुक्तं तया साध्व्या कृपया पीडिता भृशम् ।
कमण्डलुजलेनौक्षन् यक्षोघ्नेन मुनीश्वराः ॥ ३० ॥
लीनायां यक्षमायायां आत्मानं समपद्यत ।
सस्मार मातरं तातं बृहत्सेनं पतिं तथा ॥ ३१ ॥
व्रीडिताधोमुखी बाला मुनीन्द्रान् प्रत्यभाषत ।
सूर्यवंशप्रसूतस्य बृहत्सेनस्य धीमतः ॥ ३२ ॥
प्रियास्म्यहं विप्रदेवा उच्छिष्टा शयनं गता ।
केनचिज्जलधेस्तीरमानीता भयविह्वला ॥ ३३ ॥
तत्रैकं नगरं दिव्यं मया दृष्टं महाद्भुतम् ।
तत्रैकला विभ्रमन्ती लोकपीडासहानिशम् ॥ ३४ ॥

ततो निष्कासिता पौरैः प्राप्तेदं विपिनं महत् ।
अस्तंगतात्मविज्ञाना भ्रान्ता दुःखमयेऽध्वनि ॥ ३५ ॥
भवद्भिर्नष्टमज्ञानं तमः सूर्यांशुभिर्यथा ।
नष्टं लब्धमिवात्मानं मेने भवदनुग्रहात् ॥ ३६ ॥
सवस्त्रभूषणाकल्पं देहं चैव यथा पुरा ।
पश्यामि शयनोद्बुद्धा यथा स्वप्ने लयं गते ॥ ३७ ॥
भवत्प्रसादाद्दुःखाब्धिमुत्तीर्णा भगवत्तमाः ।
इत्युक्त्वा मुनिपादाब्जं प्रणताभूत्पुनः पुनः ॥ ३८ ॥
ततः प्रोचुर्मुनिवराः सांत्वयंतश्च तां सतीं ।
भयं मा कुरु कल्याणि पातिव्रत्यपरायणे ॥ ३९ ॥
अज्ञानप्रभवं विश्वं वस्तुतो नास्ति किञ्चन ।
यावदज्ञानमात्मस्थं तावद्दर्शयते भयम् ॥ ४० ॥
मिथ्या स्वप्नोपि राजर्षिप्रिये भयकरो यथा ।
तथा मिथ्यापि संसारो भयकृत्तद्दशा जुषां ॥ ४१ ॥
अज्ञातैव यथा रज्जुः सर्पभुता भयप्रदा ।
अविद्यासबलब्रह्मविवर्त्तोयं प्रपञ्चकः ॥ ४२ ॥
तदंशभूतजीवानामविज्ञातो भयङ्करः ।
स्वात्मत्वेन तु विज्ञातो भयं नोद्वहते पुनः ॥ ४३ ॥
आत्मा शुद्धोऽव्ययः सूक्ष्मो व्यापी नित्यो निरञ्जनः ।
स्वमायावरणच्छन्नः स्वस्मिन् स्वप्नं प्रपश्यति ॥ ४४ ॥
यथा तदुद्भवैश्छन्नं शैवालैः सलिलं भवेत् ।
स्वमायया तथा छन्नं अक्षरं ब्रह्मकेवलम् ॥ ४५ ॥
मायावृतं परं ब्रह्म स्वप्नसाक्षीतया पुनः ।
स्वाप्नमण्डं प्रविश्याशु धत्ते नारायणाभिधाम् ॥ ४६ ॥
तस्य नाभेरभूत्पद्मं तत्र जातश्चतुर्मुखः ।
प्रवरो वेदविदुषां बीजं संसारभूरुहः ॥ ४७ ॥
तत्र जाता वयं सर्वे स्वाप्निका एव भामिनि ।

भ्रमार्थः कर्मभिर्नुन्नाः स्वप्नमायामये पथि ॥ ४८ ॥
त्वयानुभूतमेतद्धि यथेदं यक्षमायिकं ।
तस्यापसरणे साध्वि स्वात्मालब्धो यथा पुरा ॥ ४९ ॥
जीवाः सर्वे वयं तद्वद् ब्रह्माभासमया अपि ।
मायाकार्यास्त्रविलये भविष्यामोऽक्षरात्मकाः ॥ ५० ॥
मायाकार्ये विद्यमाने दुःखशोको भयं शुचः ।
धर्माधर्मौ पुण्यपापे सत्यमित्येव गम्यते ॥ ५१ ॥
तस्मादवास्तवं दुःखं विज्ञाय हृदये दृढम् ।
वीतशोका वीतभया भव भामिनि नित्यदा ॥ ५२ ॥
इत्युक्त्वा तां मुनिश्रेष्ठा योगमायाबलेन च ।
निमिषेण गृहं निन्युर्घटिकांतरितं प्रिये ॥ ५३ ॥
प्रिया राज्ञोपि तद्वृत्तं विचार्य च पुनः पुनः ।
महाकुतूहलाक्रान्ता राज्ञे सर्वं न्यवेदयत् ॥ ५४ ॥
एवं ता देवदेवेशि प्रिया भगवतो हि ताः ।
भ्रान्तात्मरूपविज्ञाना मायास्वप्ने परात्मनः(१) ॥ ५५ ॥
नानायोनिषु देवेशि संसरन्ति पुनः पुनः ।
भ्रान्तात्मानश्च्युतानन्दाः संसारेप्यसति प्रिये ॥ ५६ ॥
निजधाम्नि महानन्दे दुःखाभासो न विद्यते ।
न दुःखानुभवश्चापि तत्रत्यानां कदाचन ॥ ५७ ॥
न कार्पण्यं न दुःखं च नोद्वेगो नारतिः क्वचित् ।
तत्प्रियाप्रार्थितं मत्वा निर्बन्धेन गिरीन्द्रजे ॥ ५८ ॥
कूटस्थस्वप्नसम्बन्धमनो भावा(२)न्न प्रचक्रिरे ।
असन्नपि महेशानि स्वप्नोयं दुःखदो महान् ॥ ५९ ॥
स्ववासनाकामशेषो ह्यधुनापि निषेव्यते ॥ ६० ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
एकोनविंशं पटलम् ॥ १९ ॥

(१) "परात्मना इत्यपि पाठः । (२) "भावः" इत्यपि पाठः ।

# ॥ विंशं पटलम् ॥ २० ॥

॥ पार्वत्युवाच ॥

अहो देव महादेव परमात्मन् परमेश्वर ।
त्वदुक्तमेतदाश्रुत्य मनो मे क्षुभ्यतेतराम् ॥ १ ॥
निरीहस्यापि देवस्य कूटस्थपरमात्मनः ।
दिदृक्षा यत्समुत्पन्ना रहःक्रीडावलोकने ॥ २ ॥
नित्यानन्दविहाराणां प्रियाणां परमात्मनः ।
दिदृक्षा यत्समुत्पन्ना केवलं दुःखदर्शने ॥ ३ ॥
इत्येतन्महदाश्चर्यं प्रतिभाति महेश्वर ।
तन्निराकुरु देवेश मनःसंशयमहार्तिकृत् ॥ ४ ॥
पूर्णस्यैवाप्तकामस्य किन्तु क्रीडावलोकनैः ।
तदङ्गभूतास्तत्तुल्याः प्रियास्तु परमात्मनः ॥ ५ ॥
दुःखकामः कथं तासु केवलानन्दमूर्तिषु ।
न दुःखदर्शने कश्चिन्मूर्खो वा रमते क्वचित् ॥ ६ ॥
एतदाचक्ष्व भगवन् कृपां कृत्वा ममोपरि ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि रहस्यं परमाद्भुतम् ॥ ७ ॥
वेदागमपुराणेषु यत्तु गुप्ततरं प्रिये ।
अद्यप्रभृति कस्यापि नोक्तवानहमद्रिजे ॥ ८ ॥
तव स्नेहवशाद्देवि प्रवक्ष्यामि न चान्यथा ।
त्वयापि गोपितव्यं हि स्कंदाच्च गणपादपि ॥ ९ ॥
प्रकाशितं हरेद्धर्मं यशोलक्ष्मीसुखानि च ।
वेदशास्त्रपुराणानि सामान्यगणिका इव ॥ १० ॥
इयं विद्या महाविद्या गोप्या कुलवधूरिव ।
सुगुप्तेयं महाविद्या ज्ञानसिद्धिकरी नृणां ॥ ११ ॥
यथा प्रकाशितं द्रव्यं तस्करेभ्योपगच्छति ।

तथा प्रकाशिता विद्या पशुभ्य उपगच्छति ॥ १२ ॥
गोपितव्या ततो यत्नाद्विद्येयं ब्रह्मदर्शिनी ।
मन्त्रौषधक्रियाधर्माः गुप्ता एव फलन्ति हि ॥ १३ ॥
अत्राच्यमपि ते वच्मि शृणुष्वैकाग्रमानसा ।
गणनाविषयानन्दो वर्त्तते केवलेऽक्षरे ॥ १४ ॥
सप्तद्वीपवतीं पृथ्वीं यः शास्ता व्याहतेन्द्रियः ।
निरामयो निःसपत्नो युवा राजेन्द्रवन्दितः ॥ १५ ॥
तदानन्दो हि देवेशि मनुष्यानन्द ईरितः ।
मनुष्यानन्दशतकं गन्धर्वानन्द उच्यते ॥ १६ ॥
गन्धर्वानन्दशतकं पित्रानन्द उदीरितः ।
पित्रानन्दशतेनैको ह्युपदेवस्य चोच्यते ॥ १७ ॥
उपदेवानन्दशतं देवानन्द उदीर्यते ।
देवानन्दशतं देवि वैरंच्यानन्द उच्यते ॥ १८ ॥
वैरंच्यानन्दशतकमानन्दो वैष्णवः स्मृतः ।
वैष्णवानन्दशतकं रुद्रानन्दस्तु उच्यते ॥ १९ ॥
मदानन्दशतेनोक्तः ईशानन्दपरो महान् ।
ईशानन्दशतेनोक्त(१) शैवानन्दस्तु केवलः ॥ २० ॥
तच्छतेन भवेद्देवि प्रकृत्यानन्द उत्तमः ।
प्रकृत्यानन्दशतकं पुरुषानन्द उच्यते ॥ २१ ॥
पुरुषानन्दशतकं अक्षरानन्द उच्यते ।
अक्षरं परमं ब्रह्म ब्रह्मानन्दस्ततः स्मृतः ॥ २२ ॥
ब्रह्मानन्दमयं विश्वं नानाभावो न विद्यते ।
मायोपाधिसमायोगान्नानात्वेन प्रतीयते ॥ २३ ॥
तत्प्रतीतिनिरासे तु परं ब्रह्मैव शिष्यते ।
तन्माया प्रकृतिर्देवि नित्या तत्सहधर्मिणी ॥ २४ ॥

---

(१) "ईश्वरानन्दसंज्ञकः" इत्यपि पाठभेदः ।

शुद्धसत्वप्रधाना हि निर्मला ज्ञानरूपिणी ।
तत्र यः प्रतिबिम्बोभूदक्षरस्य परात्मनः ॥ २५ ॥
तमाहुः पुरुषं देवि श्रुतिसिद्धान्तवादिनः ।
स एव कालरूपेण प्रकृतिक्षोभकारकः ॥ २६ ॥
तस्मान्नारायणो जज्ञे स एव प्रणवाभिधः ।
हिरण्यगर्भमपि तं प्रवदन्ति मनीषिणः ॥ २७ ॥
शब्दब्रह्ममयं प्राहुस्तमेवागमवेदिनः ।
तस्माद्वेदाः प्रवर्त्तन्ते शब्दब्रह्मात्मना प्रिये ॥ २८ ॥
आदौ शब्दात्मकं विश्वं ततश्चार्थमयं भवेत् ।
शब्दः प्रकृतिरूपश्च अर्थः स्यात्पुरुषात्मकः ॥ २९ ॥
उभयात्मकः प्रपञ्चोयं तस्मात्स्त्रीपुंस्वरूपधृक् ।
त्वमहं च तथा विष्णुर्लक्ष्मीर्ब्रह्मा सरस्वती ॥ ३० ॥
सूर्यः सञ्ज्ञानलः स्वाहा पुरुहूतः पुलोमजा ।
अम्भोनिधिश्च मर्यादा वृक्षः पल्लविनी लता ॥ ३१ ॥
महद्वाल्पतरं वापि तत्सर्वमुभयात्मकम् ।
अक्षरे शाश्वतावेतौ प्रकृतिः पुरुषस्तथा ॥ ३२ ॥
जाग्रत्स्वप्नविभेदेन प्रपञ्चपरिणामिनौ ।
नित्यत्वमुभयोर्देवि विवदन्तेत्र वादिनः ॥ ३३ ॥
नित्यः प्रपञ्च एवेति ह्यनित्य इति केचन ।
अहङ्कारवशाद्देवि वादिनो मूढबुद्धयः ॥ ३४ ॥
नित्यानित्यं न जानन्ति स्व(१)पक्षाग्रहदोषतः ।
नित्यत्वात्कारणस्यापि प्रवाहे नित्यतास्तु वा ॥ ३५ ॥
श्रौतत्वाज्जन्यनाशस्य ह्यनित्यत्वेपि का क्षतिः ।
द्वैताद्वैते तथा देवि विवदन्ते कुबुद्धयः ॥ ३६ ॥
ईश्वराज्जीवपार्थक्यमिति तत्वविदो विदुः ।
ब्रह्मैवाज्ञानवशतो जीवस्तत्मतिगीयते ॥ ३७ ॥

(१) 'स्वमताग्रहदोषतः' इत्यपि पाठः ।

न जीवं परमार्थेन विदुरद्वैतवादिनः ।
न विरुद्धमिदं देवि ह्यज्ञानावधिभेदतः ॥ ३८ ॥
ज्ञानेनाज्ञाननाशे तु लब्धेनेश्वरतुष्टितः ।
जाग्रत्स्वप्नस्य विलये स्वप्नसाक्षीव सुन्दरि ॥ ३९ ॥
एकमेवावशिष्येत नित्यं ब्रह्मैव केवलम् ।
अद्वैतवादिनो ह्येवं श्रुतिमात्रावलम्बिनः ॥ ४० ॥
एकमेव परं ब्रह्म नाना नास्तीह किञ्चन ।
मृदेव सत्यमित्येवं नामरूपे विकारवत् ॥ ४१ ॥
इत्यद्वैतं श्रुतिव्रातैरुद्घोषितमनेकधा ।
द्वैतवादरताश्चापि द्वासुपर्णावितीरणात् ॥ ४२ ॥
द्वैतमेव प्रशंसन्ति ह्यभेदो भजनात्मकः ।
अद्वैतभूमिकाधस्तात्सोपानास्थास्तु ते प्रिये ॥ ४३ ॥
तेषां नारायणः साक्षात्परब्रह्म श्रुतीरणात् ।
ब्रह्माभासमया जीवाः क्षुद्रोपाधिगुणाश्रिताः ॥ ४४ ॥
अस्वतन्त्राः पराधीना नित्या इत्यपि चक्षते ।
अव्याहतं च नित्यत्वं भ्रान्तिमूलमपि प्रिये ॥ ४५ ॥
निद्रोपलब्धभावानां निद्रा तावत्स्थितिः स्थिरा ।
इति यत् शास्त्रहृदयमज्ञात्वा विवदन्ति ये ॥ ४६ ॥
द्वैताद्वैतविचारेऽस्मिन्न ते तत्त्वमवाप्नुयुः ।
तस्मात्सर्वप्रयत्नेन सर्वशास्त्रैकनिश्चयम् ॥ ४७ ॥
ज्ञात्वा भजन्ति देवेशि निःसन्देहः फलात्मकः ।
वाक्यभेदाननादृत्य बुद्धिक्लेशादहङ्कृतेः ॥ ४८ ॥
ये प्रवर्तन्त एवैते सत्वरयाः फलविच्युताः ।
एकमेवाद्वयं ब्रह्म द्विधा लीलाविभेदतः ॥ ४९ ॥
प्रवृत्तिश्च निवृत्तिश्च लीलाभेदे व्यवस्थिता ।
निवृत्तिः सुप्तसञ्ज्ञा हि सुखमानन्दरूपकम् ॥ ५० ॥

प्रसङ्गात्प्रकृतेर्देवि प्रवृत्तिर्बहुरूपिणी ।
अजानतां वरारोहे दुःखरूपतया स्थिता ॥ ५१ ॥
अक्षरस्य तु सा प्रोक्ता लीलान्यातीतधर्मिणी ।
प्रवृत्तिलीलालेशोपि नैवातीते परात्मनि ॥ ५२ ॥
आग्रहमात्रो देवेशि नित्यानन्दमहोदधेः ।
लेश एव सदा तिष्ठेत्स कामो नित्यरूपधृक् ॥ ५३ ॥
कामरूपी सदानन्दः कामांशो लेश उच्यते ।
तस्मादेवाक्षरे देवि नित्यकामो हि दर्शने ॥ ५४ ॥
तस्मादेवाक्षरे जाता दिदृक्षा या तु पार्वति ।
न चैककर्तृका सा तु परापरमयी हि सा ॥ ५५ ॥
अक्षरे ज्ञानतन्मात्रे स्वत इच्छा न जायते ।
न प्रवर्तयते साक्षात्पूर्णात्मा पुरुषोत्तमः ॥ ५६ ॥
सामरस्यमयीं प्राहुस्तस्मादागमवेदिनः ।
आनन्दगा सामरस्यात् स्वपक्षविषयग्रहा ॥ ५७ ॥
साङ्गिनं तु परित्यज्य प्रधानमङ्गेष्वसर्पत ।
स्वामिनीषु ततो जाता दिदृक्षा दुःखदर्शने ॥ ५८ ॥
उभयव्यापिनी सा तु सर्वकारणकारणा(१) ।
ततः कार्यप्रवृत्तिस्तु हेतोर्गुणनिबंधिनी ॥ ५९ ॥
स्त्रीपुंभावात्मिका जाता ब्रह्मादिस्तम्बभेदतः ।
इच्छया ससृजे निद्रा सापि जातोभयात्मिका ॥ ६० ॥
ज्ञानात्मिका स्वतः शुद्धा बहिर्वृत्तिविवर्जिता ।
निद्रया सृजते मोहश्चेतनाचेतनो हि सः ॥ ६१ ॥
सचैतन्यस्य कार्यस्य हेतुर्यश्चेतनात्मकः ।
स एव जडहेतुश्च यस्मादयमचेतनः ॥ ६२ ॥
विद्याविद्ये स एवोक्तः शृणु तत्रापि कारणम् ।

(१) सर्वकारणकारणं इत्यपि पाठः ।

चिदचिद्ग्रन्थिको ह्येषश्चिदाकारेण केवलम् ॥ ६३ ॥
यदा परिणमेद्देवि तदा विद्येति तां विदुः ।
यदा चैतन्यमावृत्य केवलं मोहरूपधृक् ॥ ६४ ॥
जीवबुद्धिं समावृण्वन् अविद्येति च गीयते ।
तमः कालुष्यमुत्सृज्य शुद्धसत्त्वप्रधानिका ॥ ६५ ॥
जीवबुद्धेर्भेदकरी मायेति कथिता प्रिये ।
सात्त्विकांशं परित्यज्य केवलं चित्स्वरूपिणी ॥ ६६ ॥
अपरोक्षकरी विद्या ब्रह्मविद्येति तां विदुः ।
तस्माद्द्विधा त्रिधा प्रोक्ता मया ते वरवर्णिनि ॥ ६७ ॥
ततो गुणास्त्रयो जातास्तेपि तादृग्विधा शिवे ।
सत्त्वं तु चेतनं विद्धि तमो विद्यादचेतनम् ॥ ६८ ॥
रजस्तदुभयात्मत्वाच्चेतनाचेतनात्मकम् ।
भूतानि पञ्च जातानि तानि तादृग्विधान्यपि ॥ ६९ ॥
आधिष्ठेयान्यधिष्ठातृतया द्वैविध्यवन्ति च ।
ब्रह्माण्डमभवत्तेभ्यस्तदेवोभयरूपधृक् ॥ ७० ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोहं त्वया शिवे ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ७१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे विंशं पटलम् ॥ २० ॥

---

## एकविंशं पटलम् ॥ २१ ॥

शिव उवाच ॥

अन्तोन्यत् शृणु देवेशि रहस्यं किञ्चिदुत्तमम् ।
गोपनीयं प्रयत्नेन यस्मै कस्मै न दर्शयेत् ॥ १ ॥
परीक्षिताय वक्तव्यं ताडनैस्तर्जनादिभिः ।

ऋते पात्रमिदं ज्ञानं न तिष्ठति कदाचन ॥ २ ॥
आविर्भूताक्षरे शक्तिरिच्छा नाम सुमङ्गला ।
अङ्गान्यावृत्य सत्प्रेमविरहौत्कण्ठ्यदर्शने ॥ ३ ॥
रतिमुत्पादयामास ततः सा, पुरुषोत्तमं ।
प्रार्थयामासुरौत्सुक्यात्स्वामिन्या सह सङ्गताः ॥ ४ ॥
निवारिता बहुविधैर्वाक्यैरिच्छाविमोहिताः ।
न मेनिरे प्रियाः सर्वा अर्थयामासुरन्वहं ॥ ५ ॥
प्रार्थना स्वीकृतास्तासामतीतेनाक्षराद्यदा ।
तदा सा पुनरासाद्य निद्रा चित्यन्वधात्प्रिये ॥ ६ ॥
चिदात्मा पुरुषः साक्षान्मोहमय्यैव निद्रया ।
घूर्णितोऽशेत सन्मंचे पञ्चब्रह्ममये शुभे ॥ ७ ॥
यदैव निद्रया घूर्णो विस्मृतात्माभवत्प्रिये ।
हृदयाब्जकर्णिकामध्ये विहरेतापरा हि सा ॥ ८ ॥
व्यचिनोत्पञ्चधा देवि स्वरूपमपि चात्मना ।
उद्धारिणी पालिका च तथा संहारिकापि च ॥ ९ ॥
विशाला व्यापिका चेति शक्तयः पञ्च कीर्तिताः ॥१०॥
रजःप्रधानहारिणी पालिनी सात्विकी मता ।
तमःप्रधाना संहर्त्री शुद्धसत्वा विशालिका ॥११॥
निर्गुणा व्यापिका शक्तिरिच्छा पञ्च विधोदिता ।
एता एवोदिता देवि जाग्रति प्राकृतास्तथा ॥ १२ ॥
इच्छामय्यस्तु शयने तस्मान्मञ्चो निरामयः ।
उद्धारिणीपालिकयोः स्कन्धयोस्तत्पदद्वयं ॥ १३ ॥
विशालाहा(१)रिणीकण्ठदेशे पाणिद्वयं स्थितम् ।
व्यापिका मञ्चफलकीभूताधारतया स्थिता ॥ १४ ॥
पञ्चसु प्रतिबिम्बोभूदक्षरस्य चिदात्मनः ।

(१) "हारिणी" इत्युद्धारिणीशक्तेरपरं नाम ।

बिम्बितं यत्तु चैतन्यं तस्मिन्नुद्वारिणी हि सा ॥ १५ ॥
दर्शयामास वेदास्याद्युपाधिमतिविस्तृतम् ।
बिम्बितं यत्तु चैतन्यं तस्मिन् या पालिनी शिवे ॥ १६ ॥
अदर्शयच्चतुर्भुजाद्युपाधिमतिविस्तृतम् ।
बिम्बितं यत्तु चैतन्यं तस्मिन् संहारिणी तु या ॥ १७ ॥
अदर्शयत्रिनेत्राद्युपाधिमतीवसुन्दरि ।
बिम्बितं यत्तु चैतन्यं तस्मिन् या तु विशालिका ॥ १८ ॥
अष्टबाह्वाद्युपाधिं च दर्शयामास केवलं ।
बिम्बितं यत्तु चैतन्यं तस्मिन् या व्यापिका मता ॥ १९ ॥
दशबाहुं च पञ्चास्याद्युपाधिमसृजत्प्रिये ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २० ॥
मञ्चपादत्वमापन्ना नित्यमुद्वहते परं ।
सृष्टिं स्थितिं च संहारं तिरोधानमनुग्रहम् ॥ २१ ॥
नित्यमेव प्रकुर्वन्ति भूताधिष्ठातृरूपिणः ।
सृष्ट्यादित्रयसिद्ध्यर्थं त्रयाणां बु(१)भुजेंशतः ॥ २२ ॥
तिरोधानानुग्रहौ तु मञ्चपादस्थयोर्विदुः ।
पञ्चशक्तिप्रभेदेन परेच्छैव सुमङ्गला ॥ २३ ॥
ब्रह्मविष्ण्वादिरूपाणि धत्ते नानास्वरूपिणी ।
अक्षरस्य तु रूपे द्वे पुरुषाक्षरभेदतः ॥ २४ ॥
नारायणस्तु पुरुषाज्जज्ञे स्वप्नेक्षिता स्वयम् ।
नादबिन्दू शिवः शक्तिर्जातौ नारायणात्प्रिये ॥ २५ ॥
नादबिन्दुमयत्वेन त्रिधा नारायणः स्थितः ।
सङ्कर्षणो वासुदेवः प्रद्युम्नः अनिरुद्धकः ॥ २६ ॥
चतुर्धा विष्णुरेवोक्तो ह्यंशभेदा ह्यनेकशः ।
एकादश विभेदात्मा रुद्रोहमहमीश्वरि ॥ २७ ॥

---

(१) 'बुभुवे' इत्यपि पाठः ।

मदात्मभेदाः शतशः कोटिशः सन्ति सुन्दरि ।
सदाशिवेश्वरावेतौ आत्मभेदविवर्जितौ ॥ २८ ॥
वेदप्रणवभेदेन द्विधा नारायणादभूत् ।
नाद एव महेशानि बहु स्यामित्यवेक्षणात् ॥ २९ ॥
न भेदो विद्यते बिन्दौ अखण्डात्मनि सुन्दरि ।
महत्तत्वमिदं भद्रे मनो नारायणस्य तत् ॥ ३० ॥
मनसस्तु बहु स्यामित्यमन्यत यदा हि सः ।
अहङ्कारस्ततो जज्ञे प्रसृतो बिन्दुतां ययौ ॥ ३१ ॥
बिन्दुः शून्यात्मको ज्ञेयस्तस्माद्विश्वं निरर्थकम् ।
व्याप्तोहङ्कार एवायं ब्रह्माभासेषु दृश्यते ॥ ३२ ॥
ब्रह्माभासो निर्विकारो निष्प्रपञ्चो निरञ्जनः ।
न करोति न लिप्येत प्रदीप इव भासकः ॥ ३३ ॥
अहङ्कारस्य कर्तृत्वं भोक्तृत्वमपि सुन्दरि ।
धर्माधर्मौ पुण्यपापे बन्धमोक्षादिकं तथा ॥ ३४ ॥
अहङ्कारेण भिद्येत नानाभेदव्यवस्थया ।
अहङ्कारेण तादात्म्यादाभासेपीक्षते स्फुटं ॥ ३५ ॥
अहङ्कारमयो ग्रन्थिर्यावन्नैव विभिद्यते ।
अविद्यमानः संसारः तथाप्येनं न मुञ्चति ॥ ३६ ॥
स्फटिकस्यैव रागित्वं जपाकुसुमयोगजम् ।
नापगच्छति तद्देवि कुसुमापहृतिं विना ॥ ३७ ॥
तथा संसरणं जीवे ह्यहङ्कारच्युतिं विना ।
निवर्तते न देवेशि कल्पकोटियुतायुतैः ॥ ३८ ॥
सोहङ्कारास्त्रिधा प्रोक्तो गुणभेदेन पार्वति ।
अहङ्कारोयमेवाहं तथा जीवगतो द्विधा ॥ ३९ ॥
महत्तत्वं त्रिधा प्रोक्तं अध्यात्मादिप्रभेदतः ।
नारायणमनोरूपमाधिदैविकमुच्यते ॥ ४० ॥

जीवानां चित्तरूपं यदध्यात्ममिति चक्ष्यते ।
ब्रह्मणो देहरूपस्थमाधिभौतिकमुच्यते ॥ ४१ ॥
नारायणेधिदैवेन(१) रूपेण परिनिष्ठितम् ।
आविर्बभूव तद्वर्णभेदैर्वेदस्वरूपतः ॥ ४२ ॥
जीवगं यत्तुदेवेशि चित्तरूपतया स्थितम् ।
सुषुम्णावर्त्तिना प्राणवायुना सह सङ्गतं ॥ ४३ ॥
वायुस्तेन युतो देवि ब्रह्मरन्ध्राहतः पुनः ।
तालोष्ठपुटनासादिभेदेन(२) परमेश्वरि ॥ ४४ ॥
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ।
ब्रह्मदेहतया यस्मात् स्थितं त्रैलो(३)क्यकारणम् ॥ ४५ ॥
अतस्तस्माज्जगज्जातं देवासुरनरोरगं ।
इति तेऽभिहितं देवि रहस्यं परमाद्भुतम् ॥ ४६ ॥
श्रद्धाहीनाय दुष्टाय कृतघ्नाय दुरात्मने ।
नास्तिकायाविनीताय वेदशास्त्रोद्गताय च ॥ ४७ ॥
अविश्वस्ताय देवेशि दर्शयेन्न कथञ्चन ।
यदा राजा तु सर्वस्वं बलं कोशो महीगजान् ॥ ४८ ॥
निवेदयतु जिज्ञासुस्तदा तस्मै प्रकाशयेत् ।
अन्यथा सिद्धिहानिः स्यात् सत्यं सत्यं न संशयः ॥४९॥
तस्मात्सर्वप्रयत्नेन गोपितव्यं त्वयापि हि ॥ ५० ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे एकविंशं पटलम् ॥ २१ ॥

---

( १ ) 'नारायणे यदध्यात्मरूपेण' इत्यपि पाठः ।
( २ ) 'देहेन' इत्यपि पाठः ।
( ३ ) 'तल्लोक' इत्यपि पाठः ।

# द्वाविंशं पटलम् ॥ २२ ॥

पार्वत्युवाच ॥

यदुक्तं देवदेवेश त्वया पशुपते प्रभो ।
प्रविश्य कर्णरन्ध्रेण चिदानन्दायते हृदि ॥ १ ॥
तीर्थानां परमं तीर्थं ज्ञानानां ज्ञानमुत्तमम् ।
योगानां परमो योगो धर्माणां धर्म उत्तमः ॥ २ ॥
श्रोतव्यानां च परमं श्रोतव्यमिदमेव हि ।
ज्ञातव्यानां च परमं ज्ञातव्यमिदमुच्यते ॥ ३ ॥
श्रुतं मया विशेषेण सोपपत्तिकमित्यपि ।
न तथाप्यन्तरात्मा मे तृप्तिमायाति शाश्वतीं ॥ ४ ॥
अतस्त्वां परिपृच्छामि विशेषं तत्र धूर्जटे ।
तं च ब्रूहि महादेव प्रसादपरमो भव ॥ ५ ॥
स्वप्रभूतप्रपञ्चेऽस्मिन्नक्षरस्य परात्मनः ।
प्रियाः सख्यो भगवतो वासनावशतो गतः ॥ ६ ॥
कियांस्तत्र गतः कालस्तासामागमनादनु ।
कियत्कालं च ताः सर्वा इह स्थास्यन्ति मोहिताः ॥ ७ ॥
कथं ता बोधमाप्स्यन्ति कस्तासां प्रतिबोधकृत् ।
युगपद्वा गमिष्यन्ति पृथक् वा परमेश्वर ॥ ८ ॥
एतत्सर्वं महादेव कथयस्व प्रसादतः ।
संशयो मे महानद्य तमपानुद शङ्कर ॥ ९ ॥

शिव उवाच ।

शृणु पार्वति वक्ष्यामि तव प्रश्नानशेषतः ।
त्वं मे प्राणाधिकैवासि तस्माद्वक्ष्ये यथातथं ॥ १० ॥
विरंचेर्ब्रह्मणः पूर्वं अष्टवक्त्रोभवद्विधिः ।
शब्दब्रह्मेति यं प्राहुर्वेदवेदान्तपारगाः ॥ ११ ॥
द्विपरार्द्धावसानेस्य ब्राह्मः कल्पो महानभूत् ।

प्रलयोयं महेशानि प्रकृत्यवधिरुच्यते ॥ १२ ॥
(१)एका शिष्टा च प्रकृतिः पुरुषाधिष्ठिता हि सा ।
कियत्कालं ततो देवि शून्यमासीदिति श्रुतिः ॥ १३ ॥
आविर्भूता ततो निद्रा अक्षरे परमात्मनि ।
महत्तत्वमतस्तस्मादहङ्कृतिरजायत ॥ १४ ॥
स एव च त्रिधा जातो गुणभेदेन सुन्दरि ।
सात्विकाच्च मनो जज्ञे देवताश्च दशैव ताः ॥ १५ ॥
राजसादिन्द्रियाण्यासन् भूतानि तमसोभवन् ।
तेभ्योण्डमभवद्देवि तत्र नारायणः स्थितः ॥ १६ ॥
(२)तस्य नाभेरभूत्पद्मं यत्र ब्रह्माभवत्स्वयं ।
द्विपरार्द्धमितं चास्य परमायुर्निगद्यते ॥ १७ ॥
अस्मिन् ब्रह्माण्डगोले हि जम्बूद्वीपे महेश्वरि ।
वर्षे भारतसंज्ञे हि प्रियाणां वासनाः स्थिताः ॥ १८ ॥
परार्द्धः प्रथमो जातो द्वितीयेस्मिन् महेश्वरि ।
निर्बन्धात्स्वामिनीनां च लीलामाविश्चकार ह ॥ १९ ॥
श्रीकृष्णः परमानन्दो नन्दगेहेभवत्तदा ।
गोपकन्यामिषेणैव ह्याविर्भूतास्ततः प्रियाः ॥ २० ॥
तत्कामपूर्त्तये साक्षात् श्रीकृष्णः पुरुषोत्तमः ।
रासलीलां प्रकुर्वाणो रमयामास ताः प्रियाः ॥ २१ ॥
योगमायासमावेशान्मायाकार्यं विलुंपतः ।
ब्रह्मणोपि लये जाते यथापूर्वमभूदिदम् ॥ २२ ॥
पुनर्जातं ततः सर्वं ब्रह्मादिस्थावरान्तकं ।
मनोरथस्य चापूर्त्या वासनाः कार्यमध्यगाः ॥ २३ ॥
विचरन्ति यथा कालं यथादेशं यथारुचि ।
द्विपरार्द्धे त्वतिक्रान्ते नष्टे स्थावरजङ्गमे ॥ २४ ॥

---

(१) "एकावशेषा-प्रकृतिः" इ० पाठः । (२) "तत्र" इत्यपि पाठः ।

विरञ्चौमुक्तिमापन्ने प्रबुद्धे ह्यक्षरे प्रिये ।
प्रबुद्धा वासनास्ता हि भविष्यन्ति स्वबिम्बगाः ॥ २५ ॥
आविर्भावाच्च लीलाया द्वापरान्ते कलौ युगे ।
(१)असहिष्णुः स्वप्रियाणां दुःखलीलानुदर्शनम् ॥ २६ ॥
तासामेकां च परमां सुभगां सुन्दरीं प्रियां ।
प्रबोधयिष्यतितरां कथयित्वा विनिर्णयम् ॥ २७ ॥
ततस्तत्सम्प्रदायेन सर्वास्ता भगवत्प्रियाः ।
स्वभर्तृविरहाक्रान्ताः त्यक्त्वा देहान् प्रपञ्चगान् ॥ २८ ॥
भगवल्लोकवैकुण्ठे स्थितिमाप्स्यन्ति यूथशः ।
पश्चया रममाणास्ताः कालभोगे यथाविधि ॥ २९ ॥
दिव्यदेहानपि त्यक्त्वा भविष्यन्ति स्वबिम्बगाः ।
अक्षरोप्यनुभूयैतत्स्वप्नस्वपरमेश्वरि ॥ ३० ॥
परमानन्दसम्मग्नो भविष्यति कृतार्थधीः ।
सर्वा लीला निजरूपा भविष्यन्ति तदा प्रिये ॥ ३१ ॥
भगवल्लोकमात्मानं दिव्यभावेपि सुन्दरि ।
अविद्यालेशसम्बन्धादक्षरस्य परात्मनः ॥ ३२ ॥
निद्रांशस्यापि शेषत्वात् कियत्कालमवस्थितिः ।
युगपद्देवि सर्वास्ता गमिष्यन्ति निजं गृहम् ॥ ३३ ॥
न कथञ्चन देवेशि गतिस्तासां पृथक् भवेत् ।
स्वप्नस्य विषये साम्यादैकात्म्याच्च तथा प्रिये ॥ ३४ ॥
वैरस्याच्च विचित्रत्वे भर्तृस्नेहाविशेषतः ।
न पृथक गमनं तासां तस्माद्वैकुण्ठसंस्थितिः ॥ ३५ ॥

---

(१) क्वचित्पुस्तके २६-२७ श्लोकयोः "आस कृष्णः प्रियाणां च दुःखलीलानुदर्शने । तासामेका च परमा सुभगा सुन्दरी प्रिया । प्रबोधयिष्यति सा सर्वाः कथयित्वा विनिर्णयम्" । ईदृशः पाठभेदो भाति ।

क्रमयोगेन देवेशि सर्वा यास्यन्त्यसंशयम् ।
तस्माद्देवि विशेषेण स्वपतिः पुरुषोत्तमः ॥ ३६ ॥
भजनीयो हि सततं वेदशास्त्रानुरोधतः ।
देहेन्द्रियस्वभावानामन्तं कर्माणि पार्वति ॥ ३७ ॥
आत्मनोन्तं परब्रह्मध्यानश्रवणकीर्तनम् ।
स्वभावाज्जायते कर्म सदसच्चेति सर्वथा ॥ ३८ ॥
सत्त्यागादसदासङ्गान्नानायोनिभ्रमो भवेत् ।
आधिव्याधिदरिद्रोत्थपीडाविस्मारितात्मनः ॥ ३९ ॥
उद्रिक्ततमसो देवि न शुभं स्यात्कदाचन ।
तस्मात्कर्तव्यमेवेह देहपर्यवसायि यत् ॥ ४० ॥
देहान्ते कर्मसम्बन्धो न भविष्यति कर्हिचित् ।
प्रत्यवायनिवृत्त्यर्थमनिष्टाचरणस्य च ॥ ४१ ॥
नित्यं नैमित्तिकं कार्यं काम्यं कर्म परित्यजेत् ।
एवं यो वर्त्तते देवि निष्प्रत्यूहं स सिध्यति ॥ ४२ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामलोलुपः ।
स सिद्धिमिह नाप्नोति परत्र न पराङ्गतिम् ॥ ४३ ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोहं त्वया प्रिये ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ४४ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे द्वाविंशं पटलम् ॥ २२ ॥

## त्रयोविंशं पटलम् ॥ २३ ॥

॥ पार्वत्युवाच ॥

भूयोहं श्रोतुमिच्छामि तन्मे ब्रूहि सदाशिव ।
भूतले भगवद्भार्या नानायोनिषु संस्थिताः ॥ १ ॥

तत्र तत्र विचित्राणि कर्माण्यपि कृतानि च ।
क्वचित्तीर्थं क्वचिद्दानं क्वचिद्धोमं क्वचिज्जपः ॥ २ ॥
क्वचिन्मखादिचरणं स्वाध्यायाचरणानि च ।
पितृदेवार्चनं क्वापि ब्राह्मणातिथिपूजनम् ॥ ३ ॥
क्वचिन्निन्दादिकरणं देवब्राह्मणयोः सतां ।
क्वचिद्दत्तविलोपश्च तथेन्द्रियविलोभनं ॥ ४ ॥
असत्यभाषणं चैव पैशुन्यं भूतहिंसनम् ।
स्वर्णस्तेयादिकं चैव सुरामांसनिषेवणम् ॥ ५ ॥
द्रोहमात्सर्यहिंसादिपाकभेदादिकं तथा ।
स्वस्ववर्णाश्रमाचारोल्लङ्घनं कामवर्त्तनं ॥ ६ ॥
स्वगुणाख्यानमीशान पङ्क्तिभेदो वृथा क्रिया ।
परेषां मर्मकथनं म्लेच्छान्नात्कापिजीवनम् ॥ ७ ॥
निषिद्धाचरणं देव विहिताचारलङ्घनं ।
गोभूगजाश्वकन्यादेस्तथा विक्रयणं प्रभो ॥ ८ ॥
वेदविक्रयणं चैव भूतसन्त्रासनं तथा ।
आलस्यात्कर्मणस्त्यागस्तथैवाहङ्कृतेरपि ॥ ९ ॥
कर्मण्येतानि देवेश सदसन्ति महान्त्यपि ।
प्रारब्धसञ्चितान्येव क्रियमाणानि यानि च ॥ १० ॥
तेषामन्तं न पश्यामि कल्पकोटिशतैरपि ।
स्वरूपज्ञानमात्रेण सञ्चितक्रियमाणयोः ॥ ११ ॥
श्रुतिसिद्धो भवेन्नाशः प्रारब्धस्य तु न क्वचित् ।
नाभुक्तं क्षीयते कर्म कर्मणां भोगतः क्षयः ॥ १२ ॥
इत्येवं शास्त्रसिद्धान्तः सर्वथैव त्वयोदितः ।
प्रारब्धविद्यमानत्वात्स्वरूपस्मरणेपि च ॥ १३ ॥
कथं वैकुण्ठगमनं गोचरो (१)ग्रस्तकर्मणः ।

(१) "न्यस्तकर्मणः" इत्यपि पाठः ।

अभुक्तान्येव कर्माणि विहाय यदि यान्ति ताः ॥ १४ ॥
न विना कर्तृ(१)सम्बन्धं क्षणं तिष्ठन्ति तान्यपि ।
इत्येनं संशयं देव छेत्तुमर्हसि मामकम् ॥ १५ ॥

शिव उवाच ।

साधु पृष्टं त्वया भद्रे रहस्यं परमाद्भुतम् ।
यस्य श्रवणमात्रेण कर्मबन्धाद्विमुच्यते ॥ १६ ॥
सञ्चितं क्रियमाणं च तस्य नश्यति सर्वथा ।
विरहाग्न्याहुतीभूतशरीरा या हि केवलम् ॥ १७ ॥
निक्षिप्य भूते भूतोत्थं तैजसं वपुरास्थिताः ।
प्रारब्धसहिता एव ब्रह्मलोकं व्रजन्ति ताः ॥ १८ ॥
ब्रह्मलोकाद्यदा चोर्ध्वं गच्छन्ति भगवत्प्रियाः ।
वकुण्ठ निकटे प्राप्ते बलीयान् पवनो ह्यवन् ॥ १९ ॥
तेनाविष्टास्ततः सख्यः कम्पयन्ति वपुर्लताः ।
वपुःकम्पेन देवेशि प्रारब्धानां च पङ्क्तयः ॥ २० ॥
वृक्षस्य इव पुष्पाणि क्षरन्ति क्रमशोऽपि च ।
कर्मसम्बन्धरहिता यान्ति वैकुण्ठमुज्वलाः ॥ २१ ॥
सदसन्त्यपि कर्माणि क्षरितानि शरीरतः ।
यानाश्रयन्ति सततं वक्ष्ये तान् त्वं शृणु प्रिये ॥ २२ ॥
यैः सेवाग्रहणादीनि स्तोत्राणि रचितान्यपि ।
उपकारः कृतो यैर्वा धनधान्याम्बरार्पणैः ॥ २३ ॥
तद्गुणश्रवणे हृष्टास्तान्निन्दायां च दुःखिताः ।
सहभोज्याः सहवासाः सहयानाः सहासनाः ॥ २४ ॥
तानाश्रयन्ते देवेशि सत्कर्माणि न संशयः ।
यैस्तु दुःखं कृतं तासां निन्दापारुष्यपैशुनैः ॥ २५ ॥
तदर्थहरणं चैव तद्दोषस्यैव कीर्तनम् ।

(१) 'कर्मसम्बन्धं' इ० पा० ।

वृथापवादकथनं ताडनं तर्जनं तथा ॥ २६ ॥
असत्कर्माणि सर्वाणि ह्याश्रयन्ते खलान् हि तान्।
कर्मणां देहसम्बन्धो नात्मनस्तु कदाचन ॥ २७ ॥
स्तुतिर्निन्दापि देवेशि देहगा नात्मगोचरा।
तस्माद्देहस्य संस्तुत्या निन्दया वापि पार्वति ॥ २८ ॥
प्राप्यते पुण्यपापानि तदीयानि न संशयः।
पुण्यपापे निहत्येवं वैकुण्ठे विहरन्ति ताः ॥ २९ ॥
वैष्णवं धाम यास्यन्ति सात्त्विक्यो भगवत्प्रियाः।
द्विपरार्द्धावसाने तु यास्यन्ति युगपद्धि ताः ॥ ३० ॥
राजस्यश्चापि वैरञ्चं तामस्यो मन्निकेतनम्।
न प्रकारविभेदोऽस्ति कर्महानौ गिरीन्द्रजे ॥ ३१ ॥
गुणानुरूपाञ्च गतिं सर्वे यान्ति न संशयः।
प्रकारं शृणु तत्रापि वैकुण्ठगमनं प्रति ॥ ३२ ॥
वासनालिङ्गमेतासां देहान्ते पृथिवीं विशेत्।
कियत्कालं ततः स्थित्वा पार्थिवेन्द्रियसंयुता ॥ ३३ ॥
पार्थिवं विषयं देवि सेव्यमाना जलं विशेत्।
कियत्कालं ततः स्थित्वा लब्ध्वा तत्रेन्द्रियं रसं ॥ ३४ ॥
अतिदिव्यं सेव्यमाना तेजस्तत्वं समाविशेत्।
कियत्कालं ततः स्थित्वा तैजसेन्द्रियसंयुता ॥ ३५ ॥
विषयं रूपमासाद्य वायुतत्त्वं ततो विशेत्।
कियत्कालं ततः स्थित्वा त्वगिन्द्रियसमन्विता ॥ ३६ ॥
दिव्यस्पर्शं च विषयं सेव्यमाना खमाविशेत्।
कियत्कालं ततः स्थित्वा लब्ध्वा च श्रोत्रमिन्द्रियम् ॥ ३७ ॥
विषयं शब्दमासाद्य ततो भूतादिमाविशेत्।
भूतादितामसं हित्वा राजसं याति सुन्दरि ॥ ३८ ॥
ततः सत्त्वमयं प्राप्य वैकुण्ठे रमते चिरम्।

अनेन क्रमयोगेन गमिष्यन्ति हरेः प्रियाः ॥ ३९ ॥
एतत्तुभ्यं समाख्यातं वैकुण्ठगमनादिकं ।
नाख्येयं यस्य कस्यापि तव स्नेहात्प्रकाशितम् ॥ ४० ॥
त्वयापि गोपनीयं हि सत्यं सत्यं न संशयः ।
अपात्रायापि पुत्राय दत्त्वा पापमवाप्नुयात् ॥ ४१ ॥
एतत्ते सर्वमाख्यातं । किं भूयः श्रोतुमिच्छसि ॥ ४२ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमा-
संवादे त्रयोविंशं पटलम् ॥ २३ ॥

---

## चतुर्विंशं पटलम् ॥ २४ ॥

पार्वत्युवाच ।

देव देव महेशान धूर्जटे नीललोहित ।
भूयोहं श्रोतुमिच्छामि नित्यलीलाविनिर्णयम् ॥ १ ॥
निर्गुणे स्यात्कथं लीला लीला चेन्निर्गुणः कथम् ।
सगुणे वा कथं लीला नित्या गुणमयी यतः ॥ २ ॥
यत्तु कालत्रयाबाध्यं तच्च नित्यं प्रचक्षते ।
कदाचिद्वा पुरा जाता लीलेयं वा भविष्यति ॥ ३ ॥
अथवा नैवं जातेयं भविष्यति न वा पुनः ।
इदानीं लीला चेज्जाता जन्यकार्यं विनश्यति ॥ ४ ॥
कथं नित्येति तां वक्तुं शक्यते विदुषा प्रभो ।
यद्यक्षरस्य हृदये लीला नित्यत्वमागता ॥ ५ ॥
पुरा ह्यविद्यामानत्वान्नित्यतायाः कथं स्थितिः ।
इति मे संशयं देव छेत्तुमर्हसि साम्प्रतम् ॥ ६ ॥

त्वदन्यं नैव पश्यामि सन्देहविनिवर्त्तनम् ।
न तवाविदितं किञ्चित्सर्वज्ञोसि यतः स्वयम् ॥ ७ ॥

॥ शिव उवाच ॥

शृणु पार्वति वक्ष्यामि तव स्नेहादशेषतः ।
यस्य श्रवणमात्रेण भवेद्विज्ञानमुत्तमं ॥ ८ ॥
निर्गुणेऽप्यक्षरातीते लीलायाः किं विरुध्यते ।
सगुणस्य तु या लीला सगुणा सा निगद्यते ॥ ९ ॥
निर्गुणे या भवेल्लीला सा लीला निर्गुणा भवेत् ।
निर्णयं तत्र वक्ष्यामि लीलाया ब्रह्मणस्तथा ॥१०॥
रसरूपं भवेद्ब्रह्म वेदविद्यासु गीयते ।
संयोगविलम्भात्मा रसः स्याद्द्विदलात्मकः ॥ ११ ॥
संयुक्तयोस्तु संयोगो विप्रलम्भो वियुक्तयोः ।
नानाभावात्मिका तत्र लीला भवति शाश्वती ॥ १२ ॥
ब्रह्मणो निर्गुणत्वाच्च नित्यत्वाच्चेति सुन्दरि ।
नित्या च निर्गुणा चैव लीलेयं न विरुध्यते ॥ १३ ॥
केचिदाहुर्निर्गुणस्य नैव लीलोपयुज्यते ।
लीलाविशि(१)ष्टं सगुणं मायासम्बन्धभावतः ॥ १४ ॥
निर्गुणं तु परं सूक्ष्ममवाङ्मानसगोचरं ।
वर्णयन्ति विभागेन मायामोहितचेतसः ॥ १५ ॥
श्रुतेर्विरोधमाशङ्क्य विनियोगः पृथक् कृतः ।
रसश्रुतिविरोधं तु न ते पश्यन्ति मोहिताः ॥ १६ ॥
निषेधयन्ति चाकारं श्रुतयः प्राकृतं प्रिये ।
आनन्दमात्रमाकारं रसश्रुतिरुपासते ॥ १७ ॥
अन्यथा द्विदलः सोऽयं श्रुतिसिद्धः प्रियंवदे ।
निराकारस्य देवेशि नोपयुक्तः कदाचन ॥ १८ ॥

(१) "लीलाविष्टं च" इत्यपि पाठः ।

प्रलापाः शतशः सन्ति श्रुतियुक्तिमजानतां ।
न तेषु रमते चित्तं रसज्ञस्य विवेकिनः ॥ १९ ॥
रसस्तादृग्विधो देवि लीलाभिर्योनुभूयते ।
तस्माल्लीलारसमयी रसो लीलामयः स्मृतः ॥ २० ॥
तादात्म्यादेकरूपत्वाल्लीला ब्रह्ममयी भवेत् ।
लीलोपयोगिनो भावा विभावा व्यभिचारिणः ॥ २१ ॥
आलम्बनानुभावाश्च तेपि तादृग्विधाः प्रिये ।
चन्द्रालङ्कारभूषादिमालालेपसमीरणाः । २२ ॥
दीर्घिकोपवनारामऋतुवृक्षलतादयः ।
वस्त्रपानाशनं भृङ्गशुककोकिलकूजितम् ॥ २३ ॥
रसोत्पादनसामग्री रसरूपा हि सा स्मृता ।
लीलोपयोगिनस्तस्मात्पदार्था रसरूपिणः ॥ २४ ॥
द्रवीभूतो घनीभूतो रसस्य द्विविधा स्थितिः ।
द्रवीभुतः प्रियाधारो घनीभूतोक्षिगोचरः ॥ २५ ॥
तस्मात्प्रियाभीष्टभावान् स्वतः प्रकटयत्यसौ ।
द्रवीभूतः प्रियाधारः प्रियाभावात्मको रसः ॥ २६ ॥
प्राधान्यं तत्र चेच्छन्ति घनीभूतादपि प्रिये ।
रसो नैव प्रसिध्येत प्रियालम्बनवर्जितः ॥ २७ ॥
प्रियादर्शे रसः पश्येत् स्वात्मानं प्रतिबिम्बवत् ।
आदर्शापसरे यद्वन्मुखस्यानुपलम्भनम् ॥ २८ ॥
अङ्गहीनो रसस्तद्वत्स्वानुभूतिं न विन्दति ।
आनन्दो हि रसस्तस्मात्प्रियाप्रियदलद्वयम् ॥ २९ ॥
आनन्दरूपा सामग्री सवभावात्मको रसः ।
न मायागुणसंसर्गः कदाचित्कुत्रचित्प्रिये ॥ ३० ॥
रसरूपं निर्गुणं च नित्यलीलाविहारि यत् ।
अद्वैतं ब्रह्म परमं पुरुषोत्तमसंज्ञकम् ॥ ३१ ॥

अतीतानागता चासौ वर्तमानापि सुन्दरि ।
नित्या एवेति विज्ञेया लीलेयमनपायिनी ॥ ३२ ॥
इत्येतत्कथितं देवि प्रश्नमन्यं निशामय ।
यस्य श्रवणमात्रेण सन्देहो विनिवर्त्तते ॥ ३३ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे चतुर्विंशं पटलम् ॥ २४ ॥

## पंचविंशं पटलम् ॥ २५ ॥

॥ शिव उवाच ॥

पुरा ह्यविद्यमानत्वान्नित्यतायाः कथं स्थितिः ।
इति यद्देवि ते (१)प्रोक्तं तत्र मे निर्णयं (२)शृणु ॥ १ ॥
अविद्यमानं यत्किञ्चिन्नैव प्रादुर्भविष्यति ।
सर्वथा विद्यमानं हि वस्तु प्रादुर्भवेत्प्रिये ॥ २ ॥
तस्मात्सदंशतो देवि प्रपञ्च उपवर्ण्यते ।
घटो नास्तीत्युच्यमाने घटसत्ता तु लभ्यते ॥ ३ ॥
असच्छ्रुत्या तथा देवि प्रपञ्चः सन्निरूप्यते ।
अपरोक्षपरोक्षत्वं सदसच्छ्रुतिनोदितम् ॥ ४ ॥
तथा प्रपञ्चलीलेयं रसलीलापि तादृशी ।
सर्वास्ता नित्यरूपा हि विज्ञेया वेदवादिभिः ॥ ५ ॥
यथा मृदि घटस्यैव प्रागभावः प्रकल्प्यते ।
मृत्सकाशात्समुत्पत्तिः पश्चात्तस्योपचर्यते ॥ ६ ॥
न पुनस्तस्य देवेशि ह्यभावोऽत्यन्तसंज्ञितः ।
आम्रबीजास्थितो ह्याम्रस्तस्माद्व्यक्तो यथा भवेत् ॥ ७ ॥

(१) "पृष्टं इत्यपि पाठः ।
(२) "निर्णये" इ० पा० ।

अभूतमेव देवेशि यदि व्यक्तिं प्रयाति हि ।
आम्रबीजात्(१) छुद्छुदस्य कथं व्यक्तिर्भवेन्नहि ॥ ८ ॥
व्यावहारिकी वास्तवी तथा च प्रातिभासिका ।
सत्ता तु त्रिविधा ज्ञेया देवि शास्त्रार्थकोविदैः ॥ ९ ॥
शुक्तौ रजतमित्येषा सत्ता स्यात्प्रातिभासिकी ।
गजाश्वादिमहासम्पत् (२)स्वाप्निकी वापि तद्विधा ॥१०॥
व्यवहारार्थमित्येषा जागर्ति व्यावहारिकी ।
ब्रह्मसत्ता तु देवेशि वास्तवी परिकीर्त्तिता ॥ ११ ॥
ब्रह्मसत्तावशाद्देवि लीलासत्यत्वमुच्यते ।
सत्यस्याभावमीशानि शक्तः कर्त्तुं न कश्चन ॥ १२ ॥
तस्माद्देवि यथाकालं लीलाविर्भावमुच्यते ।
द्वादशद्वादशतमे स्वामिन्या वत्सरे प्रिये ॥ १३ ॥
आविर्भवति लीलेयं पौनःपौन्येन सर्वदा ।
एतावति गते काले ह्यक्षरे परमात्मनि ॥ १४ ॥
रहस्यरमणालोके जायते सा सुमङ्गला ।
ततः प्रियासु जायेत लीलाविस्तरणं ततः ॥ १५ ॥
अक्षरात्मनि सा लीला ततश्चास्थिरतां व्रजेत् ।
स्मृतिमात्रा हि सा देवि नतु साक्षात्कदाचन ॥ १६ ॥
गते द्वादशमे वर्षे स्वामिन्याः परमेश्वरि ।
पुनस्तथावलोकाय कामांशेना(३)त्मयोगतः ॥ १७ ॥
इच्छा प्रवर्त्तते देवि कूटस्थस्य परात्मनः ।
ततश्च (४)त्रिविधा लीला काले प्रादुर्भवेत्प्रिये ॥ १८ ॥

---

(१) "आम्रबीजादुभ्रवस्य" इत्यपि पाठः ।

(२)

(३) "नामयोगतः" इत्यपि पाठः ।

(४) एतल्लीलात्रविध्यं सुन्दरीतन्त्रे आलमन्दारसंहितायां श्रीशिवेन श्रीपार्वत्यै सुस्पष्टं निरूपितम् ।

श्वेतद्वीपस्य तु च्छाया मथुरायां प्रतिष्ठिता ।
वैकुण्ठप्रतिबिम्बस्तु द्वारिकायां तथा प्रिये ॥ १९ ॥
व्रजस्तु साक्षाद्देवेशि गोलोकप्रतिबिम्बजः ।
गोलोकातीत(१)लीला(२) च रसानन्दमयी शिवे ॥२०॥
आविर्भवति देवेशि समये समये हि सा ।
समयं तं प्रवक्ष्यामि शृणुष्वैकाग्रमानसा ॥ २१ ॥
परमाणुद्वयमणुः त्रसरेणुः त्रिभिश्च तैः ।
त्रसरेणुत्रयेणैव कालः स्यात् त्रुटितसंज्ञितः ॥ २२ ॥
स शतेन भवेद्वेधः त्रिभिर्वेधैर्लवः स्मृतः ।
निमिषस्त्रिलवैर्देवि क्षणो ज्ञेयस्त्रिभिश्च तैः ॥ ॥ २३ ॥
क्षणैश्च पञ्चभिः काष्ठा पञ्चभिर्दशभिस्तथा ।
काष्ठाभिर्लघु विज्ञेयं लघुभिर्दशपञ्चभिः ॥ २४ ॥
घटिकैका तु विज्ञेया मुहूर्तो घटिकाद्वयम् ।
प्रहरः सप्तघटिकाश्चतुर्भिस्तैरहः स्मृतः ॥ २५ ॥
पुनश्चतुर्भिः प्रहरैरुच्यते तदहर्निशम् ॥ २६ ॥
दशभिः पञ्चभिः पक्षः पुनश्च दशपञ्चभिः ।
आद्यः शुक्लस्तथा कृष्णः पितृणां तदहर्निशम् ॥ २७ ॥
मासः पक्षद्वयेनोक्तः तावेव द्वौ ऋतुः स्मृतः ।
ऋतुत्रयेणाप्ययनं दक्षिणं परिकीर्तितम् ॥ २८ ॥

---

(१) तथैवोक्तं पुराणसंहितायां प्रथमेऽध्याये—
एवं ब्रह्मणि चिन्मात्रे निर्गुणे भेदवर्जिते ॥
गोलोकसंज्ञके कृष्णो दिव्यतीति श्रुतं मम ॥ ५४ ॥
नातः परतरं किंचिन्निगमागमयोरपि ॥
तथापि निगमो वक्ति ह्यक्षरात् परतः परः ॥ ५५ ॥
गोलोकवासिभगवानक्षरात्पर उच्यते ॥
तस्मादपि परः कोऽसौ श्रुतिभिर्गीयते सदा ॥ ५६ ॥
पाद्मेऽपि गोलोकलीलातोऽस्याः लीलायाः परत्वं पठ्यते ।
(२) "लीलेयं" इ० पा०

त्रयेणैवोत्तरं प्राहुर्देवानां तदहर्निशम् ।
संवत्सरस्तु ह्ययनद्वयं देवि निगद्यते ।
तच्छतं मानवानां च परमायुर्निरूपितम् ॥ २९ ॥
दिव्यैर्द्वादशसाहस्रैर्वर्षाणां सुरवन्दिते ।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगाः ॥ ३० ॥
चतुर्युगीसहस्रेण ब्रह्मणो दिनमुच्यते ।
तावत्यैव भवेद्रात्रिस्त्रिलोकी यत्र लीयते ॥ ३१ ॥
ब्रह्मणो दिवसे जाता मनवस्तु चतुर्दश ।
प्रतिमन्वन्तरे देवि युगानामेकसप्ततिः ॥ ३२ ॥
प्रतिमन्वन्तरे देवि विष्णोरवतरणं भुवि ।
इन्द्राद्या देवताश्चैव तथा सप्तर्षयश्च ये ॥ ३३ ॥
मन्वन्तरविभेदेन भिन्ना एव भवन्ति हि ।
स्वायम्भुवः स्वारोचिषोत्तमतामसरैवताः ॥ ३४ ॥
चाक्षुषश्चेति मनवो व्यतिक्रान्ताः षडम्बिके ।
वैवस्वतो मनुर्नाम सप्तमोऽद्य प्रवर्तते ॥ ॥ ३५ ॥
चतुर्युगी व्यतिक्रान्ता तस्याष्टाविंशति प्रिये ।
अष्टाविंशतिके देवि कलौ कीलेयमागता ॥ ३६ ॥
परार्द्धः प्रथमोऽतीतो द्वितीयस्तु प्रवर्तते ।
तत्रापि प्रथमाब्दस्य नवमो मास उच्यते ॥ ३७ ॥
दिनं तु षोडशं चैव यामस्तस्यद्वितीयकः ।
मुहूर्त्तं तृतीयं देवि वर्त्ततेऽद्य प्रियंवदे ॥ ३८ ॥
एवं विधेरहोरात्रैर्ब्रह्मणो हि दिनं स्मृतम् ।
पक्षमासविभेदेन यावत्संवत्सरः प्रिये ॥ ३९ ॥
एवं संवत्सरशतं तदा स्याद्ब्रह्मणो लयः ।
विष्णोर्नेत्रनिमेषेण यात्यायुर्ब्रह्मणोऽखिलम् ॥ ४० ॥
तावन्निमेषमारभ्य लवक्षणविभेदतः ।

यावद्वर्षशतं विष्णोर्मदीयः स्यान्निमेषकः ॥ ४१ ॥
मन्निमेषक्रमेणापि यावद्वर्षशतं भवेत् ।
निमेषमात्रमीशस्य तन्निमेषक्रमेण च ॥ ४२ ॥
शतवर्षं भवेद्यावत्तावच्छित्रनिमेषकः ।
तन्निमेषक्रमेणैव यावद्वर्षसहस्रकम् ॥ ४३ ॥
अपाङ्गस्फुरणं तावत्स्वामिन्याः कृष्णविभ्रमे ।
तन्निमेषक्रमेणैव वर्षं द्वादशकं भवेत् ॥ ४४ ॥
लीलावलोकनार्थाय भूयः कामो भवेत्तदा ।
वर्षद्वादशकेऽतीते स्वामिन्याः सुरपूजिते ॥ ४५ ॥
पौनःपौन्येन लीलायाः नित्याविर्भाव उच्यते ।
अक्षरस्यैव हृदये यः कामांशोप्याधिष्ठितः ॥ ४६ ॥
तत्संयोगाद्दिदृक्षास्य स्वस्वकाले भवेद्धि सा ।
एवं नित्यैव सा लीला रसरूपा प्रियंवदे ॥ ४७ ॥
संयोगविप्रलम्भाख्यदलाभ्यां यानुवर्णिता ।
रसो यदाविप्रलम्भदलं समधितिष्ठति ॥ ४८ ॥
तदेवाविर्भवत्येषा लीलाच सुरपूजिते ।
यदातु संयोगदलं समधिव्याप्य तिष्ठति ॥ ४९ ॥
निजधाम्नि तदा लीला साक्षात्कृष्णकृता भवेत् ।
यदा संयोगविश्लेषसन्धिं याति रसः प्रिये ॥ ५० ॥
तदा प्रबोधसमयो निकटः कृष्णचेतसाम् ।
गुरोः सत्सम्प्रदायेन शास्त्रार्थस्यानुरूपतः ॥ ५१ ॥
वर्त्तितव्यं ततो भद्रे साधनैरात्मलब्धये ।
इत्येवं ते मया ख्यातं यत्पृष्टोहं सुलोचने ॥ ५२ ॥
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ५३ ॥
इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती
संवादे पञ्चविंशत्तमं पटलम् ॥ २५ ॥

# षड्विंशं पटलम् ॥ २६ ॥

पार्वत्युवाच ॥

महेश श्रोतुमिच्छामि साधनानां विनिर्णयम् ।
यस्य श्रवणमात्रेण सर्वं हि सफलं भवेत् ॥ १ ॥

श्रीशिव उवाच ॥

शृणु देवि प्रवक्ष्यामि साधनस्य विनिर्णयम् ।
गुह्याद्गुह्यतरं साक्षान्नवाच्यं यस्य कस्यचित् ॥ २ ॥
तन्त्रार्थोऽयं रहस्यार्थो यस्तु वेदेषु गोपितः ।
ईश्वरात्तु मया लब्धः प्राप्तस्तेन सदाशिवात् ॥ ३ ॥
मञ्चे फलकमापन्नो लक्षयोजनविस्तृते ।
सदाशिवोऽशृणोदेतत्कूटस्थोपरिसंस्थया ॥ ४ ॥
इच्छाशक्त्या तु देवेशि वर्ण्यमानं मया रहः ।
तच्च ते गदितं साध्वि शृण्वतः परमच्युत ॥ ५ ॥
एकदा मे वितर्कोभूद्विजने स्मरतः प्रिये ।
अहमेवेश्वरो लोके मदन्यो वापि कश्चन ॥ ६ ॥
इति तर्कयता देवि समाधिर्हि मया धृतः ।
तस्मिन् युगसहस्राणि व्यतीयुः पञ्च सुन्दरि ॥ ७ ॥
(१)समाधिस्थेन देवेशि श्रुतमीश्वरभाषितम् ।
तच्छ्रुत्वा हृदयं देवि निर्विकल्पमभून्मम ॥ ८ ॥
तदाप्रभृति देवेशि लीलामेनां रहःस्थितः ।
ध्यायामि ध्यानयोगेन निर्विकल्पेन चेतसा ॥ ९ ॥
समाधावीश्वरेणोक्तमिदं तन्त्रं यतो मम ।
तस्मान्माहेश्वरं तन्त्रमित्येवंख्यातिमागतम् ॥ १० ॥
चतुःषष्टीनि तन्त्राणि मयैवोक्तानि पार्वति ।

---

(१) "समाधिगीतं" इ० पा० ।

मोहोच्चाटवशीकारमारणार्थानि तानि तु ॥ ११ ॥
सद्यःप्रत्ययहेतूनि नानामन्त्रमयानिच ।
मोहनानि तु लोकस्य इन्द्रजालकलादिभिः ॥ १२ ॥
तानि विस्तरतो देवि तवाग्रे कथितानि च ।
न तेषु विद्यते किञ्चित्परमार्थं सुरेश्वरि ॥ १३ ॥
मायिकं वर्णितं सर्वं (१)मायाजीवोपयोगिकम् ।
इदं माहेश्वरं तन्त्रं समाधौ यत्कृतं मया ॥ १४ ॥
प्रबोधसाधनीभूतं प्रियाणामिति मे मतम् ।
अन्य(२)थेश्वरविज्ञानान्नान्यदेतत्प्रयोजनम् ॥ १५ ॥
वैष्णवान्यपि तन्त्राणि पञ्चरात्राभिधानि तु ।
विष्णुप्रोक्तानि देवेशि पञ्चविंशतिसंख्यया ॥ १६ ॥
हयशीर्षं तन्त्रमाद्यं तन्त्रं संमोहनं तथा ।
वैष्णवं पौष्करं तन्त्रं प्रह्लादं गार्गमाणवम् ॥ १७ ॥
नारदीयं च श्रीवत्सं शाण्डिल्यं चेश्वरं तथा ।
सत्योक्तं शौनकं तन्त्रं वाशिष्ठं ज्ञानसागरम् ॥ १८ ॥
स्वायम्भुवं कापिलं च तार्क्ष्यं नारायणीयकम् ।
आत्रेयं (३)नारसिंहाख्यं आद्याक्षं(४) च तथारुणम् ॥१९॥
वैहायसं तथा ज्ञानं विश्वोक्तं चेति सुन्दरि ।
अत्यन्तस्खलितानाञ्च जनानां वेदमार्गतः ॥ २० ॥
पञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ।
बौद्धतन्त्राणि देवेशि वर्त्तन्ते सुबहून्यपि ॥ २१ ॥
तानि प्रोक्तानि सर्वाणि बौद्धरूपेण विष्णुना ।

---

(१) "मया" इ०पा० ।

(२) तन्महेश्वरविख्यातं 'तन्मयेश्वरविख्यातं' तन्ममेश्वर-विख्या वेत्यपि पाठः ।

(३) "नार सिंहाक्षं" इ० पा० ।

(४) "आद्याक्षं" इ० पा० ।

न तत्र धर्मलेशोऽस्ति मोहनानि दुरात्मनाम् ॥ २२ ॥
अन्ते तु नरकायैव भविष्यन्ति न संशयः ।

पार्वत्युवाच ॥

किमर्थं देवदेवेन विष्णुना सत्त्वमूर्तिना ॥ २३ ॥
दयावतापि लोकस्य प्रतारणमहो कृतम् ।
निर्दोषे पुरुषे देव नानृतं स्यात्कदाचन ॥ २४ ॥
केन प्रयुक्तस्तु हरिर्मोहशास्त्रमरीरचत् ।
एतन्मे ब्रूहि सर्वज्ञ सन्देहविनिवृत्तय ॥ २५ ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि कारणं मोहकल्पने ।
एकदा विधिविष्णू च स्वाभिमानावृतान्तरौ ॥ २६ ॥
नित्यं विवदमानौ तावन्योन्यं प्रतिचक्रतुः ।
अहं ब्रह्मेति न भवानित्येवं पूर्णमानिनौ ॥ २७ ॥
क्रुद्धचित्तावुभौ देवि शेपतुस्तौ परस्परम् ।

ब्रह्मोवाच ॥

यस्मात्त्वमामवज्ञाय स्वात्मानं बहु मन्यसे ॥ २८ ॥
अपूज्यस्त्वं तु लोकेषु भविष्यसि न संशयः ।
इत्येवं दारुणं शापं निशम्य मधुसूदनः ॥ २९ ॥
क्रुद्धः शापं प्रतिददौ त्वमप्येवं भविष्यसि ।
अन्योन्यं शापमाश्राव्य भवितव्येन मोहितौ ॥ ३० ॥
मामेव शरणं यातौ परिम्लानमुखावुभौ ।
व्यवस्था तु कृता देवि मया शापस्य वै तयोः ॥ ३१ ॥
ब्रह्मणो यन्मया प्रोक्तं तत्ते वक्ष्यामि संशृणु ।
ब्रह्मन्नो वैष्णवं वाक्यमन्यथा भवति क्वचित् ॥ ३२ ॥
तस्मादपूज्यो लोकेषु भविष्यति भवान् किल ।
पञ्चायतनपूजायां न शापस्ते भविष्यति ॥ ३३ ॥

केवलं भवतः पूजाबाधकं शाप एव हि ।
त्वमेकं वपुराधत्स्व शापस्य विषयं हरे ॥ ३४ ॥
तत्रैवास्तु च ते शापः सत्त्वमूर्त्तौ न सर्वथा ।
एवमुक्ते मया चोभौ ययतुः स्वस्य केतनम् ॥ ३५ ॥
एतस्मिन्नन्तरे देवि देवासुरमहारणः ।
बभूव तत्र समरे जिता देवैः सुरेतराः ॥ ३६ ॥
जयोपायं प्रकुर्वाणास्तपस्तेपुर्महत्तरम् ।
तपोविघ्नाय तान्देवो बौद्धरूपं स्वयं गतः ॥ ३७ ॥
बौद्धतन्त्राणि निर्माय दैत्येभ्यः समदर्शयत् ।
देहादन्यो न चात्मास्ति न मुक्तिर्मरणात्परा ॥ ३८ ॥
न देवाः पितरः सन्ति मुधा वेदेन दर्शिताः ।
स्ववृत्तये तु निगमः कल्पितो ब्राह्मणैरिह ॥ ३९ ॥
सर्वथा न प्रमाणत्वे धार्यः स्यादसुरेश्वराः ।
एवं तन्त्रेषु नैरात्म्यवादमुख्येषु मोहिताः ॥ ४० ॥
असुराः समसज्जन्त बौद्धमायाहृताशयाः ।
तदाप्रभृति तद्रूपं अपूज्यत्वं हरेर्ययौ ॥ ४१ ॥
(१)बौद्धोपदेशस्य ग्रहो जातश्च परमेश्वरि ।
तस्मात्तदुक्ततन्त्राणि नास्तिवादपराणि च ॥ ४२ ॥
न ग्राह्याणि बुधैर्देवि धर्माधर्मविचारणे ।
इदं माहेश्वरं तन्त्रं सर्वतन्त्रोत्तमोत्तमम् ॥ ४३ ॥
सामरस्येच्छया शक्त्या यथाभूतार्थमीरितम् ।
अक्षरस्यासनीभूतस्तन्निशम्य सदाशिवः ॥ ४४ ॥
प्रोक्तवानीश्वरायैतत् यथाश्रुतमनिन्दिते ।
समाधावीश्वरः प्राह मह्यं देवि यथाश्रुतम् ॥ ४५ ॥
मयापि च तव स्नेहादुच्यते नान्यथा प्रिये ।

(१) 'शुद्धोदनस्य च गृहे जातस्य' इ० पा० ।

त्वया तु गोपनीयं हि न वाच्यं यस्य कस्यचित् ॥ ४६ ॥
एतत्तन्त्रार्थविज्ञाने न सर्वे ह्यधिकारिणः ।

पार्वत्युवाच ॥

अधिकारविहीनोपि यदि चात्र प्रवर्त्तते ॥ ४७ ॥
निःशङ्को निर्भयो भूत्वा प्रेमासक्तिसमन्वितः ।
नित्यानन्दं च पुरुषं विभाव्य स्वपतिं हृदि ॥ ४८ ॥
तदीयविरहज्वालाग्लपितां तनुमुत्सृजेत् ।
कां गतिं याति देवेश तन्मे साधु निरूपय ॥ ४९ ॥

शिव उवाच ॥

ब्रह्माभासमयः कश्चिद्यदि जीवः परिभ्रमन् ।
अनेकजन्मसंसिद्धपुण्यराशिभिरूर्ज्जितैः ॥ ५० ॥
साधुसङ्गेन देवेशि यदिदं ज्ञानमाप्नुयात् ।
जितेन्द्रियो निर्विषयः प्रेमासक्तिसमन्वितः ॥ ५१ ॥
त्यजन् देहमवाप्नोति कुमार्यः प्रापुरेव यत् ।
न जले जलवत्तस्य लयो भवति चाक्षरे ॥ ५२ ॥
यदयं विरही जातो नित्यलीलाविहारिणि ।
न पश्यति तथा चापि नित्यलीलाविहारिणम् ॥ ५३ ॥
अक्षराभासमात्रत्वात् स्वस्यैव परमेश्वरि ।
तस्माद्वृन्दावने देवि (१)कूटस्थहृदयङ्गमे ॥ ५४ ॥
लीलामनुभवन् तिष्ठेत्पुनरागतिवर्ज्जितः ।
इति ते निर्णयः प्रोक्तोऽनधिकारिणि सुन्दरि ॥ ५५ ॥
अतः परं च भजने निर्णयं वच्मि संशृणु ॥ ५६ ॥

इति माहेश्वरतन्त्रे शिवोमासंवादे षड्विंशं पटलम् ॥ २६ ॥

---

(१) 'अक्षरे हृदयङ्गमे' इ० पा० ।

# सप्तविंशं पटलम् ॥ २७ ॥

शिव उवाच ॥

नित्यानन्दविहाराणां प्रियाणां परमेशितुः ।
स्वभर्त्तुर्भजनं देवि कर्त्तव्यं सर्वथैव हि ॥ १ ॥
भजनाङ्गं सदाचारः कर्त्तव्यं कर्मशुद्धये ।
न सिद्धाः सिद्धिमवाप्स्यन्ति सदाचारविवर्ज्जिताः ॥ २ ॥
आचारहीनं न पुनन्ति वेदा आचारहीनं न तपः पुनाति ।
आचारहीनं न पुनन्ति तीर्थान्याचारहीनस्य च नैव सिद्धिः ॥३॥
आचारः प्रथमो धर्म आचारो हन्त्यलक्षणम् ।
आचाराल्लभते शुद्धिं तस्मात्तं सततं चरेत् ॥ ४ ॥
अनाचारेण मालिन्यं बुद्धिः समधिगच्छति ।
लीलावधारणं नास्ति मलिने बुद्धिदर्पणे ॥ ५ ॥
आचारः कथितः सद्भिः सर्वधर्मेषु सर्वदा ।
आचाररहितो धर्मो ह्यधर्मत्वेन कल्प्यते ॥ ६ ॥
आचाररक्षणं तस्मात्कर्त्तव्यं सर्वथा प्रिये ।
आचारो द्विविधः प्रोक्तो बाह्याभ्यन्तर एव च ॥ ७ ॥
भावसंशुद्धिमेवैकामाचारं ह्यान्तरं विदुः ।
तत्सिद्धये देहसाध्यो बाह्यः शौचादिरुच्यते ॥ ८ ॥
साध्यो भावः साधनं तु देहशुध्यादिकं प्रिये ।
तमाचारं प्रवक्ष्यामि येन संशुध्यते मनः ॥ ९ ॥
नाभाषेन्नावलोकेत शृणुयान्न कथञ्चन ।
न स्पृशेन्नोपजिघ्रेत नाश्नीयाद्विमतं च यत् ॥ १० ॥
यदेश्वरगुणान्वक्तुमीहते वाक् विजृम्भिता ।
तदैनां विध्यते पाप्मा विद्धा विमतभाषिणी ॥ ११ ॥
यदेश्वरं मूर्त्तिमंतमालोकयितुमिच्छति ।
चक्षुस्तदा पाप्मविद्धं विमतं पश्यति प्रिये ॥ १२ ॥

यदेश्वरगुणान् श्रोतुमीहते श्रोत्रमिन्द्रियम् ।
तदैव पाप्मना विद्धं जानीयाद्विमते च तत् ॥ १३ ॥
यदा निवेदितान्नेन नियमं रसनेहते ।
तदैव पाप्मना विद्धा विमतं प्रतिपद्यते ॥ १४ ॥
पापरूपं विजानीयाद्विमताचरणं च तत् ।
विमताचरणं पापमिन्द्रियमुपगच्छति ॥ १५ ॥
निरावरणमेवैतद्ध्यानाभ्यासः प्रपद्यते ।
नियम्य चेन्द्रियाण्यादौ अभ्यासेन दृढीयसा ॥ १६ ॥
यदा सर्वेन्द्रियाणां च नियमं कर्तुमक्षमः ।
रसनेन्द्रियमेवैकं जेयं सर्वजिगीषया ॥ १७ ॥
जिते रसे जितः कामः जिते (१)कामे जितेन्द्रियः ।
जितजिह्वोपस्थरतेरसाध्ययं किं तु(२) विद्यते ॥ १८ ॥
सिसृक्षोर्ब्रह्मणः पूर्वं स्तनाद्धर्मो विनिर्गतः ।
वृषरूपश्चतुर्वेदचतुःपादः शुभाकृतिः ॥ १९ ॥
ज्ञानं वैराग्यमत्युग्रं यस्य शृङ्गद्वयं प्रिये ।
सत्यं तपः कर्णयुगं दमो दानं तु चक्षुषी ॥ २० ॥
लांगूलमस्य चैश्वर्यं रोमावलिः पुण्यसन्ततिः ।
तेन स्पृष्टाः प्रजाः सर्वाः शुद्धसत्वा बभूविरे ॥ २१ ॥
ज्ञानवैराग्यसम्पन्ना मोक्षमार्गपरायणाः ।
तं दृष्ट्वा भगवान् ब्रह्मा पश्चात्पापमथासृजत् ॥ २२ ॥
स पाप्मा महिषाकारस्तमोभूतः शरीरिषु ।
अज्ञानं चाप्यनैश्वर्यमवैराग्यमधर्मकम् ॥ २३ ॥
चत्वारस्तस्य वै पादा छलद्रोहौ (३)शृङ्गद्वयम् ।

---

(१) "जिततृष्णो" इ० पा० ।
(२) नु ।
(३) "श्रुतिद्वयम्" इ० पा० ।

क्रोधमोहौ कर्णयुगं कामलोभौ हि चक्षुषी ॥ २४ ॥
मात्सर्यमुग्रलांगूलं ब्रह्महत्या शिरोऽस्य च ।
सुरापानं च हृदयं कटिः स्यादुपपातकम् ॥ २५ ॥
तेन स्पृष्टाः प्रजाः सर्वा नष्टसत्त्वा (१)मलीमसा ।
ज्ञानवैराग्यरहिताः काम्यकर्मकृतश्रमाः ॥ २६ ॥
आसुरेष्वेव भावेषु व्यसज्जन्त विमोहिताः ।
तस्मात्तं तु परिज्ञाय देहेन्द्रियचरं प्रिये ॥ २७ ॥
स्वाचारमाचरेत्प्राज्ञो यथा स्यादुज्वलात्मधीः ।
उज्वलत्वं तदा बुद्धेः समं पश्यति वै यथा ॥ २८ ॥
सुखेषु विद्यमानेषु दुःखशोकभयादिकम् ।
पश्यन् विरमते तेषु शुद्धत्वं च तदा धियः ॥ २९ ॥
न व्यथेन्निंदया चित्तं हर्षते न च संस्तुवैः ।
उदासीनोरिमित्रेषु साम्यं बुद्धिस्तदोज्वला ॥ ३० ॥
अलोलुपत्वमास्तिक्यं मुमुक्षुत्वं गभीरता ।
प्रसादः स्वात्मना सौख्यं लोकसङ्गनिवर्त्तनम् ॥ ३१ ॥
एकान्तसेवाभिरुचिर्दम्भमानविवर्जनम् ।
एतानि यत्र जायन्ते तस्य बुद्धिः समुज्वला ॥ ३२ ॥
आचारसेवनस्येह बुद्धिशुद्धिः परं फलम् ।
शुद्धायां च ततो बुद्धौ लीलाध्यानेऽर्हतां व्रजेत् ॥ ३३ ॥
शास्त्रदुष्टं भावदुष्टं लोकदुष्टमथापि वा ।
वर्जयेन्मतिमान्देवि सत्वशुद्धिविधित्सया ॥ ३४ ॥
गुह्यशौचं पादशौचं हस्तशौचं महेश्वरि ।
मुखशौचं चतुर्थं च कुर्यात्सर्वत्र सर्वदा ॥ ३५ ॥
उच्छिष्टो न स्पृशेत् क्वापि सेवाद्रव्याणि शाम्भवि ।
प्रणम्य प्रविशेत्स्थानं निर्गच्छेच्च प्रणम्य च ॥ ३६ ॥

---

(१) मलीमसः इति पाठः ।

निष्ठीवनं प्रलापं च अधोवायुविसर्जनम् ।
औदासीन्यं भयं क्रोधं न कुर्यात्तत्र संस्थितः ॥ ३७ ॥
यथावर्णं यथा ज्ञानं यथाज्येष्ठं कनिष्ठकम् ।
तथैवोपविशेत्तत्र रागद्वेषविवर्जितः ॥ ३८ ॥
न निन्देन्मनसा वाचा कुमारीं ब्राह्मणं गुरुम् ।
दया भूतेषु कर्त्तव्या न हिंस्यात्कमपि प्रिये ॥ ३९ ॥
सर्वं सहेत परुषं देहानित्यत्वभावनात् ।
देहगेहकलत्रात्ममित्रद्रविणसम्पदः ॥ ४० ॥
स्वप्नविद्युन्निभाः पश्येन्नात्मानं तत्र सञ्जयेत् ।
असदासक्तिवशतः संसारो न निवर्तते ॥ ४१ ॥
दानं दमो दया चेति न त्याज्यं सर्वथा त्रयम् ।
असत्यं न वदेद्वाक्यं वाचोपि मरणं हि तत् ॥ ४२ ॥
मृता वाक् नहि योग्या स्याद्गुणालापे परेशितुः ।
न परस्त्रीमुखे क्वापि दृष्टिं भोगेच्छया क्षिपेत् ॥ ४३ ॥
स्वस्मिन् स्त्रीभावनानश्येत्तस्मात्पातकमेव तत् ।
निर्विकाराणीन्द्रियाणि जातमात्रशिशोर्यथा ॥ ४४ ॥
ललनावृन्दमध्यस्थस्यापि चेतोद्विधानहि ।
सखीभावः स्थिरस्तस्य विशुद्धश्च प्रियंवदे ॥ ४५ ॥
विशुद्धस्त्रीस्वभावा ये दृश्यन्ते पुरुषा अपि ।
निश्चयादवगन्तव्या प्रिया भगवतो हि ते ॥ ४६ ॥
स्त्रीदुष्टान् समयभ्रष्टान् भावनाविमुखान् शठान् ।
नास्तिकान् दुर्नयान्दुष्टान्पर स्त्रीगमनोत्सुकान् ॥४७॥
विरोधिनः क्रूरचित्तान् श्रद्धाप्रेमविवर्जितान् ।
असदालापकान्देवि न पंक्त्यामुपवेशयेत् ॥ ४८ ॥
न पिबेत्तत्र पानीयमेकपात्रेण कर्हिचित् ।
पादुकावसनंशय्याशयनासनसंस्थितिम् ॥ ४९ ॥

न कुर्यादेव तैः सार्कं दोषावेशोऽन्यथा भवेत् ।
अदृष्टपुरुषैर्देवि देशान्तरनिवासिभिः ॥ ५० ॥
इन्द्रियार्थरतैर्दम्भच्छलेनापि समागतैः ।
न स्थितिः सह कर्त्तव्या परानन्दोत्सवे प्रिये ॥ ५१ ॥
अस्नातोऽधौतपादो वा ह्यनाचारो भयाकुलः ।
अधौतवसनो वापि नोत्सवं प्रविशेत्कचित् ॥ ५२ ॥
उत्सवेगुणगानादि कुर्यात्कृष्णकथाः शुभाः ।
न लौकिकीं कथां कुर्याद्विवदेन्न परस्परम् ॥ ५३ ॥
न मर्माणि वदेद्देवि न चोपद्रवमाचरेत् ।
परस्परं तु देवेशि स्वात्मयैक्यं भावयेद्धिया ॥ ५४ ॥
रसावेशस्तदाभूयान्निर्विकारा यदा स्थितिः ।
तस्मात्तत्प्रवणं चेतः प्रकुर्वीत महोत्सवे ॥ ५५ ॥
ध्यायन्ति केचन निमीलितपक्ष्मभारा
गर्जन्ति हेतिपरिलब्धगुरुप्रमाणाः ।
नृत्यन्ति तद्रसविलीनमनोरथार्था
भक्त्या द्रवन्त इव दृक्कमलैर्गलद्भिः ॥ ५६ ॥
तद्ध्यानदृष्टपदहृष्टधियः प्रसन्नाः
स्वानन्दसागरसमुच्छलदच्छभावाः ।
रोमाञ्चकञ्चुकविचित्रतनुप्रदेशा
जानन्ति नेदमखिलं च विभिन्नलिङ्गाः ॥ ५७ ॥
यज्जातमुत्सवे किञ्चित् वृत्तान्तं साध्वसाधु वा ।
हृदयाद्विस्मृतमिव बहिर्नैव प्रकाशयेत् ॥ ५८ ॥
यथावर्णविभेदेन स्वीकुर्याच्च निवेदितम् ।
पृथगासनपात्राणि कारयेत् सुरवन्दिते ॥ ५९ ॥
परस्परं प्रणमेदेवं कुर्यान्महोत्सवोत्सवम् ।
स्वपुत्रस्त्रीजन्मादिने गुरोर्जन्माविपर्यये ॥ ६० ॥

मङ्गले सम्पदाधिक्ये लाभे भक्तसमागमे ।
व्यतीपाते तथाष्टम्यामेकादश्यां च संक्रमे ॥ ६१ ॥
पुष्यार्के चैव हस्तार्के ग्रहणे चन्द्रसूर्ययोः ।
कृष्णजन्माह्नि देवेशि राधाजन्मदिने तथा ॥ ६२ ॥
अवतारदिनेऽष्वेवं विष्णोरमिततेजसः ।
चैत्रे शुक्लस्य पञ्चम्यां भगवान्मीनरूपधृक् ॥ ६३ ॥
ज्येष्ठे शुक्ले द्वादश्यां ततः कूर्मस्वरूपधृक् ।
चैत्रे कृष्णनवम्यां तु हरिर्वाराहरूपधृक् ॥ ६४ ॥
वैशाखे शुक्लपक्षे तु चतुर्दश्यां दिनक्षये ।
प्रादुर्बभूव नृहरिर्भक्तरक्षार्थमुद्धृतः ॥ ६५ ॥
वैशाखे शुक्लपक्षे तु तृतीयायां गिरीन्द्रजे ।
जमदग्निसुतो रामो रेणुकायामजीजनत् ॥ ६६ ॥
मासि भाद्रपदे देवि शुक्ले चैकादशी तिथिः ।
अदित्यां कश्यपाज्जातो वामनः सुरकार्यकृत् ॥ ६७ ॥
चैत्रे शुक्लनवम्यां तु रामो दशरथात्मजः ।
रावणस्य वधार्थाय कौशल्यायां परः पुमान् ॥ ६८ ॥
श्रावणे बहुले पक्षे अष्टम्यां च महानिशि ।
कृष्णः प्रादुरभूद्देवि सुरकार्यचिकीर्षया ॥ ६९ ॥
नभसे तु द्वितीयायां बलभद्रोऽभवद्धरिः ।
पौषशुक्ले तु सप्तम्यां बौद्धः प्रादुर्भविष्यति ॥ ७० ॥
माघशुक्लतृतीयायां कल्की प्रादुर्भविष्यति ।
एतेष्वन्येषु पुण्येषु दिवसेषु विशेषतः ॥ ७१ ॥
प्रकुर्यादुत्सवं देवि वित्तशाठ्यविवर्जितः ।
नोत्सवो भक्ष्यभोज्याद्यैर्न पुष्परचनादिभिः ॥ ७२ ॥
रसावेशो भवेद्यत्र तमाहुः परमोत्सवम् ।
निर्विकारं भवेच्चित्तं भगवज्ज्ञानगोचरम् ॥ ७३ ॥

(१)प्रेमैकरसिकं शुद्धं तत्रावेशो भवेद्ध्रुवम् ।
उत्सवे देवदेवेशि त्रिविधैव जनसङ्गमः ॥ ७४ ॥
प्रियाणां वासनाश्चैको देवसर्गो द्वितीयकः ।
तृतीयो गौतमैः शप्ता ये च वैडालिनः स्मृताः ॥ ७५ ॥
वासनासु रसावेशः शुद्धो नैवात्र संशयः ।
देवेषु देवतावेशो भगवत्प्रेमवत्स्वपि ॥ ७६ ॥
प्रेमहीना दुराचाराः परस्त्रीधनलम्पटाः ।
पिशुनाः वञ्चकाः क्रूराः कुटिलाः पापचारिणः ॥ ७७ ॥
आचाररहिता दुष्टा निर्लज्जाः कलहोत्सुकाः ।
आसुरं भावमापन्ना वेदशास्त्रार्थनिन्दकाः ॥ ७८ ॥
ते वै वैडालिनो देवि ह्यधिकारविवर्जिताः ।
असुरावेशिणस्ते तु मयोक्तमवधार्यताम् ॥ ७९ ॥
जानीयात्तत्तदावेशं तत्तच्चेष्टानुरूपतः ।
इत्येतान् त्रिविधान् ज्ञात्वा महोत्सवगतान् शिवे ॥ ८० ॥
व्यवहार्यं यथा योग्यं सङ्करो न भवेद्यथा ।
यथायोग्यं यथाकालं यथाद्रव्यं यथोचितम् ॥ ८१ ॥
तथा कुर्यान्महेशानि ह्यन्यथा पतितो भवेत् ।
इति तेऽभिहितं देवि किं भूयः श्रोतुमिच्छसि ॥ ८२ ॥
तदहं ते प्रवक्ष्यामि सुगुह्यमपि विस्तरात् ॥ ८३ ॥

इति माहेश्वरतन्त्रे शिवोमासंवादे
सप्तविंशं पटलम् ॥ २७ ॥

---

( १ ) "प्रेमैक्यं रासिकं" इत्यपि पाठः ।

## अष्टाविंशं पटलम् ॥ २८ ॥

पार्वत्युवाच ॥

पुनर्ब्रूहि महादेव यथा स्याज्ज्ञजनोदयः ।
कं वा गुरुमुपासीत कथं ज्ञानोदयो भवेत् ॥ १ ॥

शिव उवाच ॥

साधु पृष्टं त्वया भद्रे प्रवक्ष्यामि यथातथम् ।
गोपनीयं प्रयत्नेन दर्शयेन्नैव कस्यचित् ॥ २ ॥
मायाग्रस्तमिदं विश्वं नानादुःखभयातुरम् ।
अनित्यभवसन्तापपरितप्तं समन्ततः ॥ ३ ॥
कालदण्डभुजङ्गेन ग्रस्तमानमहर्निशम् ।
दृष्ट्वा विरक्तः सततं स्वात्मनः शिवहेतवे ॥ ४ ॥
सद्गुरोः शरणं यायात् शुद्धभावेन भामिनि ।
गुरवो बहवः सन्ति दीपवच्च गृहे गृहे ॥ ५ ॥
दुर्लभा गुरवो देवि सूर्यवत्सर्वदीपकाः ।
गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ॥ ६ ॥
विरला गुरवो देवि शिष्यहृत्तापहारकाः ।
शुद्धान्वयः शुद्धचेताः शुद्धवेशः शुभाकृतिः ॥ ७ ॥
शुभवादी शुभाचारः शुद्धभावः शुचिः स्वयम् ।
वेदशास्त्रार्थतत्त्वज्ञो लोकसङ्गविवर्जितः ॥ ८ ॥
अलोलुपः सुशीलश्च दयादाक्षिण्यसंयुतः ।
त्यागी विरागी गुणवान् गुणज्ञः शिष्यवत्सलः ॥ ९ ॥
येन केनापि सन्तुष्टः शरण्यः क्रोधवर्जितः ।
स्वसिद्धान्तार्थतत्त्वज्ञो मितवाक् लोकवल्लभः ॥ १० ॥
पवित्रः संशयच्छेत्ता कृष्णप्रेमपरिप्लुतः ।
एवं विधं गुरुं ज्ञात्वा कृपापीयूषवर्षिणम् ॥ ११ ॥
फलपुष्पादिहस्तश्च गच्छेदभिमुखं गुरोः ।

गुरोर्मन्दिरमासाद्य नत्वा तद्देहलीं प्रिये ॥ १२ ॥
आज्ञया सद्गुरोर्देवि दक्षपाद पुरःसरम् ।
प्रविश्य तद्गृहं साक्षाद्दण्डवत्प्रणमेच्च (१)तम् ॥ १३ ॥
भो नाथकरुणासिन्धो संसारार्णवतारक ।
भ्रान्तं संसारगहने नानातापसमाकुले ॥ १४ ॥
अत्यन्तदीनहृदयं सर्वसाधनवर्जितम् ।
अज्ञानपङ्कनिर्मग्नं मामुद्धर दयानिधे ॥ १५ ॥
अहं त्वां शरणं प्राप्तः शरण्यस्त्वं दयानिधिः ।
अविलम्बेन संसारविच्छेदं कुरु मे प्रभो ॥ १६ ॥
एवं सम्प्रार्थितः सोथ गुरुनाथः कृपानिधिः ।
पूर्वं परीक्षितं विप्रं वर्षेणैकेन सुन्दरि ॥ १७ ॥
वर्षाभ्यां क्षत्रियं देवि वैश्यं संवत्सरैस्त्रिभिः ।
चतुर्भिर्वत्सरैः शूद्रं बोधयेद्विरहातुरं ॥ १८ ॥
यदिचेद्वासनाजीवस्तदा बोध्यश्च सर्वथा ।
स्वामिकश्चेत्तदा त्याज्यः अधिकारविपर्ययात् ॥ १९ ॥
परीक्षा लक्षणैर्देवि पुराप्रोक्ता मयानघे ।
अपरीक्षितजीवाय वितरेद्यदि बोधनम् ॥ २० ॥
न गुरुं तं विजानीयात् वासनापि न सा भवेत् ।
शिष्येभ्यो धनमादाय सुखीस्यामिति यस्य धीः ॥ २१ ॥
न गुरुं तं विजानीयात् केवलं धूर्त एव सः ।
धनाहारार्जने युक्ता दाम्भिका वेषधारिणः ॥ २२ ॥
भ्रामयन्ति जनान् सर्वान् ज्ञानिवत्प्रियदर्शनाः ।
शिष्येणापि गुरुर्देवि परीक्ष्यः सर्वथैव हि ॥ २३ ॥
यद्यज्ञानवशात् शिष्यो गुरुं लक्षणवर्जितम् ।
जानीयात्तत्क्षणं त्यक्त्वा गुरुमन्यं समाश्रयेत् ॥ २४ ॥

---

(१) "तत्" इ० पा० ।

गन्धलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥ २५ ॥
त्यजेन्मित्रममर्मज्ञं नारीं च व्यभिचारिणीम् ।
अहन्तादुष्टसम्बन्धं ज्ञानहीनं गुरुं त्यजेत् ॥ २६ ॥
नदत्सु पञ्चवाद्येषु ब्राह्मणेषु पठत्सु च ।
गायन्तीषु तथा स्त्रीषु शिष्यं सम्बोधयेद्गुरुः ॥ २७ ॥
आदौ शिष्यस्य देहं तु शोधयेन्निपुणो गुरुः ।
असंस्कृतशरीरस्तु न योग्यः स्यात्कथंचन ॥ २८ ॥
कृतस्नानं समाहूय मुखाग्रे स्थापयेच्च तम् ।
शुभासनश्वेतवस्त्रवसानं मलवर्जितम् ॥ २९ ॥
बोधयेत्तद्धृदाम्भोजे प्रदीपकलिकाकृतिः ।
आत्मचैतन्यमीशानि तच्च स्वात्मनि योजयेत् ॥ ३० ॥
ततोऽस्य पदयुगले भुवनानि चतुर्दश ।
लिङ्गप्रदेशेऽस्य भूतानि चिन्तयेत्परमेश्वरि ॥ ३१ ॥
अवशिष्टानि तत्त्वानि चिन्तयेद्धृदयाम्बुजे ।
कण्ठदेशे नादबिन्दुगुणांश्च परिचिन्तयेत् ॥ ३२ ॥
ब्रह्मरन्ध्रे परं ब्रह्म पुरुषं प्रकृतीश्वरं ।
एवं संचिन्त्य देवेशि जुहुयात्तान्यनुक्रमात् ॥ ३३ ॥
जुहुयाल्लिङ्गदेशेऽस्य भुवनानि चतुर्दश ।
लिङ्गदेशस्थभूतानि हृदितत्त्वेषु होमयेत् ॥ ३४ ॥
(१)हृदयस्थानि तत्वानि बिन्दुनादे च ह्यर्पयेत् ।
ब्रह्मरन्ध्रे चिते देवि परब्रह्माणि निष्कले ॥ ३५ ॥
नादबिन्दुगुणान्हुत्वा प्रपञ्च विलयं स्मरेत् ।
निष्प्रपञ्चं तदा शिष्यं बोधयेत्परमेश्वरि ॥ ३६ ॥
न वर्णेषु तदा कश्चित् ब्राह्मणक्षत्रियादिषु ।

(१) 'हृदये यानि' इ० पा० ।

न देवोसि न गन्धर्वो नासुरः पन्नगोपि वा ॥ ३७ ॥
न त्वं देहो न त्वद्देहो नेन्द्रियाणि तथा मनः।
न च प्राणो न बुद्धिस्त्वं नाहङ्कारो भवान्मतः ॥ ३८ ॥
क्षरः सर्वप्रपञ्चोयमक्षरे प्रतिबिम्बितः।
अक्षरस्य दिदृक्षाभूद्ब्रह्मलीलावलोकने ॥ ३९ ॥
तत्प्रियाया अभवत्कामोऽक्षरलीलानिरीक्षणे।
तत इच्छा समुद्भूता ब्रह्मण्यज्ञानमसृजत् ॥ ४० ॥
मोहाण्डं प्रविशन् साक्षी ददर्श स्वप्नगं जगत्।
तत्र वृन्दावने रासलीलायां रमिता प्रियाः ॥ ४१ ॥
अन्तर्हिते प्रिये कृष्णे दुःखाद्दुःखतरं गताः।
कालमायान्धकारोस्मिन् भ्रान्तासि बहुधा मुधा ॥ ४२ ॥
श्रीकृष्णस्य प्रिया चासि पूर्णस्य परमात्मनः।
उद्बुध्य स्वप्नतश्चित्ते प्रियाभावं निजंश्रय ॥ ४३ ॥
(१)तिरोभूय च शनकैर्मायादेहमनिप्सितम्।
क्षरं चैवाक्षरं हित्वा स्वपतिं पुनरेष्यसि ॥ ४४ ॥
(२)प्रबोध्यैवं गुरुस्तस्मिन् चैतन्यं परमेश्वरि।

---

(१) तिरोभवित्री शनकैर्मायादेहमित्यपि पाठः।
(२) क्वचित्पुस्तके ४४-४५ श्लोकयो र्मध्येएते श्लोका अप्युपलभ्यन्ते—

"ब्रह्मानन्दरसज्ञानां ब्रह्मज्ञानवतां सताम्।
पद्धतिं ब्रह्मसृष्टीनां वक्ष्यामि शृणु सुन्दरि ॥ ४५ ॥
गोत्रमुक्तं चिदानन्दं ब्रह्मानन्दो हि सद्गुरुः।
शिखा ज्ञानमयी प्रोक्ता सूत्रमक्षररूपकम् ॥ ४६ ॥
किशोरी परमेष्टा च सेवनं पौरुषोत्तमम्।
पातिव्रत्यमनन्यत्वं साधनं समुदाहृतम् ॥ ४७ ॥
वृन्दावनं नित्यमुक्तं विलाससुखसञ्ज्ञकम्।
जाप्यं च युगलं नाम तारतम्यो (मो) मनुः स्मृतः ॥४८॥
ब्रह्मविद्या परा देवी देवो ब्रह्म सनातनम्।

दिव्यदृष्टयावलोकेन स्थापयेत्पुनरेव तत् ॥ ४५ ॥
ब्रह्मरन्ध्रपथा तस्मिन् चावतीर्ण इति स्मरन् ।
कण्ठदेशे नादबिन्दू स्थापयेच्च ततः परम् ॥ ४६ ॥
तत्त्वानि हृदयाम्भोजे लिंङ्गे भूतानि पञ्च च ।
ततः पादप्रदेशे तु स्थापयेद्भुवनावलिम् ॥ ४७ ॥
एवं विराजं संस्कृत्य ततो मन्त्रं समादिशेत् ।
मन्त्रोपदेशतः पूर्वं गुरुं सम्पूजयेत्प्रिये ॥ ४८ ॥
सर्वस्वदक्षिणां दत्वा कृतकृत्यो भवेद्धि सः ।
तदर्द्धं वा तदर्धं वा तदर्द्धार्द्धमथापि वा ॥ ४९ ॥
सन्तोषयेद्गुरुं भक्त्या धनधान्याम्बरादिभिः ।
अन्येभ्योऽपि यथाशक्ति भूषावस्त्रादिकं ददेत् ॥ ५० ॥
साष्टाङ्गं च ततो देवि दण्डवत्पतितो भुवि ।
प्रणमेद्गुरुमात्मीयं गुरुरुत्थापयेच्च तम् ॥ ५१ ॥
उपवेश्य पुनः पार्श्वे लीलाभेदान् समादिशेत् ।
लीलाभेदा गुरुमुखाद्बोद्धव्या एव सुन्दरि ॥ ५२ ॥

---

शाला गोलोक इत्युक्तो द्वारमूर्ध्वमुदाहृतम् ॥ ४९ ॥
(१)स्वसंवेदः समादिष्टः फलं नित्यविहारकम् ।
दिव्यब्रह्मपुरं धाम परात्परमुदाहृतम् ॥ ५० ॥
सद्गुरोश्चरणं क्षेत्रं सर्वशुद्धिकरं परम् ।
यमुनासञ्ज्ञकं तीर्थं मननं प्रेमलक्षणम् ॥ ५१ ॥
श्रीमद्भागवतं प्रोक्तं श्रवणं सारमद्भुतम् ।
ऋषिः प्रोक्तो महाविष्णुर्ज्ञानं जाग्रत्स्वरूपकम् ॥ ५२ ॥
आनन्दाख्यं कुलं प्राप्तं नित्ये धाम्नि प्रकीर्तितम् ।
सम्प्रदायश्चिदानन्दो निजानन्दैः प्रकाशितः ॥ ५३ ॥
एवं पद्धतिराख्याता पुरुषोत्तमसञ्ज्ञिका ।
वर्तितव्यं ततो भद्रे साधनैरात्मलब्धये" ॥ ५४ ॥

---

( १ ) सुसंवेदः, सूक्ष्मो वेदः, इत्यपि पाठः । स्वसंवेद्यः' इत्यपि कश्चित् ।

ततो रहो रहश्चैव संस्थितो भावयेच्च तान् ।
प्रियाभावो यदा बुद्धेः कृतकृत्यो भवेत्तदा ॥ ५३ ॥
इति तेऽभिहितं देवि गोप्याद्गोप्यतरं च यत् ।
समासेन महादेवि भूयः किं श्रोतुमिच्छसि ॥ ५४ ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
अष्टाविंशतितमं पटलम् ॥ २८ ॥

## एकोनत्रिंशं पटलम् ॥ २९ ॥

पार्वत्युवाच ॥

ब्रूहि तं च महेशान मन्त्रराजं महेश्वर ।
यस्य श्रवणमात्रेण सर्वमन्त्रफलं भवेत् ॥ १ ॥

श्रीमहादेव उवाच ॥

देवेशि मन्त्रराजोयं भाति गोप्यतरो महान् ।
पातकानि प्रलीयन्ते सकृद्यस्य जपादपि ॥ २ ॥
सप्तकोटिमहामन्त्रास्तवाग्रे कथिता मया ।
तेषु श्रीकृष्णमन्त्राश्च बहवः कीर्त्तितास्तव ॥ ३ ॥
रासलीलाप्रविष्टस्य(१) पुरा गोपालरूपिणः ।
प्रोक्ता मन्त्रा महेशानि तत्रायं गोपितो मया ॥ ४ ॥
रहस्यत्वान्मया नोक्तः पुनस्तं परिपृच्छसि ।
त्वयापि गोपितव्योयं न देयः स्यात्कथञ्चन ॥ ५ ॥
लेखयित्वा ददेन्मन्त्रं न वाचोपदिशेत्प्रिये ।
ब्रह्महत्यासहस्राणां दत्त्वा पापमवाप्नुयात् ॥ ६ ॥
निर्धारत्वे वासनाया यदि प्रेमोद्गमो भवेत् ।
तदैवोपदिशेद्देवि ह्यन्यथा कृष्णघातकः ॥ ७ ॥

(१) 'मया' इ० पा० ।

विधिः सर्वोपि कर्त्तव्यो मन्त्रदानं विना प्रिये ।
ततः (१)परीक्षिते काले योगत्वे मन्त्रमादिशेत् ॥ ८ ॥
शृणु मन्त्रं प्रवक्ष्यामि सावधानेन चेतसा ।
स्वर (२)आद्यश्चतुर्थश्च आकाशस्तदनन्तरम् ॥ ९ ॥
वायुबीजं ततः पश्चात् अग्निबीजमतः परम् ।
ततो वरुणबीजश्च भूबीजं स्यात्ततः परम् ॥ १० ॥
श्रीकृष्ण परमानन्द ते प्रियास्मीति वै वदेत् ।
मामङ्गीकुर्विति चोक्त्वा दर्शयेति द्वयं वदेत् ॥ ११ ॥
प्रबोधयेति द्वितीयं मोहेति च ततो वदेत् ।
मपाकुरुद्वयं चोक्त्वा नमोंतोऽयं महामनुः ॥ १२ ॥
एकोनैकोनपञ्चाशद्वर्णैः सङ्घटितः प्रिये ।
आद्यबीजं महेशानि परमात्माक्षरः प्रभुः ॥ १३ ॥
तस्मात्सृष्टिर्वर्णमयी हकारान्ताविजृम्भिता ।
प्रतिलोमलयं तस्याः स एव परिशिष्यते ॥ १४ ॥
अनन्तत्वादात्मतत्वाद्व्यापकत्वान्महेश्वरि ।
न तस्यास्ति लयः क्वापि वर्णानामात्मनः प्रिये ॥ १५ ॥
स्वरश्चतुर्थस्तन्माया ह्युपर्यङ्कुरतां गता ।
ततो ज्ञानहरा देवि जाता सा विश्वमोहिनी ॥ १६ ॥
मध्यबिन्दुसमायोगाच्छून्यरूपा हि साभवत् ।
शून्यस्वेधस्तना रेखा जगदङ्कुररूपिणी ॥ १७ ॥
अर्द्धबिन्दुसमायोगाद्योगमायात्मिका हि सा ।
एवं त्रितययोगेन ज्ञेयं तस्या गुणत्रयम् ॥ १८ ॥
प्रतिबिम्बवदाभासं(३) निर्मले परमात्मनि ।

---

(१) 'परिणते' इ० पा० ।
(२) आद्यः स्वरोऽकारः, चतुर्थश्च दीर्घ इकारोऽर्धमात्रबिन्दुयोगेन, आकाशो हमिति व्योमबीजं ।
(३) 'भातं' इ० पा० ।

यदा समरसाकारा विश्वयोनिस्तदा हि सा ॥ १९ ॥
कोणत्रयसमायोगा ब्रह्मादित्रितयात्मिका ।
लोकत्रयात्मिका चैव तथा वेदत्रयात्मिका ॥ २० ॥
इच्छाज्ञानक्रियात्मा च कालत्रितयरूपिणी ।
अग्निसोमार्करूपा(१) च सर्वत्रितयरूपिणी ॥ २१ ॥
अधोमुखा हि सा ज्ञेयावतन्ती परमात्मनः ।
यदा चोर्ध्वमुखी भूयाद्वह्निज्वालेव सा लये ॥ २२ ॥
शून्यत्वेऽधस्तना रेखा जगदङ्कुररूपिणी ।
तदेव च महत्तत्त्वमित्याहुस्तन्त्रवादिनः ॥ २३ ॥
अहङ्कारस्तु रेखान्तस्तद्गुणोपाधिसङ्गतः ।
त्रिविधः स तु विज्ञेयस्तस्माद्भूतानि जज्ञिरे ॥ २४ ॥
तद्वाचकान्यक्षराणि हकारादीनि पञ्च च ।
पुरतस्तानि दृश्यन्ते मन्त्रराजे महेश्वरि ॥ २५ ॥
आकाशस्तु हकारस्थो देवता तु सदाशिवः ।
गुणः शब्दस्तथा श्रोत्रं श्रोतव्या दिक् च सुन्दरि ॥२६॥
यकारे देवदेवेशि वायुरीश्वर एव च ।
स्पर्शस्त्वगिन्द्रियं देवि स्पृष्टव्यं च महीरुहम् ॥ २७ ॥
रकारेऽग्निरहं देवि रूपं चक्षू रविस्तथा ।
द्रष्टव्यं चेति विज्ञेयं मञ्जूषामणिवत्तथा ॥ २८ ॥
वकारे सलिलं विष्णू रसश्च रसनेन्द्रियम् ।
रसितव्यं च वरुणो देवता चेति संस्थिता ॥ २९ ॥
लकारे पृथिवीतत्त्वं ब्रह्मा गन्धश्च नासिका ।
घ्रातव्यमश्विनौ देवि देवता चेति संस्थिता ॥ ३० ॥
इत्येवं पञ्चभूतानां बीजकार्यं तदीश्वरि(२) ।

---

(१) 'अग्निष्टोमार्क' इ० पा० ।
(२) 'बीजोऽयं कार्यमीश्वरि' इ० पा० ।

सहस्रं (१)कथितं ते च यदाहुः क्षरसञ्ज्ञया ॥ ३१ ॥
अकारः परमं ब्रह्म कूटस्थं व्यापकं ध्रुवम् ।
अनुत्तरं निर्विशेषं चिदंशस्तेन कथ्यते ॥ ३२ ॥
अक्षरातीतरूपोऽसौ शेषवर्णैर्मनुस्मृतः ।
तस्मादहो सच्चिदानन्दरूपोयं मन्त्रनायकः ॥ ३३ ॥
मननं विश्वविज्ञानं त्राणं संसारसङ्कटात् ।
यतः करोति संसिद्धो मन्त्र इत्युच्यते प्रिये ॥ ३४ ॥
मन्त्रचूडामणिं ज्ञात्वा मुच्यते सर्वसंशयात् ।
विज्ञाते मन्त्रराजेन्ये ज्ञातव्यं नावशिष्यते ॥ ३५ ॥
शाब्दं वपुः परानन्दवपुषः परमेश्वरि ।
मन्त्रचूडामणिरयं मया ते परिकीर्तितः ॥ ३६ ॥
अकथ्यः पारमार्थ्येन तथापि कथितस्तव ।
गोपनीयः प्रयत्नेन जननी जारगर्भवत् ॥ ३७ ॥
पश्यन्ति ये शठधियो वर्णबुध्या महामनुम् ।
ते यान्ति नरकान् सर्वे यावदाभूतसंप्लवः ॥ ३८ ॥
पुरुषं मंन्त्रजप्तारं ये पश्यन्ति नराधमाः ।
तेषां पापानि नश्यन्ति ब्रह्महत्यादिकान्यपि ॥ ३९ ॥
कोटिकल्पेषु पापिष्ठा नित्यं पापपरायणाः ॥
तेपि शुध्यन्ति सम्पर्कान्मन्त्रजप्तुर्न संशयः ॥ ४० ॥
लब्धे चिन्तामणौ देवि किमन्यैर्धनसञ्चयैः ।
तथा लब्धे मन्त्रराजे किमन्यैः साधनैर्भवेत् ॥ ४१ ॥
एतन्मन्त्रार्थविज्ञानं मन्त्रसिद्धान्तसूचकं ।
यो नित्यं भावयेच्चित्ते वासना तस्य शुध्यति ॥ ४२ ॥
विहाय मायामालिन्यं देहेन्द्रियनिबन्धनम् ।
वासना सम्मुखीभूयाद्विवेकं प्रतिबिम्बवत् ॥ ४३ ॥

(१) "कथितस्तेन यमाहुःक्षरसंज्ञया" इ० पा० ।

मन्त्रमाहात्म्यमेतत्तु मया ते परिकीर्तितम् ।
किमन्यत् श्रोतुमिच्छन्ति तदिदानीं वद(१)प्रिये ॥ ४४ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती
संवादे एकोनात्रिंशं पटलम् ॥ २९ ॥

---

## त्रिंशं पटलम् ॥ ३० ॥

पार्वत्युवाच ॥

भगवन्देवदेवेश श्रोतुमिच्छाम्यहं पुनः ।
मन्त्रस्य साधनं साक्षात् यत्कृत्वा साङ्गता भवेत् ॥ १ ॥

॥ शिव उवाच ॥

शृणु त्वं देवदेवेशि मन्त्रराजस्य साधनम् ।
ऋषिरस्य स्मृतो देवि परात्मा पुरुषोत्तमः ॥ २ ॥
छन्दोनुष्टुप्समाख्यातं श्रीकृष्णो देवतास्य च ।
अहं बीजं नमः शक्तिर्विनियोगः प्रसादने ॥ ३ ॥
ऋषिः शिरसि विन्यस्य छन्दस्तु मुखमण्डले ।
देवता हृदये न्यस्य बीजं पादयुगे न्यसेत् ॥ ४ ॥
कटिदेशे न्यसेच्छक्तिर्नियोगः करसम्पुटे ।
एवं ऋष्यादिकं न्यस्य वर्णन्यासं ततश्चरेत् ॥ ५ ॥
अथ बीजं न्यसेन्मूर्ध्नि न्यसेन्माया ललाटके ।
व्योमबीजं न्यसेत्कर्णयुगलेऽथ समीरणम् ॥ ६ ॥
न्यसेत्त्वचि ततो नेत्रे बह्निबीजं न्यसेत्प्रिये ।
जिह्वायां वारुणं बीजं पृथ्वीबीजं च नासयोः ॥ ७ ॥
श्रीकारं कण्ठदेशे तु कृकारं हृदये न्यसेत् ।
ष्णं पं न्यसेत्कुचद्वन्द्वे वामादि परमेश्वरि ॥ ८ ॥

---

(१) "वदाम्यहम्" इ० पा०

रकारं चैव माकारं कुक्षियुग्मे च वामतः ।
नकारं च दकारं च न्यसेत्कट्योस्तथैव हि ॥ १० ॥
तेकारं विन्यसेल्लिङ्गे प्रिया वर्णावुरुद्वये ।
स्मिमावर्णद्वयं देवि जानुयुग्मे तथा न्यसेत् ॥ ११ ॥
मं गी वर्णौ च देवेशि जङ्घायुग्मे प्रविन्यस्येत् ।
कुर्वित्यक्षरयोर्द्वन्द्वं पार्ष्णिद्वन्द्वे नियोजयेत् ।
दकारं च शकारं च प्रपदद्वन्द्वके न्यसेत् ।
प्रकारं चैव बोकारं न्यसेत्पादतलद्वये ॥ १३ ॥
धं न्यसेदङ्गुलीष्वेव अङ्गुल्यन्तेषु यं न्यसेत् ।
तलादिजानुपर्यन्तं प्रबोवर्णद्वयं पुनः ॥ १४ ॥
जान्वादिनाभिपर्यन्तं धय वर्णद्वयं न्यसेत् ।
मोकारं विन्यसेन्नाभौ हकारमुदरे न्यसेत् ॥ १५ ॥
म पा वर्णौ स्कन्धयुग्मे कुरु कक्षायुगे न्यसेत् ।
कुरु वर्णद्वयं दोष्णोर्गल्लयोश्च प्रविन्यसेत् ॥ १६ ॥
नमः शिखायां विन्यस्य समग्रं व्यापकं न्यसेत् ।
(१)एवं न्यासाच्छरीरेऽसौ जायते मन्त्ररूपधृक् ॥ १६ ॥
अलौकिकं वपुः कृत्वा गच्छेद्ध्यानेन तत्पदम् ।
तत्प्रकारं प्रवक्ष्यामि सुगुप्तमपि सुन्दरि ॥ १७ ॥
वर्णरूपं वपुर्ध्यायेत् पञ्चभूतमयान्हि तान् ।
तत्तत्कारणभूतेषु तत्तत्कार्यं विलोपयेत् ॥ १८ ॥
पादादिजानुपर्यन्तं पृथ्वीतत्वं विचिन्तयेत् ।
पृथ्वीतत्त्वमयान् वर्णान् प्रवक्ष्यामि समासतः ॥ १९ ॥
पञ्चमश्चैव षष्ठश्च त्रयोदश एव च ।
स्वराणां त्रितयं चैतत् आकाशादग्निमाक्षरम् ॥ २० ॥
स्पर्शेषु चाष्टमश्चैव तथा चैव त्रयोदश ।

(१) 'एवं न्यस्तशरीरोऽसौ' इ० पा० ।

दवलाश्चेति वै वर्णाः पार्थिवाः परिकीर्त्तिताः ॥ २१ ॥
ऋ ॠ औ घ झ ढ ध भ वर्णास्ते वारुणाः स्मृताः ।
जान्वादिकटिपर्यन्तं जलतत्वगतान् स्मरेत् ॥ २२ ॥
इ ई ए ख छ ठ थ फ र क्षास्ते वह्निरूपिणः ।
कट्यादिकंठपर्यन्तं तेजस्तत्वगतान् स्मरेत् ॥ २३ ॥
अ ऐ कचटतपसषाः मारुताः कथिताः प्रिये ।
कण्ठादिभ्रूप्रदेशान्तं वायुतत्वमयान्स्मरेत् ॥ २४ ॥
ऌॡ अंङञणनमशबहनाभसाः स्मृताः ।
भ्रूमध्यादिब्रह्मरन्ध्रस्थिताकाशमयान् स्मरेत् ॥ २५ ॥
तत्तद्वर्णविलोपन्तु कारयेत्कारणाक्षरे ।
हित्वा स्थौल्यं भूतमयं सूक्ष्मं शब्दमयं ततः(१) ॥ २६ ॥
शब्दब्रह्मशरीरोसौ सर्वकारणकारणं ।
सहस्रदलपद्मस्य कर्णिकायां व्यवस्थितं ॥ २७ ॥
अकारं केवलं ध्यायेदुदरे निष्कलं प्रिये ।
(२)अकारं चोदराकाशे दहरास्ते महेश्वरि ॥ २८ ॥
पूर्वानुभूता रासलीला व्रजलीलाश्च संस्मरेत् ।
अहं प्रिया भगवतः कामस्य कामरूपिणी(३) ॥ २९ ॥
कृष्णस्येति दृढाभ्यासवशगेनैव चेतसा ।
संस्मरेत्परमेशानि नान्यत् किञ्चन चिन्तयेत् ॥ ३० ॥
अथ तेनैव मार्गेण शाब्दं चापि वपुस्त्यजेत् ।
शब्दातीतं परं धाम रसानन्दमहार्णवम् ॥ ३१ ॥
नानाकेलिकलापूर्णं नानापक्षिनिनादितम् ।
भ्रमद्भ्रमरझङ्कारमुखरीकृतदिङ्मुखम् ॥ ३२ ॥

---

(१) 'गतः' इ० पा० ।
(२) 'अकारोदरमाकाशे' इ० पा० ।
(३) "कामरूपिणः" इ० पा० ।

स्वप्रकाशं समभ्येत्य स्वरूपं चिन्तयेत्तदा ।
नवयौवनसम्पन्नमनोहररतिप्रियम् ॥ ३३ ॥
क्वणन्नूपुरसंशोभिपादाम्भोजविराजितम् ।
लाक्षारसाक्तचरणं क्वणत्किङ्किणिमेखलम् ॥ ३४ ॥
नवीनयौवनोत्तुङ्गकुचभारमहालसम् ।
कराङ्गुलीयनिवहोल्लसदङ्गुलिपल्लवम् ॥ ३५ ॥
नानालङ्कारशुभगं कौसम्भाम्बरशोभितम् ।
मुक्ताहारोल्लसद्वक्षः स्फुरमाणमणिप्रभम् ॥ ३६ ॥
कामकोदण्डकुटिलभ्रूकुटीवशिखेक्षणं ।
मुक्तादामलसज्झालं काश्मीरतिलकोज्वलम् ॥ ३७ ॥
दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पस्रगाकुलम् ।
भालप्रदेशविलसत्सुरत्नतिलकोज्वलम् ॥ ३८ ॥
ध्यात्वैवं स्ववपुर्दिव्यं सखीयूथगतं स्मरेत् ।
यूथमध्यगतं कृष्णं ध्यात्वानन्येन चेतसा ॥ ३९ ॥
प्रार्थयेत्तं पतिं तत्र सस्मिताननसुन्दरम् ।
प्राणनाथ त्वदीयाहं त्राहि दुःखेष्वनेकधा ॥ ४० ॥
त्वामहं विस्मृता नाथ परमानन्दपेशल ।
अनुभूता स्वप्नलीला नानादुःखौघसङ्कुला ॥ ४१ ॥
कालो महान् व्यतीतोयं त्वां विना पुरुषोत्तम ।
स्वप्ने मया बहुभ्रान्तं देहगेहातिसक्तया ॥ ४२ ॥
क्वचिन्मनुष्यरूपेण देवरूपेण वा क्वचित् ।
(१)गन्धर्वोरगरूपेण पशुरूपेण वा क्वचित् ॥ ४३ ॥
चेष्टापितो मया ह्यात्मा स्वप्ने मायाविनिर्मिते ।
इदानीं कृतकृत्यास्मि नष्टस्वप्नभयाकृतिः ॥ ४४ ॥

---

(१) ब्रह्मसुधीनामीदृशी दशा कदापि न भवति किन्तु प्रार्थना-मात्रमिदं अथवा तु प्रार्थनेयं जीवानां कृते बुधैरिति बोध्यम् ।

विलोकय कृपादृष्ट्या दृष्टं देव विना त्वया ।
इति सम्प्रार्थ्य भर्त्तारं प्रणमेत्पादपङ्कजम् ॥ ४५ ॥
प्रोत्थापिता पुनस्तेनालिङ्गिता च मुहुर्मुहुः ।
दत्ताधरसुधाचापि सखीयूथस्य पश्यतः ॥ ४६ ॥
परस्परं वीक्ष्यमाणा सखिभिः (१)कृतकौतुकम् ।
नित्यानन्दविहारेषु भूमिकासु दशस्वपि ॥ ४७ ॥
पुष्परागमयभ्राजत्पर्वतापत्यकासु च ।
नीलमाणिक्यशैलोरुशिखरेषु विशेषतः ॥ ४८ ॥
यमुनासप्ततीर्थेषु नानावृक्षोदयेषु च ।
मणिमण्डपविभ्राजत्कुट्टिमैर्मण्डितेषु च ॥ ४९ ॥
नानाविहारसङ्केते नीयमाना प्रियेण हि ।
तत्र तत्र महालीलारसानन्दपरिप्लुता ॥ ५० ॥
षोडशस्थंभविभ्राजन्मणिकुट्टिममागता ।
सखीसमाजमध्यस्थं कृष्णं दृष्ट्वा पुरः स्थिता ॥ ५१ ॥
लालिता प्राणनाथेन वचनामृतवर्षिणा ।
एवं धारणया देवि मनो यावत्स्थिरं भवेत् ॥ ५२ ॥
तावदेवाभ्यसेल्लीलामेवमात्मा विशुध्यति ।
एतत्ते कथितं देवि मन्त्रध्यानादिकं मया ॥ ५३ ॥
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ।
तदहं ते प्रवक्ष्यामि शपथस्तव सुव्रते ॥ ५४ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती-
संवादे त्रिंशं पटलम् ॥ ३० ॥

---

१) 'वीक्ष्यमाणः सखीभिः कृतकौतुकः' इ० पा० ।

## ॥ एकत्रिंशं पटलम् ॥ ३१ ॥

॥ पार्वत्युवाच ॥

ब्रूहि सेवाप्रकारं मे येन तुष्येत्स्वयं प्रभुः ।
कथं पूजा प्रकर्त्तव्या व्यवहारश्च कीदृशः ॥ १ ॥

॥ शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि व्यवहारार्चनादिकम् ।
तुर्ये यामे समुत्थाय शय्यायामेव सुव्रते ॥ २ ॥
ब्रह्मरन्ध्रे गुरुं ध्यायेत्कर्पूरधवलप्रभम् ।
द्विनेत्रं द्विभुजं चैव श्वेतवस्त्रानुलेपनम् ॥ ३ ॥
पञ्चभूतात्मकैरेव पञ्चभिरुपचारकैः ।
पूजयेद्देवदेवेशि आत्मानं तद्गतं स्मरेत् ॥ ४ ॥
तच्चरणोदकधारानिपतितं स्वमूर्द्धनिः ।
क्षालितं निर्मलं शुद्धमात्मानं परिचिन्तयेत् ॥ ५ ॥
नमोऽस्तु गुरवे तस्मै इष्टदेवस्वरूपिणे ।
यस्य वागमृतं हन्ति विषं संसारसञ्ज्ञकम् ॥ ६ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवः सदाशिवः ।
गुरुरेव परं तत्त्वं(१) तस्मै श्रीगुरवेनमः ॥ ७ ॥
प्रणम्य मन्त्रयुग्मेन हृदि लीनं विभावयेत् ।
ततो लीलाविहारस्य ध्यायेत्कृष्णं हृदाम्बुजे ॥ ८ ॥
पूजयेत्पूर्ववद्देवि ह्युपचारैश्च पञ्चभिः ।
ततस्तं प्रार्थयेदीशं बद्धहस्ता प्रियंवदे ॥ ९ ॥
अहं नाथ त्वदीयास्मि पतिस्त्वं मेऽसि भो प्रभो ।
भ्रामितास्मि त्वया नाथ मायागहनवर्त्मनि ॥ १० ॥
त्वत्पार्श्वं नय मां नाथ विरहो मां प्रबाधते ।

---

१ ) 'ब्रह्म' इ० पा० ।

अनन्यगतिका चाहं तस्मात्कुरु यथोचितं ॥ ११ ॥
एवं सम्प्रार्थ्य भर्त्तारं तत्प्रभापटलारुणम् ।
स्वदेहं भावयेद्देवि नमस्कुर्यात्ततः प्रिये ॥ १२ ॥
ततो भूमिं च सम्प्रार्थ्य दक्षपादं निधापयेत् ।
समुद्रमेखले देवि पर्वतस्तनमण्डले ॥ १३ ॥
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।
ततो ग्रामाद्बहिर्गच्छेन्मलोत्सर्गाय सुन्दरि ॥ १४ ॥
अतिक्रम्य शरक्षेपमात्रां भुवमतन्द्रितः ।
आच्छाद्य च तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥ १५ ॥
मृत्तिकां जलपात्रं च हस्तमात्रे नियोजयेत् ।
सूर्यं चैव दिशः प्रान्तान् गावं नैवावलोकयेत् ॥१६॥
लिङ्गशौचं च तिसृभिः मृत्तिकाभिः समाचरेत् ।
पञ्चापाने प्रदेयाश्च मृत्तिकाः सुरसुन्दरि ॥ १७ ॥
गन्धलेपक्षयकरमेवं शौचं समाचरेत् ।
तत्रैव वामहस्ते तु प्रदेया सप्त मृत्तिका ॥ १८ ॥
मौनी स्वगृहमागत्य हस्तपादादि शोधयेत् ।
वामहस्ते मृदः सप्त प्रदेयाः सुरवन्दिते ॥ १९ ॥
उभयोश्च तथा सप्त हस्तशौचमिदं स्मृतम् ।
पञ्च पञ्च तथा पादे प्रदेया मृत्तिकाः शुभाः ॥ २० ॥
ततो द्वादशगण्डूषैर्मुखं प्रक्षालयेत्प्रिये ।
तत आचमनं कृत्वा दन्तकाष्ठं समाचरेत् ॥ २१ ॥
जम्बूदुम्बरजं काष्ठं तथा च बदरीभवं ।
अपामार्गोद्भवं वापि दन्तांस्तेन विशोधयेत् ॥ २२ ॥
अज्ञातैः कीटविद्धैश्च वनेषु दाहितैरपि ।
निषिद्धैश्च तथा काष्ठैर्दन्तान्नैव स्पृशेत्प्रिये ॥ २३ ॥
आयुर्देहि प्रजां देहि धनं विद्यां सुखानि च ।

वाक्सिद्धिं देहि मे नित्यं प्रार्थितोऽसि वनस्पते ॥ २४ ॥
द्वादशावृत्तिसञ्जप्तं मूलमन्त्रेण मन्त्रवित् ।
प्रक्षाल्य भक्षयेत्काष्ठं यावन्नो सूर्यदर्शनम् ॥ २५ ॥
दन्तानां शोधनं कुर्यादुदीचीं दिशमाश्रितः ।
न सूर्याभिमुखीभूय निष्ठीवादि क्षिपेत्प्रिये ॥ २६ ॥
जिह्वामलमपाकृत्य काष्ठं प्रक्षाल्य मन्त्रवित् ।
एकान्ते शुचिदेशे तु क्षिपेत्काष्ठं ततः प्रिये ॥ २७ ॥
मन्त्रजन्यजलैर्देवि मुखं प्रक्षालयेत्ततः ।
त्यजेद्द्वादश गण्डूषान्मूलमन्त्रमविस्मरन् ॥ २८ ॥
तत आचमनं कृत्वा (१)नमस्कृत्य रविं प्रिये ।
ध्यायन्गच्छेत्ततस्तीर्थमसक्तस्तु गृहे चरेत् ॥ २९ ॥
गालितं शोधितं तोयं शुचिपात्रगतं च यत् ।
सूर्यमण्डलतस्तस्मिन् तीर्थान्यावाह्य भक्तितः ॥ ३० ॥
तस्मिन्नष्टदले ध्यात्वा कर्णिकायां सुरेश्वरि ।
प्रियायूथगतं कृष्णमावाह्य दृढमानसः ॥ ३१ ॥
उपचारैर्जलमयैर्मानसैर्वापि पूजयेत् ।
तदीयचरणद्वन्द्वगलत्पीयूषमिश्रितम् ॥ ३२ ॥
ज्ञात्वा तत्तु जलं देवि साक्षाच्चैतन्यरूपकं ।
ज्ञानानन्दस्वरूपं तत् त्रिधा मूर्ध्नि क्षिपेत्ततः ॥ ३३ ॥
अन्येनैवांभसा कुर्यान्मौशलं स्नानमूर्द्धनि ।
ततः स्नायाद्वरारोहे पूर्वसंस्कृतवारिणा ॥ ३४ ॥
श्रीकृष्णं हृदये लीनमिति ध्यात्वाचमेत्ततः ।
गात्रं सम्मार्ज्य देवेशि मन्त्रवारिविशोधिते ॥ ३५ ॥
वासांसि परिधायैव ततो मन्दिरमाविशेत् ।
पूजागृहबहिः स्थित्वा तिलकं गोपिकामृदा ॥ ३६ ॥

(१) नमस्तुत्वा इति मूलपाठः ।

चक्रादिधारणं कुर्यात् बिभृयात्तुलसीस्रजम् ।
विना च तुलसीमालां विना चक्रादिधारणं ॥ ३७ ॥
न जपध्यानपूजासु योग्यो भवति कर्हिचित् ।
देवान् पितॄंश्च सन्तर्प्य दिक्पालान् प्रणमेत्ततः ॥ ३८ ॥
सर्वं कृष्णमयं ध्यायेद्भेदभावं विवर्जयेत् ।
भेदभावात्मको देवि संसारः कथितो यतः ॥ ३९ ॥
देहलीं च नमस्कृत्य दक्षपादपुरःसरम् ।
प्रविशेत्पूजनागारं निर्माल्याद्यपसारयेत् ॥ ४० ॥
प्रोत्थापयेत्प्रभुं सुप्तं सुगीतैर्मङ्गलस्वनैः ।
श्रेष्ठा मनोमयीमूर्तिरथाश्मा(१)गल्लकीभवः ॥ ४१ ॥
सौवर्णी राजती शैली काष्ठी वा मृण्मयीमपि ।
चैत्री वा पूजयेन्मूर्त्तिमुपचारैः शुभैः प्रिये ॥ ४२ ॥
अर्घं च पाद्याचमने मधुपर्कमपःस्पृशः ।
स्नानं वस्त्रमथाप्रोक्ष (२)वासांस्याभरणानि च ॥ ४३ ॥
दर्पणालोकनं चैव गन्धपुष्पे ततः परम् ।
धूपोगरुसमुद्भूतो दीपो नैवेद्यमेव च ॥ ४४ ॥
पानीयं तोयमाचामं हस्तवासस्ततः परम् ।
ताम्बूलमनुलेपं च ततो नीराजनादिकं ॥ ४५ ॥
गीतं वाद्यं तथा नृत्यं स्तुतिः चैव प्रदक्षिणं ।
पुष्पांजलिर्नमस्कारः साष्टाङ्गप्रणतिस्तथा ॥ ४६ ॥
इत्येतैरुपचारैश्च पूजयेत्प्राणवल्लभम् ।
अनिर्माल्यं सनिर्माल्यं पूजनं द्विविधं मतम् ॥ ४७ ॥
दिव्यैर्मनोभवैः पुष्पैर्गन्धद्रव्यैर्मनोहरैः ।
भक्तैर्यत्क्रियते सम्यगनिर्माल्यं तदर्चनम् ॥ ४८ ॥

(१) अथाश्मो इति मूल पाठः ।
(२) 'स्नानं वस्त्रमथाचामं' इ० पा०।

जातमात्राणि पुष्पाणि घातान्येव निसर्गतः ।
पञ्चभिश्च महाभूतैर्भानुना शशिनापि च ॥ ४९ ॥
प्राणिभिश्च द्विरेफाद्यैः पौष्पैरेव न संशयः ।
यदर्चनं सनिर्माल्यं दिव्यभोगापवर्गदम् ॥ ५० ॥
ग्रामारण्यादिसंभूतैः पूजाद्रव्यैर्मनोहरैः ।
घ्रातपुष्पात्फलं सिध्येदल्पं नो मानसात्तथा ॥ ५१ ॥
तस्मादपरिहार्यत्वादन्यथा चाप्युपायतः ।
(१)बुद्धिशुध्यै ततो देवि बाह्यद्रव्यैः प्रपूजयेत् ॥ ५२ ॥
पुनस्त्रेधा कृष्णपूजा चोत्तमाधममध्यमा ।
(२)यथोपकरणैः कृत्स्नैः क्रियमाणोत्तमोत्तमा ॥ ५३ ॥
यथालब्धैर्विनिष्पाद्या द्रव्यैः पूजा तु मध्यमा ।
पत्रपुष्पाम्बुनिष्पाद्या पूजा चाधमसंज्ञिका ॥ ५४ ॥
आदौ तु मानसीं कृत्वा ततो बाह्यां प्रवर्तयेत् ।
नीराजनान्तमासाद्य जपं कुर्याज्जितेन्द्रियः ॥ ५५ ॥
तुलसीकाष्ठसम्भूतैर्मणिभिः कृतमालया ।
जपेच्छतं सहस्रं वा त्रिसन्ध्यास्वपि तं जपेत् ॥ ५६ ॥
जपपूजासनं कुर्याच्चित्रकम्बलनिर्मितम् ।
कौशेयं वाथ चैलं वा चर्म तूलमथापि वा ॥ ५७ ॥
वेत्रजं तालपत्रं वा दार्भमासनमेव च ।
वंशाश्मदारुधरणीतृणपल्लवनिर्मितम् ॥ ५८ ॥
वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।
एवं सम्पूजयेत्कृष्णं प्रत्यहं परमेश्वरि ॥ ५९ ॥
न गृही ज्ञानमात्रेण परत्रेह च मङ्गलं ।
प्राप्नोति चन्द्रवदने जपपूजादिभिर्विना ॥ ६० ॥

---

(१) बुद्धिशुद्धेस्तत इति पाठः ।
(२) यत्नोपकरणैरिति पाठः

अहिंसा सत्यमस्तेयं ब्रह्मचर्यंजपार्जवम् ।
क्षमा धैर्यं मिताहारं आस्तिक्यं दानमेव च ॥ ६१ ॥
वैराग्यं च विवेकश्च शमःश्रद्धा दमस्तथा ।
मुमुक्षुता विवेकश्च समाधानं तथात्मनः ॥ ६२ ॥
एतत्साधनसम्पत्तिं कुर्वतां परमेश्वरि ।
ज्ञानं दारिद्र्यशमनं भविष्यति न संशयः ॥ ६३ ॥
सर्वेषामेव जन्तूनामक्लेशजननं प्रिये ।
वाङ्मनःकर्मभिर्नूनमहिंसेत्यभिधीयते ॥ ६४ ॥
यथादृष्टश्रुतार्थानां स्वरूपकथनं पुनः ।
सत्यमित्युच्यते सद्भिस्तद्ब्रह्मप्राप्तिसाधनं ॥ ६५ ॥
तृणादेरप्यनादानं परस्य च प्रियंवदे ।
अस्तेयमेतदप्यङ्गं ब्रह्मप्राप्तेः सनातनम् ॥ ६६ ॥
अवस्थास्वपि सर्वासु कर्मणा मनसा गिरा ।
स्त्रीसङ्गतिपरित्यागो ब्रह्मचर्यं प्रचक्षते ॥ ६७ ॥
परेषां दुःखमालोक्य स्वस्येवालोच्य तस्य तु ।
उत्सादनानुसन्धानं दयेति प्रोच्यते शिवे ॥ ६८ ॥
व्यवहारेषु सर्वेषु मनोवाक्कायकर्मभिः ।
सर्वेषामपि कौटिल्यराहित्यं चार्जवं स्मृतं ॥ ६९ ॥
सर्वात्मना सर्वदापि(१) सर्वेषामुपकारिता ।
बन्धुष्विव समाचारः क्षमा स्यात्परमेश्वरि ॥ ७० ॥
इच्छाप्रकापराहित्यं जातेषु विषयेषु च ।
दुःखेषु च धृतिर्धैर्यं (२)प्रवदन्ति वराङ्गने ॥ ७१ ॥
भोज्यस्यैव चतुर्थांशो भोजनं स्वस्थचेतसः ।
अत्युग्रकटुतिक्ताम्ललवणादिविवर्जितम् ॥ ७२ ॥

---

(१) 'सर्वदास्योपकारिषु' इ० पा० ।
(२) 'लभस्तुधृतिर्धैर्यं' इ० पा० ।

हितं मेध्यं सुखं चेति मिताहारः स उच्यते ।
श्रुत्याद्युक्तेषु विश्वास आस्तिक्यं सम्प्रचक्षते ॥ ७३ ॥
ध्यात्वान्तर्यामिनं चित्ते तदर्पणधियाऽन्वहम् ।
सत्पात्रे दीयते दानं तद्दानमभिधीयते ॥ ७४ ॥
ब्रह्मादिस्थावरान्तेषु विषयेषु बहुष्वपि ।
(१)वान्ताशनजुगुप्सा च वैराग्यं प्राप्तिसाधनम् ॥ ७५ ॥
नित्यं वै वासनात्यागः (२)परदारगृहादिषु ।
परानन्दपरा भक्तिः (३)शम इत्युच्यते हि सः ॥ ७६ ॥
निगमागमवाक्येषु भक्तिः श्रद्धेति कीर्त्तिता ।
विषयानन्दचरतामिन्द्रियाणां विनिग्रहः ॥ ७७ ॥
दम इच्युते देवि ब्रह्मप्राप्तेर्हि कारणम् ।
संसारं भयदं मत्वा विरहः(४) स्यादशेषकः ॥ ७८ ॥
मुक्तिकामस्य देवेशि कथिता सा मुमुक्षुता ।
कोऽहं कथमिदं जातं को वै कर्त्तास्य विद्यते ।
उपादानं किमस्तीह विचारः सोयमीदृशः ॥ ७९ ॥
उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न किञ्चन ।
तस्मात्सर्वं प्रपञ्चोऽयं ब्रह्मैवाविद्यया ततम् ॥ ८० ॥
ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।
कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ८१ ॥
यथैव व्योम्नि नीलं च यथा नीरं मरुस्थले ।
पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ८२ ॥
यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ।
पात्ररूपेण वै ताम्रं ब्रह्माण्डो वै तथाक्षरः ॥ ८३ ॥

---

( १ ) वान्त्य शनवज्जुगुप्सा च इति पाठः ।
( २ ) 'पुरद्वार' इ० पा० ।
( ३ ) 'सक्ति' इ० पा० ।
( ४ ) 'विरहस्य' दशांशकं' इ० पा० ।

तस्मात्प्रपञ्चविभ्रान्तां नियम्य मतिमात्मनि ।
उक्तसाधनसम्पन्नः सखीभावं निजं गतः ॥ ८४ ॥
नित्यं लीलारसानन्दं स्वपतिं पुरुषोत्तमम् ॥
भजत्यनन्यया बुद्ध्या पुनः संयोगमाप्नुयात् ॥ ८५ ॥
इति ते कथितं देवि तदाराधनलक्षणम् ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ८६ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे श्रीशिवपार्वती-
संवादे एकत्रिंशं पटलम् ॥ ३१ ॥

---

## द्वात्रिंशं पटलम् ॥ ३२ ॥

पार्वत्युवाच ॥

देवेश भगवन् शम्भो भक्तवत्सल धूर्जटे ।
श्रुतोऽयं मे महामन्त्रश्चूडामणिरनुत्तमः ॥ १ ॥
यस्य विज्ञानमात्रेण स्वयं शुध्यति वासना ।
अन्येऽपि शुद्धिमायान्ति स्वयं तत्सङ्गिसङ्गतः ॥ २ ॥
मन्त्रराजमिमं देव प्राप्नुयात्कः पुमान्यदि ।
भिन्नभिन्नफलैः कर्मपाशजालैर्नियन्त्रितः ॥ ३ ॥
न स्त्री न पुरुषः कश्चिद्विद्यते नापरूपतः ।
स्त्रीप्राप्यमेव तद्ब्रह्म कृष्ण आनन्दविग्रहः ॥ ४ ॥
भोक्तृभोग्यस्वरूपेण रसश्चेति श्रुतेर्मतम् ।
नात्यन्तं च तयोर्भेदो भेदः स्वाभाविकः प्रभो ॥ ५ ॥
आलम्बनादि विधुरो रस एव न सिद्ध्यति ।
यद्विना यन्न संसिद्ध्येत्तत्तदेव न चान्यथा ॥ ६ ॥
तथापि भोक्तृभोग्याभ्यां भागाभ्यां क्रीडतेऽनिशम् ।
भोग्यभागस्तु तापात्मा भोक्तृभागो मृतात्मकः ॥ ७ ॥

अविनाभावसम्बन्धस्तापस्य च सुखस्य च ।
भोक्तृभोग्यांशयोर्विप्रलंभस्तापस्य सिद्धये ॥ ८ ॥
कृष्णस्त्रीणां विप्रयोगे यदि तापोदयो भवेत् ।
कृतार्थता तदा जाता न निषेधविधिस्थितौ ॥ ९ ॥
विप्रयोगे तु विज्ञाते हृदि तापोदयो न चेत् ।
तदा चूडामणिजपात् शीघ्रं सिद्ध्यति नान्यथा ॥ १० ॥
तस्माच्चूडामणेर्मन्त्रराजस्य च पुरस्क्रियाम् ।
वद शम्भो विशेषेण यथायं जीवितो भवेत् ॥ ११ ॥
त्वद्वागमृतपानेन न तृप्तिर्जायते मम ।
धन्यं मत्कर्णयुगलं ब्रह्मलीलामृतप्लुतम् ॥ १२ ॥
अद्य मे पितरौ धन्यौ ययोरासमहं सुता ।
प्रसादपात्रं भवतो वदतो ब्रह्मणो रहः ॥ १३ ॥
धिक्कुलं धिग्धनं तस्य धिग्विद्यां धिग्यशोऽमलम् ।
न यस्य ब्रह्मचिन्तासु लीनवृत्ति(१) मनो भवेत् ॥ १४ ॥
आयुर्वर्षशतं लोके तदर्द्धं निद्रया हृतम् ।
बाल्यवार्द्धकभावाभ्यां तथा रोगादिपीडनैः ॥ १५ ॥
व्यर्थयन्ति महामूढा विमुखा ब्रह्मकीर्त्तने ।
तस्मात्कथय देवेश कथां पापप्रणाशिनीम् ॥ १६ ॥
पुरस्क्रियां विधोपेतां मन्त्रराजस्य शङ्कर ।
यस्य श्रवणमात्रेण मन्त्रसिद्धिः प्रजायते ॥ १७ ॥

शिव उवाच ॥

धन्यासि देवि गिरीन्द्रजे साधु पृष्टमिदं रहः ।
यस्य कस्यापि नो वाच्यं वाच्यं सर्वस्वदायिने ॥ १८ ॥
लब्ध्वा मन्त्रं गुरोः सम्यक् सेवया च प्रसादतः ।
जपतर्पणहोमाद्यैर्बोधयेन्मन्त्रमुत्तमम् ॥ १९ ॥

---

( १ ) 'लीनवर्ति' इ० पा०

शून्यागारे गिरौ रम्ये तीर्थे चोपाधिवर्जिते ।
उद्याने सिद्धपीठे वा प्रयागे पुष्करेऽथवा ॥ २० ॥
नर्मदायास्तटे वापि विन्ध्याद्रौ वा शुभस्थले ।
जपतो मन्त्रराजानं सिद्धिः शीघ्रं प्रजायते ॥ २१ ॥
जितेन्द्रियो जितक्रोधो जितचित्तो दृढव्रतः ।
दृढवैराग्यसम्पन्नो देहाहङ्कारवर्जितः ॥ २२ ॥
दयालुः सर्वभूतेषु भूतबाधापराङ्मुखः ।
शङ्कातङ्कादिरहितो रागद्वेषविवर्जितः ॥ २३ ॥
देहगेहादिकां चिन्तां परित्यज्य प्रशान्तधीः ।
मन्त्रध्यानपरो नित्यं कीलाध्यानरतः सदा ॥ २४ ॥
त्रिधास्त्रीसंङ्गतित्यागात् ध्यानमुद्राधरोऽनिशम् ।
मौनी त्रिषवणास्नायी शुचिदेहः सिताम्बरः ॥ २५ ॥
वर्णाश्रमक्रियायुक्तो विश्वासी ह्यनसूयकः ।
देवब्राह्मणगोनिन्दारहितो लोभवर्जितः ॥ २६ ॥
एवं विधगुणैर्युक्तः कुर्यान्मन्त्रपुरस्क्रियाम् ।
मनसा कल्पयेत्क्षेत्रं गमनागमनाय च ॥ २७ ॥
विकिरेत्सर्षपान् दिक्षु शतधा मन्त्रशोधितान् ।
ज्वलदग्निनिभान् दृष्ट्वा पलायन्ते विनायकाः ॥ २८ ॥
ततः खदिरकीलांश्च दशदिक्षु खनेत्प्रिये ।
नायान्ति कीलिता विघ्ना दृष्ट्वा क्षेत्रं च कीलितम् ॥२९॥
न बहिर्गमनं कुर्यात् क्षेत्रमुल्लंघ्य मोहतः ।
तमोमात्रात्मकाः केचित् श्रेयसां परिपन्थिनः ॥ ३० ॥
औदासिन्यं भयं क्रोधं निन्द्रातन्द्राविवर्जयेत् ।
दुग्धपानं फलाहारं भिक्षान्नं चापि सेवयेत् ॥ ३१ ॥
कन्दमूलफलैः पत्रैस्तथैवायाचितेन च ।
कल्पयेद्दैहिकीं वृत्तिं यथा नेन्द्रियविक्रिया ॥ ३२ ॥

इन्द्रियाणां विकारे तु मत्री शीघ्रं विनश्यति ।
सर्वेषु धर्ममार्गेषु चरतां सिद्धिकाम्यया ॥ ३३ ॥
परिपंथी न चान्योऽस्ति यथेन्द्रियविकारिता ।
तस्मादिन्द्रियरक्षार्थं सावधानतया चरेत् ॥ ३४ ॥
इन्द्रियाणि मनो देवि नोपेक्षाणीति मे मतिः ।
उपेक्षया हता लोका विभ्रमन्ते विचित्रधा ॥ ३५ ॥
विषयेभ्यो निवृत्तोऽपि जितकाममदोऽपि सन् ।
न करोमीन्द्रियोपेक्षां मायादृष्टिर्विमोहिनी ॥ ३६ ॥
के के न हता देवि बलिष्ठैरिन्द्रियारिभिः ।
अहल्यायां कृतो जार इन्द्रस्त्रैलोक्यरक्षकः ॥ ३७ ॥
चन्द्रमा गुरुभार्यायां तारायां विनियोजितः ।
बन्धुक्षेत्रे गुरुश्चापि वेदवेदान्तवित्कविः ॥ ३८ ॥
सीतायां रामभार्यायां मद्धक्तोपि दशाननः ।
एतेऽन्येपीन्द्रियहतास्तस्मात्तानि न विश्वसेत् ॥ ३९ ॥
तस्मादाहारमाकुंच्य जेतव्यानीति मे मतिः ।
धारयेन्नखकेशांश्च वासः प्रक्षालितं वसेत् ॥ ४० ॥
शयीत भूमौ शय्यायां कुशमय्यां निशासु च ।
वासः प्रक्षालयेद्देवि कटिमुक्तं यदा भवेत् ॥ ४१ ॥
पतितैः कर्मचाण्डालैः जातिचाण्डालकैरपि ।
म्लेच्छांत्यजसङ्करैश्च न भाषेत जपे स्थितः ॥ ४२ ॥
सन्ध्याकाले व्यतिक्रान्ते देहवृत्तिं तु कल्पयेत् ।
न्यूनाधिकं न कुर्वीत जपं देवि दिने दिने ॥ ४३ ॥
नीचसम्भाषणे(१) देवि म्लेच्छसम्भाषणे तथा ।
प्रायश्चित्तं प्रकुर्वीत सहस्रजपसंख्यया ॥ ४४ ॥
यामार्द्धेनावशिष्टायां निशि शय्यां परित्यजेत् ॥

(१) न नीचो यवनात्परः ।

उदिते च सहस्रांशौ यः शेते निन्द्रितोऽलसः ॥ ४५ ॥
जपः छिद्रमवाप्नोति सिद्धिर्भवति दूरगा ।
सावधानतया भाव्यं तस्माद्देवि दिने दिने ॥ ४६ ॥
ध्यायेल्लीलां जपश्रान्तो ध्यानश्रान्तः पुनर्जपेत् ।
जपध्यानसमायुक्तः शीघ्रं सिध्यति मन्त्रवित् ॥ ४७ ॥
नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोपि वा ।
तैलताम्बूलपूगादिसर्वभोगान्विवर्जयेत् ॥ ४८ ॥
वाङ्मनःकायकौटिल्यं सर्वथैव परित्यजेत् ।
न वाचोद्वेजयेत्किञ्चिन्नाशुभं कस्य वा स्मरेत् ॥ ४९ ॥
न चक्षुषा निरीक्षेत पशुक्रीडां कदाचन ।
न चेक्षेत स्त्रियं नग्नां न स्पृशेद्यदमङ्गलम् ॥ ५० ॥
मध्यन्दिनावधि जपेन्मन्त्रराजमनन्यधीः ।
ततः परं तु मनसा ध्यायेल्लीलां समाहितः ५१ ॥
जपस्यैवं दशांशेन होमं कुर्याद्दिने दिने ।
अथवा लक्षपर्यन्तं जप्त्वा होमं समाचरेत् ॥ ५२ ॥
समाप्तौवापि जुहुयात् यथासम्भवमम्बिके ।
प्रत्यक्षरं जपेल्लक्षं श्रद्धावान्नातिचञ्चलः ॥ ५३ ॥
आरब्धे तु जपेद्देवि मन उद्विजतेतराम् ।
चिन्ताशोकभयोद्वेगदुःस्वप्नादि प्रजायते ॥ ५४ ॥
तदा धैर्यं समालम्ब्य स्थिरीकुर्यान्मनो धिया ।
एवं लक्षत्रये जप्ते लीलाध्यानैकचेतसः ॥ ५५ ॥
विघ्नाः सर्वे पलायन्ते पातकानि ज्वलन्ति च ।
निर्विघ्नस्य विपापस्य मनः सम्यक् प्रसीदति ।
मनःप्रसन्ने देवेशि स्वप्ने देवादिदर्शनं ॥ ५६ ॥
वरार्थं प्रार्थ्यमानोपि नैव लुभ्यान्मनः प्रिये ।
पञ्चलक्षजपेद्देवि देवदानवरक्षसां ॥ ५७ ॥

अवधृष्यो भवेत्साक्षाज्ज्वलन्निव हुताशनः ।
दशलक्षजपे सिद्धे प्रार्थयन्त्यमराङ्गनाः ॥ ५८ ॥
त्वं स्वामी च वयं दास्योनुग्रहाण दयापरः ।
यावद्यास्यसि धाम स्वं भित्वा ब्रह्माण्डमण्डलम् ॥ ५९ ॥
तावत्त्वं स्वर्गमातिष्ठ ह्यस्माभिः कृतसेवनः ।
तत्रास्ति नन्दनवनं सर्वर्तुगुणमण्डितम् ॥ ६० ॥
स्वर्धुनी स्वर्णसोपाना रत्नमण्डपमाण्डिता ।
हंसकारण्डवाकीर्णा स्वर्णपद्मालिसङ्कुला ॥ ६१ ॥
आहारो यत्र पीयूषं रक्षिता यत्र देवराट् ।
प्रार्थयन्ति देवलोकं क्रतुभिः कर्मकोविदाः ॥ ६२ ॥
तस्मादलङ्कुरु स्वयं स्वर्गं त्रिदशमण्डितम् ।
एवं विलोभ्यमानोपि मन्त्री निश्चलमानसः ॥ ६३ ॥
श्रावयेदुत्तरं तासामक्षुब्धो निःकुतूहलः ।
न स्वर्गो नापि नरको न मोक्षो बन्धनं नहि ॥ ६४ ॥
स्वप्ने यथा तथा भाति रोचते न मनाङ्मम ।
तस्माद्यूयं मया प्रोक्ताः प्रयान्तु त्रिदशालयम् ॥ ६५ ॥
श्रुत्वैवं वचनं तस्य निराशाः यान्ति ताः स्त्रियः ।
दशपञ्च च लक्षाणि यदा जप्तो महामनुः ॥ ६६ ॥
तदा सिद्धाः समायान्ति सिद्धिभिः सह सुन्दरि ।
पातालेषु प्रवेशं च दूरश्रवणदर्शनम् ॥ ६७ ॥
परकायाप्रवेशं च मनःपवनवद्गतिं ।
पादुकाञ्जनसिद्धिं च रसधातुक्रियां तथा ।
इत्यादिविविधां सिद्धिं दर्शयन्ति न संशयः ॥ ६८ ॥
पूर्वोक्तवचने चोक्ते यान्ति ते नातिपूर्वकम् ।
यदा विंशति लक्षाणि जप्ते चिन्तामणिमनौ ॥ ६९ ॥
स्फुरन्ति सकला विद्याः शास्त्राणि विविधानि च ।

पञ्चविंशति लक्षाणि जप्ते चिन्तामणौ प्रिये ॥ ७० ॥
साक्षात्पश्यति देवेशि ब्रह्माण्डमक्षरात्मकम् ।
ब्रह्माण्डान्तः प्रविष्टं च विराजं पश्यति प्रिये ॥ ७१ ॥
त्रिंशल्लक्षजपे सिद्धे नारायणमनामयं ।
ध्याने पश्यति देवेशि व्यापकं सर्वतो मुखम् ॥ ७२ ॥
सर्वतः पाणिपादान्तं सर्वतः श्रवणाक्षिमत् ।
अनेकमूर्द्धमुकुटमनेकाभरणाकुलं ॥ ७३ ॥
पञ्चत्रिंशत्तु लक्षाणि मन्त्रावर्त्तनगौरवात् ।
ध्यानं विनापि चक्षुर्भ्यां पश्येन्नारायणं विभुम् ॥ ७४ ॥
चत्वारिंशत्तु लक्षाणि मन्त्रमावर्त्तयेद्यदा ।
पश्येन्मञ्चे ब्रह्ममये शयानं पुरुषं तदा ॥ ७५ ॥
चत्वारिंशत्तथा चाष्टौ लक्षाणि जपगौरवात् ।
मोहानिद्रावशेषोऽपि पश्येत् ब्रह्मपुरश्रियम् ॥ ७६ ॥
कोटियोजनविस्तीर्णे सुधासिन्धौ सुरेश्वरि ।
रत्नद्वीपे ब्रह्मपुरे नित्यवृन्दावनस्थितिम्(१) ॥ ७७ ॥
मणिमन्दिरमध्यस्थरत्नसिंहासनस्थितं ।
स्वामिन्याश्लिष्टवामाङ्गं सखीमण्डलवेष्टितम् ॥ ७८ ॥
उत्तमं पुरुषं पश्येत् ध्याने साक्षादिव स्वयं ।
ततस्तापो भवेत्तीव्रविरहेण फलात्मकः ॥ ७९ ॥
तदा च नियमाः सर्वे कृता वाप्यकृता अपि ।
समाप्यन्ते महेशानि स्वास्थ्याभावस्वभावतः ॥ ८० ॥
इत्येवं कथितं देवि यथा तापोदयो भवेत् ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ८१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे
द्वात्रिंशत्तमं पटलम् ॥ ३२ ॥

(१) "स्थिते" इति पाठः।

## त्रयस्त्रिंशं पटलम् ॥ ३३ ॥

देव्युवाच ॥

साधूक्तं मन्त्रराजस्य पुरश्चरणमद्भुतम् ।
अतः परं वदेशान तापावस्था सुदुर्लभा ॥ १ ॥
ययानुभूतया सम्यक् रसः पूर्णोनुभूयते ।
तस्मादहं श्रोतुकामा भवामि भक्तवत्सल ॥ २ ॥

शिव उवाच ॥

शृणु देवि परं गुह्यं त्वया पृष्टं वदामि ते ।
रसात्मकं रसभोक्तृ ब्रह्मेति श्रुतयो जगुः ॥ ३ ॥
रसः शृङ्गार एवादौ प्रोक्तस्ते गिरिनन्दिनि ।
संयोगविप्रलम्भात्मा द्विविधः स च कीर्त्तितः ॥ ४ ॥
अधुनाविप्रलम्भात्मा वर्त्तते केवलं रसः ।
कर्त्तव्योनुभवस्तस्य स एव परमं फलम् ॥ ५ ॥
यावत्तापोदयो न स्याद्विप्रलम्भो न सिध्यति ।
अनुभूतिः कथं तस्य जायते वद सुव्रते ॥ ६ ॥
संयोगरसमध्यस्था विप्रयुक्ता तु या प्रिये ।
तस्या एव भवेत्तापो नान्यस्य तु कदाचन ॥ ७ ॥
दशावस्था भवन्त्येताः तापे विरहसम्भवे ।
तास्ते वक्ष्यामि देवेशि शृणुष्वेकाग्रमानसा ॥ ८ ॥
अभिलाषस्तथा चिन्ता स्मरणं च ततः प्रिये ।
उद्वेगाधिप्रलापश्च जडतोन्माद एव च ॥ ९ ॥
गुणानां कीर्तनं चैव मरणं दशमं स्मृतम् ।
अत्युग्रविरहे देवि अवस्था दशमी भवेत् ॥ १० ॥
राजपुत्रो यथा दैवाद्वनं वनचरैर्वसन् ।
आत्मानं वेत्ति विवशं परं वनचरं प्रिये ॥ ११ ॥

प्रभुत्वशौर्यधैर्याद्याः धर्माः सर्वे तिरोहिताः ।
दीनः कृपणधीर्मन्दः पशुमांसोपजीवनः ॥ १२ ॥
आत्मापह्नवमापन्नं दृष्ट्वा कश्चित्प्रबोधयेत् ।
न वनेचरपुत्रोसि राजपुत्रोसि सर्वथा ॥ १३ ॥
किमर्थं हिंसि भो जीवान् दीनः कृपणधीः स्वयम् ।
क्व गुणाः शौर्यधैर्याद्याः प्रभुता क्व गता तव ॥ १४ ॥
त्यज प्रकृतिदौर्बल्यं श्रय भावं निजं पुनः ।
इत्याप्तवचनं श्रुत्वा जालपाशादिकं त्यजन् ॥ १५ ॥
राज्यप्राप्तिं च मनसा सङ्कल्प्याकुलचेतनः ।
उच्छून(१) हृदयो भूयादभिलाषाकुलान्तरः ॥ १६ ॥
तथा कृष्णप्रिया देवि प्रपञ्चे मोहकाल्पिते ।
वासनादेहमासाद्य तद्देहममताकुला ॥ १७ ॥
तिरोहितानन्दधर्मा दीना कृपणमन्दधीः ।
जीववत् वर्त्तमाना सा भूतद्रोहेण जीवति ॥ १८ ॥
पुरुषोत्तमानुग्रहतः सद्गुरुस्तां प्रबोधयेत् ।
न त्वं स्त्री लौकिकी चासि न पुमानसि सर्वथा ॥ १९ ॥
न च विप्रादिको वर्णः स्वात्मानं चेष्टसे मुधा ।
देहगेहममताहङ्कारमायां परित्यज ॥ २० ॥
प्रपञ्चबीजभूतायाः प्रकृतेः परतः प्रभोः ।
अक्षरादप्यतीतस्य पूर्णस्य परमात्मनः ॥ २१ ॥
प्रियासि त्वं परानन्दा परानन्दपदस्थिता ।
देहानुसन्धानपरां (२)मायां जहि वराङ्गने ॥ २२ ॥
सुधासिन्धौ मणिद्वीपमध्यखण्डे सुशोभने ।
कोटिसूर्यप्रतीकाशं कोटिचन्द्रसुशीतलं ॥ २३ ॥
वेष्टितं मणिमुक्तादि(३)प्राकारैः परमाद्भुतम् ।

१) 'उच्छिन्न' इति मूलपाठः । (२) प्रकारैः इ० पा० ।
३) 'स्वस्वरूपानुसन्धानपरा मायां जहीहि हि' इ० पा० ।

सखीमन्दिरसाहस्रैः परिवीतं समन्ततः ॥ २४ ॥
मणिमन्दिरमत्युच्चैः पञ्चयोजनमानतः ।
आस्ते ब्रह्माण्डतोबाह्ये तत्र ते रमणं शुभम् ॥ २५ ॥
यमुनासप्ततीर्थेषु भर्त्राक्रीडां निजां स्मर ।
प्रफुल्लशतपत्राढ्ये झङ्कारमुखरान्तरे ॥ २६ ॥
मणिमुक्तान्वितानावमारुह्य सखिभिर्वृता ।
महासरसि विद्योतन्मणिसोपानमण्डिते ॥ २७ ॥
यथा क्रीडन्तमात्मानं कथं विस्मरसे भ्रमात् ।
सहस्राश्वयुजं रम्यं शतचक्रस्फुरत्प्रभम् ॥ २८ ॥
सर्वतः किंकिणीजालैर्मणिमुक्ताश्रितान्तरैः ।
कुर्वद्भिः मुखरान् सर्वदिगन्तान् कूजितैर्निजैः ॥ २९ ॥
दाडिमीपुष्पसङ्काशं वरूथोपरि कल्प्यते ।
सुवर्णकलशै रम्यैर्दीप्यमानमनेकशः ॥ ३० ॥
नृत्यद्भिः स्त्रीगणैः सम्यक् गायद्भिः स्वकुतूहलैः ।
हासयद्भिर्हसद्भिश्च समन्तात्परिशोभितम् ॥ ३१ ॥
मुक्तावितानकौमुद्या समुद्भासितदिङ्मुखम् ।
प्रियेण रथमारुह्य वनक्रीडां स्मर स्वकां ॥ ३२ ॥
कदाचित्पुष्परागाद्रावुद्याने सुमनोहरे ।
नानापक्षिगणाकीर्णे स्थलपङ्कजमालिनि ॥ ३३ ॥
अनेककुट्टिमोत्तुङ्गमण्डपैः परितो वृते ।
दिव्यपुष्पभरामोदसुवासितदिगन्तरे ॥ ३४ ॥
चन्द्रप्रभह्रदे रम्ये रम्यराजीवसङ्कुले ।
मुक्ताजटितसौवर्णायुतसोपानपङ्क्तिभिः ॥ ३५ ॥
क्वचित् क्वचिच्छोभिताभिर्मंडपैः कुट्टिमोपरि ।
चतुस्तम्भैर्महारत्नैर्मंडितास्तोरणोज्वलैः ॥ ३६ ॥
पतत्पतत्रिपक्षोत्थवायुप्रचलपादपे ।

पतन्नेत्राञ्जनैर्दिव्यैः सखीयूथस्य दिव्यतः ॥ ३७ ॥
चन्दनैरङ्गगलितैः कुङ्कुमैः कुचविच्युतैः ।
परागैः पद्मगलितैः कुसुमैर्वायुनाहृतैः ॥ ३८ ॥
विचित्रदिव्यसलिले मणिमौक्तिकवालुके ।
जलक्रीडारसानन्दः कथं विस्मारितोऽधुना ॥ ३९ ॥
महापद्मवने दिव्ये समन्तात्लक्षयोजने ।
गन्धमाधुर्यनिपतत्षडङ्घ्रिपटलाकुले ॥ ४० ॥
योजनोत्सेधविस्ताररत्नमण्डपमध्यगे ।
वायुहृतपरागोघैर्वितानित नभोन्तरे ।
अनेकपक्षिसङ्घातकोलाहलसुखास्पदे ॥ ४१ ॥
स्वप्रियेण कृता या याः क्रीडाः सर्वारसाश्रयाः ।
कथं विस्मृत्य सहसा जीववत्परितप्यसे ।
कथं मायासुखे क्षुद्रे मिथ्याभूते भ्रमात्मके ॥ ४२ ॥
पङ्के कस्तूरिकाबुद्धिर्लवणे शशिविभ्रमम् ।
काचखण्डे मणिभ्रान्तिर्जलबुद्धिर्यथा मरौ ॥ ४३ ॥
तथैव शर्कराबुद्धिः कर्कराश्मादिषु भ्रमात् ।
कुर्वते मन्दमतयस्तथैव हि तवेदृशी ॥ ४४ ॥
शुक्तिकारजतेनैव न कश्चिद्विभवं गतः ।
न स्वप्नलब्धराज्येन राजा (१)कश्चित्सुविश्रुतः ॥ ४५ ॥
मरीचिकाजलं पीत्वा न कश्चित्तृप्तिमागतः ।
यदीच्छसि सुखं नित्यं जहि सर्वमिमं भ्रमम् ॥ ४६ ॥
विना भ्रमनिरासेन विना च स्वात्मधारणाम् ।
विना विषयवैतृष्ण्यं विना सन्तोषमार्जवम् ॥ ४७ ॥
विना वैराग्यमत्युग्रं विना सद्गुरुसेवनम् ।
विना विनयमास्तिक्यं शास्त्रशिक्षां विनापि च ॥ ४८ ॥

---

(१) 'विवुश्रुतः' इ० पा०

देहाध्यासो मोहकृतो न निवर्त्तेत सर्वथा ।
देहाध्यासो निवर्त्तेत निवृत्ते मोहविभ्रमे ॥ ४९ ॥
बिम्बभूतस्वरूपस्य विस्मृतिर्मोह उच्यते ।
मोहस्था वासना तस्य जीववच्च प्रतीयते ॥ ५० ॥
न जीवो वास्तवः कश्चित् वर्त्तते जलचन्द्रवत् ।
जलचन्द्रस्वरूपं च गगनेन्दुर्यथा भवेत् ॥ ५१ ॥
तथैव वासनारूपं निजे धाम्नि स्थिताः प्रियाः ।
गुणः कम्पादिको यद्वत् प्रतिबिम्बे प्रतीयते ॥ ५२ ॥
सुखदुःखादिमोहोत्थं वासनायां निरूपितम् ।
न ते सुखं च दुःखं च मोहमात्रं विजृम्भिते ॥ ५३ ॥
तस्मात्स्वरूपं विज्ञाय सम्यक् शास्त्राद्गुरोरपि ।
भ्रमं त्यक्त्वा निजानन्दमाप्नुहि प्रेममीलिता ॥ ५४ ॥
एवं सद्गुरुणा वाक्यामृतैरासेचिता यदा ।
निर्वाप्य मोहभुजगाविषज्वालां व्यथाकरीम् ॥ ५५ ॥
अभिलाषवती भूयात्परानन्दपतिं प्रति ।
अभिलाषो मया प्रोक्तः शृण्ववस्था नवापराः ॥ ५६ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वतीसंवादे त्रयस्त्रिंशं पटलम् ॥ ३३ ॥

## चतुस्त्रिंशं पटलम् ॥ ३४ ॥

### शिव उवाच ॥

अभिलाषे समुत्पन्ने ततश्चिन्ता प्रवर्त्तते ।
प्रियो मे परमानन्दः परमात्मा पुरुषोत्तमः ॥ १ ॥
अहं तु तत्प्रिया साक्षाद्वासना मोहवेष्टिता ।
बाललीलावलोकार्थं सम्प्रार्थ्य पुरुषोत्तमम् ॥ २ ॥

विमग्ना मोहजलधौ दुस्तरे तमसावृते ।
निरस्तं सकलं ज्ञानं जाता मे स्वात्मविस्मृतिः ॥ ३ ॥
(१)विभ्रमापि भ्रमाविष्टा देहाध्यासादितस्ततः ।
इयं मे जननी चायं पिता भ्राता सहोदरः ॥ ४ ॥
पुत्राः पौत्राश्च सुहृदो ज्ञातयो गोत्रिणस्तथा ।
ममत्वान्मे(२) वृथा मौढ्यात्परिगृह्य(३) विमोहितम् ॥ ५ ॥
स्वप्नदृष्टेषु लोकेषु न च द्वेष्यः प्रियोपि वा ।
परकीयः स्वकीयो वा मोह एव हि कारणं ॥ ६ ॥
अतः परं न मे कार्यं प्रियैर्वा चाप्रियैरपि ।
एक एव प्रियः स्वामी स तु विस्मारितो मया ॥ ७ ॥
तदा किमपरैः कार्यं स्वाप्निके दुःखहेतुभिः ।
तस्मात्किं साधनं कुर्यां येनाहं प्रीतिमाप्नुयाम् ॥ ८ ॥
तन्न पश्यामि लोकेऽस्मिन् वेदवेदान्तयोरपि ।
यत्कृत्वा सुलभो भूयात्पतिः प्रियतमो मम ॥ ९ ॥
न वेदैरुपदिष्टेन कर्मणा प्राप्यते पतिः ।
कर्मणां फलमुद्दिष्टं स्वर्गमात्रं विनश्वरम् ॥ १० ॥
न दानैर्वा तपस्तीर्थैः कायक्लेशैः महत्तरैः ।
उपवासैर्व्रतैर्जाप्यैश्चित्तशुद्धिविधायिभिः ॥ ११ ॥
कथं तैः केवलानन्दः पतिर्मे वशतामियात् ।
न ज्ञानेन भवेद्वश्यः केवलं मुक्तिकृद्धि तत् ॥ १२ ॥
वर्म तु पुरुषस्येह वैराग्यं ज्ञानगुप्तये ।
यदि ज्ञानोदयो न स्याद्वैराग्यं यदि केवलं ॥ १३ ॥
तथापि प्रकृतौ साक्षात्क्लीयते च तथापि किम् ।

---

(१) बभ्रामामि इति पाठः ।
(२) वृथौत्सुक्यात्' इ० पा०
(३) 'विमोहिता' इ० पा०

योगस्यापि पराकाष्ठा स्वात्मनो दर्शनावधिः ॥ १४ ॥
पुराणेष्वितिहासेषु भक्तिरुद्घोषिता भृशम् ।
सापि ज्ञानाङ्गमुद्दिष्टा तया प्राप्यः कथं पतिः ॥ १५ ॥
प्रियप्राप्तेरुपायस्य कोपि वक्ता न विद्यते ।
किं करोमि क्व गच्छामि कस्याग्रे प्रवदाम्यहम् ॥ १६ ॥
वनभ्रान्तो यथा कश्चित् पिशाचपरिमोहितः ।
क्षुत्तृड्भ्यां मर्दितो नक्तं दिवमस्तमिताशयः ॥ १७ ॥
दंदशूकैर्मृगैर्व्याघ्रैर्वाराहैर्भीषितो भृशम् ।
तथा दंशैश्च मशकैः व्यथितः श्वापदादिभिः ॥ १८ ॥
काङ्क्षत्यप्याश्रमं गन्तुं मार्गभ्रष्टः करोमि किम् ।
को मे प्रापयति स्थानं भ्रान्तस्यारण्यवीथिषु ॥ १९ ॥
किं करोमि क्व गच्छामि कस्याग्रे च वदाम्यहम् ।
बहुद्रुमलताकीर्णं काननं जनवर्जितम् ॥ २० ॥
इत्यादिविविधां चेष्टां कुर्वाणो व्याकुलान्तरः ।
अवतिष्ठते तथा चिन्ता जायते वासनास्वपि ॥ २१ ॥
चिन्तामग्नो यथा सर्वं पश्यन्नपि न पश्यति ।
प्रियचिन्तारसे मग्ना सखीनां वासना तथा ॥ २२ ॥
चिन्तैवोद्वेगभावेन ततः परिणता भवेत् ।
उद्विग्नमनसः किञ्चित् नैव हर्षाय जायते ॥ २३ ॥
प्राणादप्यधिवल्लभस्य विरहे किंनाम रम्यं भवेत्,
येनात्मा क्षणमप्युपैति विरतिं स्वास्थ्यं समालम्बते ।
स्फुरन्मीनान्वारिष्विव करणवृत्तीः समुदिताः,
समादाय क्षिप्य प्रियविरहचिन्ता विजयते ॥ २४ ॥
उद्विग्नभावाकुलितान्तराया न रोचते भूषणमम्बरं वा ।
शय्यासनं वाप्यशनं श्रुतं वा स्नानादिकं वा भुवनं वनं वा २५
इतः क्षणं वा च ततः क्षणं वा गृहे क्षणं वा शयने क्षणं वा ।

बहिस्तथान्तः क्षणमात्रमेत्य ह्युद्विग्नभावा न लभेत शर्म ॥२६॥
यथा विरक्तो न विधिष्वधिकृतः कृताकृते कर्माणि नैव दोषभाक् ।
उद्विग्नतया अपि विप्रलम्भे न नित्यनैमित्तिककर्मयोगः ॥२७॥

यदुद्वेगो देवि प्रियविरहजन्मा समुदित-
स्तदाकृष्णस्त्रीणां किमपि नहि कार्यं निगमतः ।
तपस्तीर्थं योगो व्रतनियमकर्माणि सकलं,
समाप्तं यत्तासां न हि मतिरभूद्देहविषया ॥ २८ ॥
श्रीकृष्णविरहे देवि य उद्वेगः प्रियासु च ।
अस्माकमीश्वरीणाञ्च दुर्लभः किं पुनर्नृणाम् ॥ २९ ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
चतुस्त्रिंशं पटलम् ॥ ३४ ॥

---

## अथ पञ्चत्रिंशं पटलम् ॥ ३५ ॥

### देव्युवाच ॥

वैराग्यस्योदये देव ज्ञाने स्यात्साधनावधिः ।
साधनावधिस्तत्रापि य उद्वेगस्त्वयोदितः ॥ १ ॥
यथा विरक्तो देवेश न कर्मस्वधिकारवान् ।
उद्विग्नोपि तथा देव न कर्माधिकृतो भवेत् ॥ २ ॥
मतिर्न देहविषया तत्र हेतुस्त्वयोदितः ।
अत्र मे खिद्यते चित्तो न सम्यगवधारणम् ॥ ३ ॥
भौतिको विषमो देहो वासना ब्रह्मकेवलम् ।
कस्य युज्येत संसारः कोत्र कर्माधिकारवान् ॥ ४ ॥
कर्माणि क्रियमाणे हि कोत्र भोक्ता फलस्य तु ।
अनित्यस्य जडस्यापि कथं देहस्य तद्भवेत् ॥ ५ ॥
कर्मणामिह भोक्त्री चेद्वासना यदि शङ्कर ।

कृतनाशः प्रसज्येत ह्यकृताभ्यागमस्तथा ॥ ६ ॥
अन्येन क्रियमाणे हि कथमन्येन भुज्यते ।
वासनायाश्च देहादेस्तारतम्यं वद प्रभो ॥ ७ ॥

॥ शिव उवाच ॥

शृणु वक्ष्यामि देवेशि तव प्रश्नमनुत्तमम् ।
देहात्मधीर्विनश्येत यस्य श्रवणमात्रतः ॥ ८ ॥
ज्ञानमार्गे तु देवेशि वैराग्यं साधनावधिः ।
नानाजन्मान्तराभ्यासरागरञ्जितचेतसां ॥ ९ ॥
जीवानां विषयेष्वेव बहिर्धावति वै मनः ।
सुखं स्यादिष्टविषये ह्यनिष्टे दुःखवद्भवेत् ॥ १० ॥
सुखदुःखादिकं सर्वमहङ्कारोभिमन्यते ।
अहङ्कारगतं सर्वं चिदाभ्यासे प्रतीयते ॥ ११ ॥
जलचन्द्रे यथा तस्य कम्पादिर्दृश्यते गुणः ।
प्रतीतिमात्रमेवैतत् तथापि न निवर्त्तते ॥ १२ ॥
तत्प्रतीतिं निराकर्त्तुं प्रकारं वच्मि ते शिवे ।
अनेकजन्मसंसिद्धसाधनानां बलेन च ॥ १३ ॥
शुद्धचित्तस्य देवेशि वैराग्यमुपसर्पति ।
रागाद्यभावाद्विषयेष्वहङ्कारो निवर्त्तते ॥ १४ ॥
न मनो धावनं कुर्याद्विषयेषु यतस्ततः ।
न गृह्णाति सुखं दुःखं रागद्वेषाद्यभावतः ॥ १५ ॥
कर्त्तृत्वं चैव भोक्तृत्वमहङ्कारे हि दृश्यते ।
स्थूलं वपुरधिष्ठानमहं लिङ्गस्य सुन्दरि ॥ १६ ॥
अहङ्कारगृहीतेन स्थूलदेहेन पार्वति ।
योऽन्यकर्माणि कुरुते निबध्येतापि तैरयं ॥ १७ ॥
भोगायतनमात्रं हि स्थूलो देहः प्रकीर्त्तितः ।
अहङ्कारे सचाध्यस्ते ह्यहङ्कारश्चिदात्मनि ॥ १८ ॥

स्फाटिके हि यथा ध्यस्तो जपारागः प्रकाशते ।
चिदाभासे तथा शुद्धेऽध्यस्ताहन्ता तथा प्रिये ॥ १९ ॥
सचावृत्य चिदाभासं स्वयमेव प्रकाशते ।
घटाकाशमिवावृत्य जलाकाशः प्रकाशते ॥ २० ॥
सुखं दुःखं भयं क्रोधो मोहो मात्सर्यमेव च ।
धर्माधर्मौ पुण्यपापे ज्ञानमज्ञानमेव च ॥ २१ ॥
अहङ्कारगतं सर्वं चिदाभासस्य न क्वचित् ।
तथाप्यैक्याध्यासवशादात्मन्येव प्रतीयते ॥ २२ ॥
विशुद्धे निर्मले देवि शोणिमेव मणौ यथा ।
तस्मादनात्मधर्माश्च जडा नित्यमशेषतः ॥ २३ ॥
विज्ञायाप्नोति वैराग्यमाविरिञ्चिपदादपि ।
रागाद्यभावान्न मनो विषयानुपधावति ॥ २४ ॥
विषयानुरागरहिते निर्मले मनसि प्रिये ।
स्वात्मा प्रकाशते ध्यानाद्दर्पणे स्वमुखं यथा ॥ २५ ॥
मनस्यपि लयं याते विकारशतवेश्मनि ।
समाधिस्थो भवेद्योगी यत्र शोको न विद्यते ॥ २६ ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे उत्तरखण्डे
पञ्चत्रिंशं पटलम् ॥ ३५ ॥

---

## षट्त्रिंशं पटलम् ॥ ३६ ॥

### शिव उवाच ॥

स्वस्वमोहेन सत्यस्ता नीताः स्वप्नं परात्मनः ।
तस्मात् (१)स्थूलशरीराणि भौक्तिकानि महेश्वरि ॥ १ ॥
सामान्यतो विदुस्तासां सूक्ष्मदेहस्तथाविधाः ।
कारणात्मा भवेन्मोहो वासनासु पृथक् पृथक् ॥ २ ॥

---

(१) 'तासां' इ० पा०

वासना तदवच्छन्ना जीवभावमिवागता ।
इच्छाशक्तिप्रयुक्तत्वात्स मोहोपि रसात्मकः ॥ ३ ॥
न वासनायाः संसारो न मोहस्य तथात्मनः ।
अहं लिङ्गस्य देवेशि संसारं उपयुज्यते ॥ ४ ॥
यतो नारायणोद्भूतो मायिकः परिकीर्त्तितः ।
इच्छानन्दांशसम्भूतः सखीमोहस्तु केवलम् ॥ ५ ॥
तस्मादहङ्कृतेरेषः संसारोन्यस्य न क्वचित् ।
कर्तृत्वं चैव भोक्तृत्वमहङ्कारस्य विद्यते ॥ ६ ॥
प्रतीयते वासनायां मोहस्तत्र प्रयोजकः ।
स्थूलदेहाभिमानेन अहङ्कारो विजृम्भते ॥ ७ ॥
सर्वेन्द्रियचरो भूत्वा सर्वकर्मप्रसाधकः ।
बध्यते तत्फलैश्चैवं प्रति जन्म विचित्रधा ॥ ८ ॥
स अध्यस्तो वासनासु वासना तद्गता भवेत् ।
तादात्म्यभावमापन्ने वासनाहङ्कृतिस्तथा ॥ ९ ॥
शृङ्गाररसरूपाणां सखीनां वासनास्तु याः ।
तासामानन्दरूपं च अहङ्कारेण मिश्रितम् ॥ १० ॥
प्राप्यं नारायणं द्वारमक्षरे प्रतिबिम्बिते ।
अन्तरङ्गा बहिरङ्गा स्वेम वृत्तिद्वयं भवेत् ॥ ११ ॥
प्रत्यक्वृत्तिरन्तरङ्गा बहिरङ्गा बहिर्गता ।
प्रत्यग्वृत्त्या तु देवेशि अहङ्कारश्रितं सुखं ॥ १२ ॥
नारायणसुखेनैव कूटस्थे व्यक्तिमागतं(१) ।
यथा सहस्रकुल्याभिः पूर्यमाणं महासरः ॥ १३ ॥
प्रोत्फुल्लकमलामोदं रोचते रुचिराकृतिः ।
वासनानां सहस्रैश्च ह्यहङ्कारविमिश्रितैः ।
पूर्णानन्दो भवेद्देवि गणितानन्द इत्यपि ॥ १४ ॥

(१) 'व्यक्तिमागते' इ० पा०

बहिरङ्गा तु या वृत्तिरहङ्कारस्य सुन्दरि ।
बहिर्वत्पश्यति विश्वं तयेदन्तात्मकं शिवे ॥ १५ ॥
अहङ्कारो विश्वबीजं वासनासु च बिम्बितः ।
दर्शयत्यखिलं विश्वं सखीभ्यो मुकुरो यथा ॥ १६ ॥
एवं रहस्यं कूटस्थो बाललीलाः सखीगणः ।
अनुभूतवन्तावन्योन्यं सुदुर्घटमिदं प्रिये ॥ १७ ॥
यथा कल्लोलजालेषु चन्द्रज्योत्स्ना प्रसर्पति ।
अहङ्कारविभेदेषु प्रियाणां वासना तथा ॥ १८ ॥
यथा कल्लोलजालेषु प्रशान्तेषु महेश्वरि ।
लक्ष्यते कौमुदी तस्मिन् प्रशान्ते वासना तथा ॥ १९ ॥
सद्गुरोः शरणं यायात्तदर्थमिहसुन्दरि ।
त्वं प्रियासीति कृष्णस्य पूर्णस्य परमात्मनः ॥ २० ॥
बाललीलाविलोकार्थमिह प्राप्ता न संशयः ।
प्रपञ्चसागरे मग्ना कथं तिष्ठासि निर्भया ॥ २१ ॥
पुत्राः पौत्रा धनं धान्यं देहगेहाम्बरादिकम् ।
स्वप्नलब्धमिदं सर्वं हित्वा बिम्बं निजं श्रय ॥ २२ ॥
कथं खेदयसे बिम्बं मोहमग्ना निरन्तरं ।
प्रियाणां वासनासित्वं न प्रियाभ्यः पृथङ्मता ॥२३॥
अहङ्काराश्रितायास्ते खेदो बिम्बाश्रितो भवेत् ।
तस्मात्प्रबुध्य झटिति निजं बिम्बं प्रबोधय ॥ २४ ॥
अहमध्यस्त एवायं देहस्ते पाञ्चभौतिकः ।
अहं स्त्री पुरुषः कृष्णो गौरस्तेनाभिमन्यसे ॥ २५ ॥
इदन्ताहंविशादाय अहन्ता सृष्टिकल्पिता ।
स्वस्वरूपमये वह्नौ हुत्वानन्दमवाप्नुहि ॥ २६ ॥
इदन्तावैरिमत्युग्रं मूलाहन्तारणाङ्गणे ।
स्मृतिखङ्गेन तीव्रेण घातयित्वा सुखीभव ॥ २७ ॥

एवं प्रबोधिता सम्यक् वासना गुरुणा यदा ।
क्रमेणोद्वेगमासाद्य वैराग्यमिव योगतः ॥ २८ ॥
त्यजत्यहङ्कृतिं सद्यो गेहे देहेन्द्रियेष्वपि ।
देहाभिमाने गलिते विज्ञाते स्वात्मनि ध्रुवम् ॥ २९ ॥
आसाद्य विरहावस्थामुद्वेगाख्यां रसात्मिकां ।
विप्रलम्भरसानन्दानुभवो जायते ततः ॥ ३० ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
षट्त्रिंशं पटलम् ॥ ३६ ॥

---

## सप्तत्रिंशं पटलम् ॥ ३७ ॥

॥ शिव उवाच ॥

योगिनो हि विरक्तस्य मनो ध्यानरतं भवेत् ।
सम्यक् प्रजातया स्मृत्या मनो लीलारतं तथा ॥ १ ॥
तदैवमानसी सेवा प्रसिध्यति न चान्यथा ।
तस्मादन्तर्बहिः कार्या सेवा यावत्स्मृतिर्भवेत् ॥ २ ॥
स्मृतिं विना तु देवेशि बहिः सेवां परित्यजेत्(१) ।
प्रत्यवायमवाप्नोति मार्गभ्रष्टो भवेदपि ॥ ३ ॥
स्मृत्यवस्थैव देवेशि मानसीमूलमुच्यते ।
मानस्यां जायमानायां बाह्यसेवा निवर्त्तते ॥ ४ ॥
प्रियसेवा प्रियाधर्मो यावत्सर्वेन्द्रियाक्रिया ।
सर्वेन्द्रियक्रियाभावान्मानसी सा प्रवर्त्तते ॥ ५ ॥
प्रेमपीयूषपाथोधौ यदा लग्नं मनो भवेत् ।
बाह्येन्द्रियाणां वृत्त्यभावाद्बाह्यसेवा न जायते ॥ ६ ॥
प्रवर्तते मानसी सा स्मृत्यवस्थोदये सति ।

---

(१) 'परित्यजन्' इ० पा०

तस्मात्स्मृतिं प्रवक्ष्यामि शृणुष्वैकाग्रमानसा ॥ ७ ॥
स्मृत्यां वै जायमानायामनुसन्धानवर्जितम् ।
मनो लीलावगाहेत घर्मतप्तो यथा गजः ॥ ८ ॥
अवगाहे च मनसि ब्रह्मलीलामहानदीम् ।
लीयन्ते वृत्तयः सर्वा गेहात्मविषया अपि ॥ ९ ॥
विगाढमाने मनसि प्रविष्टे लीलामहानन्दसुधासमुद्रम् ।
नेदं न चादो न सुखं न दुःखं जानाति तत्रैव विलग्नचित्ता॥१०॥
स्मरेच्चदानन्दसुधासमुद्रमनर्गलामोच्छ्वलदूर्मिमालकम् ।
समन्ततोन्तःस्फुरमाणरत्नप्रभाङ्कुरोद्भासितवीचिरम्यम् ॥ ११ ॥
हिरण्मयोद्भिन्नपतत्पतत्रिनक्रादिचक्रोत्पतनाभिरामम् ।
इतस्ततो धावदनेकपोतकुलाकुलं योजनकोटिमानम् ॥ १२ ॥
जलेशयानेकसुवर्णरत्नागिरिप्रभालङ्कृतकुक्षिभागम् ।
वैदूर्यतालीवनशोभिकूलं कूजद्विहङ्गस्वनितै रसालम् ॥ १३ ॥
उद्भिन्नतालीवनजान्धकारमुन्मूलयन्तं मणिभिस्तटस्थैः ।
स्फुरद्भिरुद्योतितदिग्विभागैर्दिवाकरेन्दुद्युतितस्करैरिव ॥१४॥
अलङ्कलङ्कोज्झितपूर्णचन्द्रविडम्बिनीभिस्तटगाभिरुच्चैः ।
अनेकचन्द्राकुलितस्य शोभां विलज्जयन्तं नभसोपि शुक्तिभिः॥१५।
द्वीपं मणीनां च तदन्तरुद्यन्मयूखकिञ्जल्कितमादधानम् ।
अनेककोटीन्दुदिवाकरस्पर्धं (१)स्मरेच्चिदानन्दघनं महेश्वरि।१६।
उपेतं नवखण्डैश्च नवरत्नमयैः शुभैः ।
नवभूम्यात्मकैश्चित्रैरुद्यानपरिमण्डितम् ॥ १७ ॥
कोट्यर्धयोजनायामविस्तारं सुमनोहरं ।
तिर्यगूर्ध्वयिता रेखाश्चतस्रो नवकोष्ठवत् ॥ १८ ॥
मध्यः खण्डः पद्मरागमयश्चानन्दभूमिकः ।
पुष्परागमयस्तस्य पूर्वभागे प्रतिष्ठितः ॥ १९ ॥

---

( १ ) धां इ० पाठः

चिदानन्दमयीं भूमिं तत्र सञ्चिन्तयेद्धिया ।
आग्नेय्यां वज्रघटितास्तत्र वैराग्यभूमिका ॥ २० ॥
महामारकतं दक्षे चिन्तयेत्खण्डमुत्तमम् ।
राजते यात्र देवेशि महासन्तोषभूमिका ॥ २१ ॥
नैर्ऋते चिन्तयेत्खण्डं यत्रास्ते प्रेमभूमिका ।
प्रवालमणिसन्नद्धं प्रकाशपरमोज्ज्वलम् ॥ २२ ॥
प्रतीच्यां नीलमणिभिर्मण्डितं भूक्तिभूमिकं ।
इन्द्रनीलमयं देवि प्रभाल्प्तिनभोन्तरम् ॥ २३ ॥
वायव्ये संस्मरेत्खण्डं ज्ञानभूमिसमाश्रयम् ।
उत्तरे चिन्तयेत्खण्डं गोमेदरचितान्तरम् ॥ २४ ॥
प्रकाशभूमिका यत्र राजते सुमनोहरा ।
महामौक्तिकखण्डश्च य ईशान्येगतः प्रिये ।
तं स्मरेत्सततं यत्र राजते रतिभूमिका ॥ २५ ॥
भूमयः सप्तदेवेशि योजनानां चतुर्दश ।
लक्षाणि ते मया प्रोक्ता (१)निबोध गिरिनन्दिनि ॥२६॥
चिदानन्दमयी भूमिस्तावत्येव प्रकीर्तिता ।
द्वाविंशतिर्योजनानां लक्षाण्यानन्दभूमिका ॥ २७ ॥
नित्यं वृन्दावनं यत्र राजते कर्णिकाकृति ।
स्मरेद्ब्रह्मपुरं तत्र प्रकाशपरमोज्ज्वलम् ॥ २८ ॥
तन्मध्ये देव देवेशि मणिनैकेन निर्मितम् ।
समकालोदितानेककोटिचन्द्रार्कभास्वता ॥ २९ ॥
क्वचिन्नीलं क्वचिद्रक्तं क्वचित्कृष्णं क्वचित्सितम् ।
दशभूम्यात्मकं श्रीमत्संस्मरेन्निजमन्दिरम् ॥ ३० ॥
मन्दिरं परितः पङ्क्तिः सौधानां कृष्णयोषिताम् ।
एकैकं मन्दिरं देवि योजनार्द्धप्रमाणतः ॥ ३१ ॥

( १ ) लक्षाणि मितयोक्तानि इ० पा०

सार्द्धद्वियोजनोत्सेधं निजमन्दिरमद्भुतम् ।
प्राकारैर्दशभिर्गुप्तं महोद्यानविराजितैः ॥ ३२ ॥
परिवृत्तीः स्मरेत्तस्य षट्सहस्राणि योजनाः ।
द्विसहस्रमिदं सूत्रं दक्षिणोत्तरगं भवेत् ॥ ३३ ॥
पूर्वपश्चिमगं सूत्रं तथैव परिमाणतः ।
महापद्मवनं ध्यायेत् परितो निजमन्दिरम् ॥ ३४ ॥
प्रकाशानन्दभूम्योस्तु सन्धौ नीलाद्रिरुत्तमः ।
योजनायुतमानेन तस्योच्छ्रायं स्मरेत्प्रिये ॥ ३५ ॥
शृङ्गाणि तस्य देवेशि त्रीणि सन्त्यद्भुतानि च ।
चन्द्रगौरं चन्द्रचूडं महाचन्द्रं ततः परम् ॥ ३६ ॥
चन्द्रगौरे महाशृङ्गे चन्द्रनाम्ना महासरः ।
शतयोजनविस्तारं चन्द्रसोपानमण्डितं ॥ ३७ ॥
गुञ्जद्भ्रमरझङ्कारमुखरीकृतदिङ्मुखं ।
प्रफुल्लपङ्कजवनामोदमोहितषट्पदम् ॥ ३८ ॥
मरालीयूथमध्यस्थमरालगणमण्डितम् ।
कूजितैश्चित्रपक्षाणां पक्षिणां सुमनोहरम् ॥ ३९ ॥
तटस्थोद्यानशोभाभिर्नयनानन्दमन्दिरम् ।
आनन्दसुधयापूर्णं संस्मरेत्स्मृतिधारया ॥ ४० ॥
कदाचित् क्रीडनं तत्र भगवान् पुरुषोत्तमः ।
सखीसहस्रसेव्याभिः स्वामिन्या सह केवलम् ॥ ४१ ॥
चन्द्रचूडे पञ्च ह्रदाः परमानन्दसुधामृताः ।
रत्नसोपानसाहस्रैः काञ्चनैः कृतकौतुकाः ॥ ४२ ॥
सुवर्णपङ्कजवनैर्वायुनान्दोलितैर्मुहुः ।
सुवासयाद्भिः सततं दिगन्तात्परिशोभिताः ॥ ४३ ॥
क्रीडते तत्र भगवान् कदाचिद्योषितां गणैः ।
उद्यानराजं देवेशि महाचन्द्रेपि संस्मरेत् ॥ ४४ ॥

पादपाः पत्रविस्तीर्णाः स्वर्णशाखासुपेशलाः ।
नीलवैदूर्यपत्राढ्यामुक्तास्तबकमालिनः ॥ ४५ ॥
कदम्बाशोकपुन्नागमालतीबकुलार्ज्जुनैः ।
बिल्वतालैस्तमालैश्च हितालैः पारिजातकैः ॥ ४६ ॥
केतकैश्चम्पकैश्चूतैः कल्पवृक्षैः सुशोभितम् ।
तन्मध्ये संस्मरेद्देवि मणिमण्डपमायतम् ।
शतस्तंभैः स्वर्णमयैः मुक्तारत्नचितान्तरैः ॥ ४७ ॥
शोभमानं चतुर्द्वारं सासभौमं निरामयम् ।
प्रतिद्वारं कुट्टिमाभ्यां प्रतिकुट्टिमदीर्घिकम् ॥ ४८ ॥
दीर्घिकासु लसत्स्वर्णपद्मव्यग्रषडाङ्घ्रिकम् ।
कुट्टिमोपरि विस्फूर्जद्रत्नस्तम्भमनोहरम् ॥ ४९ ॥
प्रवालनीलमाणिक्यमुक्तावैदूर्यगारुडैः ।
कृतस्वस्तिकविस्फूर्यन्मध्यदेशाश्रियोज्वलम् ॥ ५० ॥
शुकैः पारावत्तैर्हंसैः कूजद्भिः परिशोभितम् ।
स्वर्णवैदूर्यमुक्ताभिर्विलसत्तोरणोज्वलम् ॥ ५१ ॥
चतुर्दिक्षु महासौधराजिराजितमद्भुतम् ।
कदाचिदत्र भगवान् रथमास्थाय सुप्रभम् ॥ ५२ ॥
सखीसहस्रैरायाति क्रीडनार्थं महेश्वरि ।
कृत्वा नानाविधां क्रीडामुद्याने सुमनोहरे ॥ ५३ ॥
मण्डपं प्रविशेत्सद्यः सखीभिः सह संवृतः ।
आराधन्ते ततः सर्वास्तासां याः परिचारिकाः ॥ ५४ ॥
दिव्यसौधानि मणिभिर्दीप्यमानानि सर्वतः ।
वीणामृदङ्गतन्त्रीभिर्गायन्ति यश उत्सुकाः ॥ ५५ ॥
तद्गीतानन्दसन्दोहनिमग्नेन्द्रियवृत्तयः ।
उद्यानराजहरिणाः हरिण्यः शुकसारसाः ॥ ५६ ॥
पिकाः पारावताश्चैव मयूरा मधुभाषिणः ।

स्ववाचं मुद्रयन्त्येव यथा चित्रगताः शिवे ॥ ५७ ॥
सुधारसादप्यधिकैर्वाक्यैर्हास्यरसान्वितैः ।
हासयन्ति हसन्त्यश्च प्रियं च स्वामिनीमपि ॥ ५८ ॥
कदाचित्प्रार्थयामासुः स्वामिनीपक्षमाश्रिताः ।
नेत्रबन्धमयीं लीलां रन्तुं कृष्णं सहस्रशः ॥ ५९ ॥
पणबन्धं ततश्चक्रुर्नेत्रबन्धे कृते सति ।
यदि नाम न जानासि तदा प्रिय पराजितः ॥ ६० ॥
स्ववस्त्राभरणान्यस्यै देहि चित्तमखेदयन् ।
सा प्रिया प्रिय ते रूपं करिष्यति मनोहरम् ॥ ६१ ॥
त्वत्सिंहासनमारूढा कृष्णोऽहमिति वादिनी ।
भवन्तमाज्ञापयतु नृत्यतां सखि मत्पुरः ॥ ६२ ॥
त्वया नृत्यं तदा कार्यमवश्यमिव चाङ्गना ।
त्वयि नृत्यति निःशङ्कं गास्यामो वयमेव हि ॥ ६३ ॥
यदि वा नाम जानासि प्रियापि कुरुतां तथा ।
इति ताः पणमाश्राव्य परिवव्रुः प्रियं प्रियाः ॥ ६४ ॥
तदेन्दिरा सखी काचित् पश्चादागत्य सत्वरम् ।
बबन्ध नेत्रयुगलं करपद्मयुगेन च ॥ ६५ ॥
नेत्रे गृहीतः कृष्णः प्राह त्वमसि सुन्दरी ।
तदोन्मुच्याक्षियुगलं स्मिता प्राहेन्दिरा सखी ॥ ६६ ॥
किं जल्पसि मुधा नाम प्राणनाथ पराजितः ।
न चाहं सुन्दरी नाम्ना प्रिया तेऽस्मीन्दिराभिधा ॥ ६७ ॥
तस्माल्लज्जां परित्यज्य पणबन्धं विचारय ।

॥ श्रीकृष्ण उवाच ॥ ॥

नाहं पराजितः साक्षादज्ञातेति न मुह्यतां ॥ ६८ ॥
त्वयीन्दिरे सुन्दरीति भ्रमः सर्वादिको मम ।
सुन्दर्यां मत्प्रियायां च स्फुरत्येवेन्दिराभ्रमः ॥ ६९ ॥

नाण्वप्यन्तरं वापि नामतो रूपतोपि च ।
ज्ञात्वापि त्वामिन्दिरेति क्षणादेव भ्रमद्धिया ।
जल्पितं सुन्दरीत्येतन्मयोक्तमवधार्यतां ॥ ७० ॥
प्रियस्य वचनं श्रुत्वा पुनः प्राहेन्दिरा वचः ।

॥ इन्दिरोवाच ॥

अहो नाथ महत्येषा वञ्चना चातुरी तव ॥ ७१ ॥
ज्ञात्वापि मामिन्दिरेति सुन्दरीति मुखोद्गतम् ।
कथं श्रद्दधां हे नाथ वेदार्थमिव नास्तिकाः ॥ ७२ ॥
स्त्रीषु हास्येषु धूर्त्तेषु प्राणबाधाभयेषु च ।
सवदत्यनृता वाणीत्येतज्जानाति भो भवान् ॥ ७३ ॥
मुखोद्गते हि विश्वासो नास्माकं हृदयस्थिते ।
नास्तिकस्येव प्रत्यक्षे प्रमाणे न तु शाब्दिके ॥ ७४ ॥
तस्मात्त्वं स्वीयवचनं यदि सत्येन युञ्जसि ।
देहि लज्जां विहायाशु वासांस्याभरणानि च ॥ ७५ ॥
नो चेत्स्वतन्त्रः किं कुर्मः प्रभुस्त्वमस्वतन्त्रकाः ।
पणकोपभयाद्भूयः का प्रतीतिस्तवेति हि ॥ ७६ ॥
तस्मादर्थमनर्थं च स्वकीयहृदये पुनः ।
विनिश्चित्य यथा न्याय्यं यदिच्छसि तथा कुरु ॥ ७७ ॥
श्रुत्वेन्दिरावाक्यमतिप्रगल्भं चातुर्ययुक्तं च सखीसमाजे ।
स्मित्वा स्वभूषावसनानि सद्यः स्वयं समुत्तार्य ददावथास्यै॥७८॥
महानीलं ददौ वासः कटिवस्त्रं सुवर्णभम् ।
उष्णीषं चैव कौसुम्भं मुक्ताभूषितकुण्डले ॥ ७९ ॥
स्फुरत्कोटीन्दुविलसदुष्णीषमणिमुत्तमम् ।
दिव्यमुक्ताफलानद्धग्रीवाभरणमुज्ज्वलम् ॥ ८० ॥
नवरत्नमयीमालां विचित्रकिरणोज्ज्वलाम् ।
किर्मीरितमिवात्युच्चैः प्रकुर्वन्तीं हृदाम्बुजम् ॥ ८१ ॥

माणिक्यमुक्तामणिभिर्जटितं वलयद्वयं ।
नखशुक्तिं महारम्यां स्वर्णपद्मविभूषिताम् ॥ ८२ ॥
केयूरयुगलं चारु चिन्तारत्नचितान्तरम् ।
मध्योल्लसत्पद्मरागं चतुष्कं चातिसुन्दरम् ॥ ८३ ॥
उन्मत्तानङ्गमातङ्गगलघण्टाविडम्बिनीम् ।
नीलहीरादिमणिभिः स्फुरद्भिः परितो वृताम् ।
क्षुद्रघण्टाक्वणत्कारैः स्वर्णकाञ्चीमनूपमाम् ॥ ८४ ॥
ऊर्मिकाः प्रस्फुरद्रत्नप्रभापटलमध्यगाः ।
अङ्गुलीछद्मलावण्यधाराशङ्कां वितन्वतीः ॥ ८५ ॥
पादयोः कटके दिव्ये सुवृत्ते मणिभूषिते ।
ददौ महामनाः कृष्णो यदन्यद्भूषणादिकम् ॥ ८६ ॥
ततश्च रचयामास वेषं तस्या मनोहरम् ।
उष्णीषं मूर्ध्नि रचितं कर्णयोः कुण्डलद्वयम् ॥ ८७ ॥
कण्ठे मालां दधौ रम्यां नवरत्नविराजिताम्(१) ।
वलये कल्पयामास मणिबन्धद्वये तथा ॥ ८८ ॥
केयूरयुगलं बाह्वोश्चतुष्कं हृदयाम्बुजे ।
कट्यां प्रकल्पयामास स्वर्णकाञ्चीं मनोहराम् ॥ ८९ ॥
अङ्गुलीयान्यङ्गुलिषु तदङ्गे कल्पयद्धरिः ।
ददौ वेत्रं महादिव्यं खचितं मणिमौक्तिकैः ॥ ९० ॥
रत्नसिंहासने स्थाप्य तां सखीमिन्दिराभिधाम् ।
ननर्त कृष्णो रुचिरान् भावानाविश्चकार ह ॥ ९१ ॥
वनितारूपमास्थाय मोहयन्निव मायया ।
प्रिये नृत्यति सोत्साहं जगुः काश्चन योषितः ॥ ९२ ॥
मृदङ्गमहनत् माध्वी यौवनोद्वेलगर्विता ।
वीणामासावती विद्युल्लता तन्त्रीमवादयत् ॥ ९३ ॥

(१) 'विभूषिताम्' इत्यपि पाठः

लावण्यलहरी साक्षाद्वंशीवादनतत्परा ।
सुप्रभा निस्तुला चोभे अभूतां तालधारिके ॥ ९४ ॥
काश्चिन्मुखध्वनिं चक्रुस्तालीवादनतत्पराः ।
काश्चिज्जयजयेत्युच्चैरूचुर्हास्यरसाकुलाः ॥ ९५ ॥
सुमुखीललिताद्यास्तु साधु साध्विति चाब्रुवन् ।
अन्याः कुतूहलापन्नाः कृष्णस्य मुखपङ्कजम् ॥ ९६ ॥
पपुर्लावण्यमधुरं भ्रमन्नयनषट्पदम् ।
ततो लीलावसाने तु कृष्णरूपधरा सखी ।
सिंहासनात्समुत्थाय रचिताञ्जलिराययौ ॥ ९७ ॥
पपात पादयोर्भर्त्तुः प्रिय उत्थाप्य तां सखीम् ।
आलिलिङ्ग चिरं प्रेम्णा चुचुम्बाननपङ्कजम् ॥ ९८ ॥
कृष्णं विभूषयामास पुनस्तैर्भूषणाम्बरैः ।
रथारूढा ययुः सर्वाः प्रियेण निजमन्दिरम् ॥ ९९ ॥
चतुःषष्टिमहास्तम्भराजिराजितभूमिकां ।
प्राप्य सिंहासनगतं परिवव्रुः प्रियं प्रियाः ॥ १०० ॥

इति श्रीमाहेश्वरतन्त्रे शिवोमासंवादे
सप्तत्रिंशं पटलम् ॥ ३७ ॥

---

## ॥ अष्टत्रिंशं पटलम् ॥ ३८ ॥

॥ पार्वत्युवाच ॥

देवेश परमेशान सुरासुरनमस्कृत ।
कथेयं सुमहत्पुण्या सुधास्वादीयसंस्तुता ॥ १ ॥
तथापि देवदेवेश त्वद्वाक्पीयूषपानजा ।
तृप्तिर्न जायते सम्यक् शुश्रूषाकुलचेतसः ॥ २ ॥

कथाश्रवणजानन्दो न मुक्तावपि दृश्यते ।
कस्तं विहाय मोहेन निजायुः प्रविलापयेत् ॥ ३ ॥
ते मन्दभाग्याः कुधियो दुराचारपरा हि ते ।
यैर्न लब्धा क्षणमपि कथा कर्णसुधा सती ॥ ४ ॥
सार्द्धत्रिकोटितीर्थानि ऋषयो मन्त्रदेवताः ।
यत्र कृष्णकथावादस्तत्रैवायान्तिनिश्चितम् ॥ ५ ॥
तस्मादनुग्रहीतास्मि भवता करुणात्मना ।
कथां कथयता रम्यां कृष्णस्यानन्दरूपिणः ॥ ६ ॥
पुनः कथय देवेश कथामानन्दकारिणीम् ।
चतुःषष्टिमहास्तंभराजिराजितभूमिकाम् ॥ ७ ॥
अधिष्ठाय प्रियेणैताः संगताश्च किमाचरन् ।
तद्वदस्वमहेशान यदि तेनुग्रहो मयि ॥ ८ ॥

॥ शिव उवाच ॥

शृणु पार्वति वक्ष्यामि यत्पृष्टोहं सुलोचने ।
यस्य श्रवणमात्रेण जायते रतिरुत्तमा ॥ ९ ॥
नीलाद्रिशिखरादेत्य निजं धाम परात्परः ।
रत्नसिंहासने तस्थौ नवरत्नविभूषिते ॥ १० ॥
सिंहासनस्य परितो मण्डलाकारसंस्थिताः ।
प्रफुल्लनयनाम्भोजाः पश्यन्ति स्म प्रियं मुदा ॥ ११ ॥
पूर्णानन्दं पूर्णकामं तत्र काश्चन योषितः ।
राजोपचारविधिना ह्युपतस्थुर्मुदान्विताः ॥ १२ ॥
शरच्चन्द्रप्रभागौरं मुक्तामणिविभूषितम् ।
रत्नदण्डमनोहारि मिहिला छत्रमादधौ ॥ १३ ॥
माणिक्यखचितस्वर्णदण्डचामरचालनैः ।
उपतस्थौ महाभागा चन्द्रलेखा मनस्विनी ॥ १४ ॥
सुवर्णसूत्रविद्योतचन्द्रकार्पितमौक्तिकम् ।

मयूरव्यजनं धृत्वा करे चित्रा परामृशत् ॥ १५ ॥
हिमांशुमण्डलप्रख्यं दर्पणं स्वर्णभूषितम् ।
रत्नचित्रं करे धृत्वा तस्थावानन्दमञ्जरी ॥ १६ ॥
सुगन्धद्रव्यसम्भिन्नास्ताम्बूलीदलवीटिकाः ।
रत्नपात्रे समादाय तस्थौ मदनमेखला ॥ १७ ॥
शतयोजनसंसर्पि दिव्यचन्दनपूरितम् ।
रत्नपात्रं करे धृत्वा तस्थौ भुवनमालिनी ॥ १८ ॥
मुक्ताजटितसौवर्णभृङ्गारजलपूरितम् ।
माणिक्यनालमादाय रत्नरेखा पुरःस्थिता ॥ १९ ॥
शरच्चन्द्रांशुधवलं दशावलितमौक्तिकम् ।
हस्तवासः करे धृत्वा पुरस्तस्थौ विहारिणी ॥ २० ॥
स्वर्णपात्रे स्थितं दिव्यं नानास्वादुरसान्वितम् ।
आनन्दभोगमादाय माधुरी दक्षिणे स्थिता ॥ २१ ॥
लीलावचांसि यानीह प्रवक्ति पुरुषोत्तमः ।
तानि श्लाघयितुं तस्थौ सुन्दरीशानकोणगा ॥ २२ ॥
माध्वी मृदङ्गघोषेण वीणायाशावती सती ।
विद्युल्लता तथा तन्त्रीरवेणातिरसच्युता ॥ २३ ॥
वंशीवाद्येन लावण्यलहरी ललिताकृतिः ।
रागरङ्गा विनोदार्थं प्रयुक्तपरिभाषया ॥ २४ ॥
रागविद्यासु कुशला रागिणी रागविद्यया ।
उपतस्थुर्महाभागाः कृष्णं परमपूरुषम् ॥ २५ ॥
ततो नानाविधां चक्रुर्लीलां हास्यरसाधिकाम् ।
तदन्ते प्रियमाभाष्य पप्रच्छुस्ताः समुत्सुकाः ॥ २६ ॥

सख्य ऊचुः ॥

भो नाथ पुरुषश्रेष्ठ प्रियस्त्वं च वयं प्रियाः ।
प्रियत्त्वभाजां या प्रीतिर्न चोपाधिकृता भवेद् ॥ २७ ॥

यद्युपाधिकृता प्रीतिस्तदा रूपं न सिद्ध्यति ।
तस्मात्प्रेमवतीनां नो यथावद्वक्तुमर्हसि ॥ २८ ॥
अवाग्विषयमत्युग्रमहैतुकमनामयम् ।
त्वय्येवास्माकमतुलं प्रेम विद्योतते प्रिय ॥ २९ ॥
शब्दोपाधौ कथं तच्च धर्त्तुं शक्ता वयं स्त्रियः ।
तस्मात्तत्प्रकटीकर्तुं न समर्थाः कदाचन ॥ ३० ॥
स्वयंवेद्यमिदं भाति कथं वाचा प्रचक्ष्महे ।
अस्मासु यद्भवेत्प्रेम त्वदीयं पुरुषोत्तम ॥ ३१ ॥
अधिकं वा समं न्यूनं कथं विद्मः प्रिया वयम् ।
त्वमेव वाचा तद्ब्रूहि तारतम्यविदो वयं ॥ ३२ ॥
सखीनामपि सर्वासां स्वस्वप्रेमनिरूपणे ।
विवादः शान्तिमाप्नोति त्वत्प्रेमश्रवणेन च ॥ ३३ ॥
इति श्रुत्वा वचस्तासां परात्मा पुरुषोत्तमः ।
न वाग्वृत्तिव्यक्तियोग्यं ज्ञात्वा प्रेमाब्रवीद्वचः ॥ ३४ ॥

श्रीकृष्ण उवाच ॥

भवतीभिर्यदुक्तं भो तत्तथैव न संशयः ।
स्वसंवेद्यमिदं(१) प्रेम न वाचा वक्तुमर्हति ॥ ३५ ॥
रम्यैर्मनोहरैर्भावैर्विलक्षणीयं भवेदपि ।
प्रेम रत्यात्मकं सख्यो रतिरेव रसोस्म्यहम् ॥ ३६ ॥
तस्मान्मदात्मकं प्रेम ज्ञातव्यमिह सर्वथा ।
मत्स्वरूपं तु को वेत्ति को वा वक्तुं समीहते ॥ ३७ ॥
निषेधमुखतो वेदा वर्णयन्ति विशारदाः ।
कथमन्ये वराकास्तु कालावच्छेदमूर्त्तयः ॥ ३८ ॥
मत्स्वरूपमिदं प्रेम न शब्दविषयं भवेत् ।
तस्मान्मयापि नो वक्तुं शक्यतेऽन्यस्य का कथा ॥ ३९ ॥

---

(१) 'स्वयंवेद्यमिदं' इ० पा०

एवं ताः प्रत्युदीर्याथ दर्पणं स्वपुरःस्थितं ।
आदाय ताभ्यः प्रायच्छत्सन्मुखं पुरुषोत्तमः ॥ ४० ॥
प्रेमदत्ते प्रियेणास्मिन् दर्पणे योषितां तदा ।
पश्यन्तीनां मुखाब्जानि वितर्कः सुमहानभूत् ॥ ४१ ॥
प्रेमप्रश्नोत्तरं वक्तुमात्मदर्शः प्रदर्शितः ।
किं सूचितमनेनेति कथं विज्ञायते हि तत् ॥ ४२ ॥
स्वच्छं दर्पणवत् प्रेम स्वकीयं वक्ति किं प्रभुः ।
प्रतिबिम्बवदस्माकं बिम्बवत्स्वीयमित्युत ॥ ४३ ॥
अथवा दर्पणे यद्वत् यथारूपं च दृश्यते ।
तथा भवेत्प्रेमनिभं मदीयमिति सूचितम् ॥ ४४ ॥
प्रेमभेदनिरासार्थमैक्यसंसूचनाय किम् ।
रूपस्य प्रतिरूपस्य यथा तद्वद्भवेन्न किम् ॥ ४५ ॥
इति संशयमग्नं स्वं सखीवर्गं परात्परः ।
भवतीनामयं तर्को महाशयनिरूपकः ॥ ४६ ॥
न मया विद्यते भेदो युष्माकं च मनागपि ।
अहं यूयं यूयमहमित्येषा मे मतिः प्रियाः ॥ ४७ ॥
अभेदसूचनार्थाय दर्पणो वः पुरोधृतः ।
इति प्रहर्षजनकैर्वचोभिः समनन्दयत् ॥ ४८ ॥

शिव उवाच ॥

एवमानन्दिताः सर्वाः श्रुत्वा वाचः सुशोभनाः ।
प्रहर्षवेगाविवशाः कृष्णस्य मुखपङ्कजम् ॥ ४९ ॥
अङ्गुष्ठतर्जनीभ्यां च गृहीत्वा चिबुकस्थलम्(१) ।
चुचुम्बुः परया प्रीत्या ससीत्कारं गतत्रपाः ॥ ५० ॥
आलिलिङ्गुस्तथा चान्याः प्रशशंसुस्तथापराः ।

(१) 'गृहीतचिबुकस्थलाः' इ० पा०

त्वय्येतदुचितं नाथ यत्प्रियाणां प्रियङ्करः(१) ॥ ५१ ॥
इत्याहुरपराः सख्यः प्रेमनिर्भिन्नमानसाः ।
एतस्मिन्नन्तरे नाम्ना सुन्दरीति वराङ्गना ॥ ५२ ॥
स्मितपूर्वमुवाचेदं वचनं प्रेमगर्विता ।

सुन्दर्युवाच ॥

भवतीनामयं तर्को यद्यपि प्रियसम्मतः ॥ ५३ ॥
तर्कशेषस्तथा ऽप्यस्ति न प्रियेण प्रकाशितः ।
भवतीभिः स्वमत्यापि (२)स च नावगतः परम् ॥ ५४ ॥
स्वीयोपरि प्रेम कीदृगिति पृष्टे प्रियेण हि ।
आत्मदर्शो दर्शितो वस्तत्र वक्ष्ये प्रियाशयम् ॥ ५५ ॥
आत्मादर्शे यथा सम्यक् स्वस्वरूपं निरीक्षते ।
तदभावे स्वस्वरूपानुभवो नैव जायते ॥ ५६ ॥
श्रुतिगीतमिदं तद्वत्स्वरूपं मे रसात्मकम् ।
मयानुभूयते सम्यक् प्रियापात्रसमाश्रयम् ॥ ५७ ॥
अन्यथा मत्स्वरूपस्य न ममानुभवः क्वचित् ।
यथा धरागतं सूर्यो रसं पीत्वाभिवर्षति ॥ ५८ ॥
तथा प्रियारसं मां च पीत्वा तद्भावपूरिताः ।
आनन्दयन्ति मामेव घनीभूतरसात्मकम् ॥ ५९ ॥
दर्पणछद्मना सख्यः अयमर्थोऽपि सूचितः ।
इत्येतत्सुन्दरीवाक्यं श्रुत्वा सख्योऽतिविस्मिताः ॥ ६० ॥
भगवानपि पूर्णात्मा तदुक्तार्थममन्यत ।

श्रीकृष्ण उवाच ॥

अन्वर्थं साधु ते नाम सुन्दरीति मम प्रियम् ॥ ६१ ॥
त्वं मे प्राणाधिका चासि सर्वस्वं मे त्वमेव हि ।

---

(१) 'पियकरः' इ० पा०
(२) 'स पत्यापि' इ० पा०

त्वदधीनोऽस्म्यहं साध्वि प्रेमपाशनियन्त्रितः ॥ ६२ ॥
त्वदुक्तं यन्मयोक्तं तत् त्वद्दृष्टं तन्मयेक्षितम् ।
यत्त्वयाङ्गीकृतं साध्वि मयाप्यङ्गीकृतं हि तत् ॥ ६३ ॥
आवयोरन्तरं नास्ति यः करोति स पातकी ।
इत्येवं वचनं श्रुत्वा प्रियास्ताः प्रियभाषितम् ॥ ६४ ॥
प्रहर्षं परमं जग्मुर्विषण्णां स्वामिनीं विना ॥ ६५ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वती संवादे अष्टत्रिंशं पटलम् ॥ ३८ ॥

## अथैकोनचत्वारिंशं पटलम् ॥ ३९ ॥

पार्वत्युवाच ॥

भगवन् देवदेवेश दिव्यज्ञानविशारद ।
अत्याश्चर्यकरी प्रोक्ता कथा ते जीवदुर्लभा ॥ १ ॥
प्रादुर्भवन्ति देवेश सर्गेऽस्मिन् देवदानवाः ।
मनुष्यलोकेपि च ते सम्भवन्ति यदृच्छया ॥ २ ॥
देवाः क्षमार्जवोपेताः दयादाक्षिण्यसंयुताः ।
जितेन्द्रिया जितक्रोधा दम्भमात्सर्यवर्जिताः ॥ ३ ॥
अलोलुपाः सुशीलाश्च श्रद्धाभक्तिसमन्विताः ।
जिज्ञासवो(१) दृढाभ्यासा वेदशास्त्रार्थचिन्तकाः ॥ ४ ॥
तेषामपि महादेव तत्त्वमेतत्सुदुर्लभम् ।
किं पुनर्दानवांशानां परद्रोहरतात्मनां ॥ ५ ॥
नास्तिकानां च धूर्तानां कृतघ्नानां दुरात्मनाम् ।
वेदार्थदूषकानां च देहादिष्वर्थमानिनाम् ॥ ६ ॥
बैडालिकानामक्षपादशापविभ्रष्टचेतसां ।

(१) 'जितासवो' इ० पा०

सौगतानाञ्च बौद्धानां दिगम्बरमतस्पृशां ॥ ७ ॥
जैन्यमाध्यामिकानां(१) च चार्वाकाणां दुरात्मनां ।
वेदशास्त्रोज्झितानां च न मुक्तिः कापि विश्रुता ॥ ८ ॥
यस्त्वया वासनासर्गस्तृतीयः परिकीर्त्तितः ।
यदर्थमुपदेशोऽयं तत्वज्ञानस्य धूर्जटे ॥ ९ ॥
अहं तु श्रवणादेव कृतार्थास्मीति मे मतिः ।
प्राप्तिः सम्बन्धविषया नान्यथा तु कदाचन ॥ १० ॥
तस्मान्मे श्रवणानन्दो रोचतेतितरां प्रभो ।
अप्राप्यः श्रवणानन्दः पापग्रस्तैर्दुरात्मभिः ॥ ११ ॥
तस्मात्संश्रोतुमिच्छामि प्रवक्तुं यदिमन्यसे ।
न त्वया सदृशः कश्चित्करुणामृतवारिधिः ॥ १२ ॥
यत्त्वयोक्तं महादेव सर्वास्ताः कृष्णयोषितः ।
प्रहर्षं परमं जग्मुर्विषण्णां स्वामिनीं विना ॥ १३ ॥
तत्र मे संशयो जातो देवदेव जगत्पते ।
स्वामिनीखेदमूलं मे कथयस्व यथातथम् ॥ १४ ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि स्वामिनीखेदकारणं ।
नेत्रबन्धात्मिका लीला नीलाद्रिशिखरे कृता ॥ १५ ॥
तत्रेन्दिरानाम हित्वा सुन्दरीत्यवदात्प्रियः ।
तदिन्दिरावदद्वाक्यं सुन्दरी न भवाम्यहम् ॥ १६ ॥
नाम्नाहमिन्दिरा साक्षात्प्रियास्मि प्राणनायक ।
तदा कृष्णोवदद्वाक्यं शृण्वन्तीनां च योषिताम् ॥ १७ ॥
त्वयीन्दिरे सुन्दरीति भ्रमः सार्वदिको मम ।
ज्ञात्वापि त्वामिन्दिरेति क्षणादेव भ्रमाद्धिया ।
जल्पितं सुन्दरीत्येतन्मयोक्तमवधार्यताम् ॥ १८ ॥

(१) जैनमाध्यमिकानामित्यपि पाठः

इत्येतद्वचनं श्रुत्वा सुन्दरीगौरवात्मकम् ।
किञ्चित्कलुषचित्ताभूत्सखीमण्डलमध्यतः ॥ १९ ॥
सर्वास्वेतासु घटते समः स्नेहः प्रियस्य हि ।
सुन्दर्यामधिकं प्रेम हेतुना केन युज्यते ॥ २० ॥
सखीनां चापि सर्वासामहमेका वराङ्गना ।
मत्तः किमधिका जाता सौन्दर्यादिगुणादिभिः ॥ २१ ॥
स्वामिनीत्थं विमृष्य स्वे हृदये प्रेमपूरिते ।
तस्थौ समाहितमतिर्गूहयामास हृद्गतम् ॥ २२ ॥
ततो नीलाद्रिशिखरादागत्य मणिसद्मनि ।
प्रियाभिर्वेष्टितस्तत्र संस्थितः पुरुषोत्तमः ॥ २३ ॥
तत्र प्रियाभिः सम्प्रश्ने कृते दर्पणमादिशत् ।
आदाय दर्पणं सख्यस्तर्कयन्त्यो मुदं ययुः ॥ २४ ॥
स्वबुध्या सुन्दरी चापि सखीचित्तं समादधे ।
तत्समाहितमाकर्ण्य प्रसन्नः पुरुषोत्तमः ॥ २५ ॥
व्यक्तीकुर्वन्निजं प्रेम प्रोवाच वचनं तदा ।
अन्वर्थं साध्वि ते नाम सुन्दरीति मम प्रियम् ॥ २६ ॥
त्वं मे प्राणाधिका चासि सर्वस्वं मे त्वमेव हि ।
त्वदधीनोस्म्यहं साध्वि प्रेमपाशनियन्त्रितः ॥ २७ ॥
त्वयोक्तं यन्मयोक्तं तत्त्वद्दृष्टं तन्मयेक्षितम् ।
यत्त्वयाङ्गीकृतं साध्वि मयाप्यङ्गीकृतं हि तत् ॥ २८ ॥
आवयोरन्तरं नास्ति यः करोति स पातकी ।
इत्यादिवचनं श्रुत्वा सुन्दरीप्रेमसूचकम् ॥ २९ ॥
उत्तम्भयन्ती भ्रूवल्लीमीषत्कलुषितेक्षणा ।
वक्रितग्रीवमवदत्स्वामिनी स्फुरिताधरा ॥ ३० ॥
एषा सखीसहस्राणां सुन्दरी सुन्दरप्रिया ।
किं कार्यं विद्यतेऽस्माभिर्गुणरूपविपर्ययात् ॥ ३१ ॥

सुन्दर्येव प्रियैका चेदसुन्दर्यः कथं प्रियाः ।
भवन्ति सुन्दरस्यास्य मादृश्यो वामलोचनाः ॥ ३२ ॥
एवं वक्रोक्तिमाश्राव्य सखीनां पुरतः प्रियम् ।
अगमत्सहसोत्थाय निजकेलिगृहान्तरं ॥ ३३ ॥
सम्प्रेषयामास तदा कृष्णः कमललोचनः ।
प्रियामाननिरासार्थं दूतीं नाम्ना कलावतीं ॥ ३४ ॥
सन्धिकार्यैककुशलां स्मितपूर्वाभिभाषिणीं ।
सदुक्तिचतुरां धीरां युक्तिवादविचक्षणां ॥ ३५ ॥
कलावती ततो गत्वा दृष्ट्वा मानवतीं च तां ।
निजकेलिगृहे रम्ये स्थितामेकाकिनीं रहः ॥ ३६ ॥
नानामन्त्रप्रयोगैश्च विषवेगं यथा भिषक् ।
वाक्प्रयोगैरभिनवैर्मानवेगं न्यवारयत् ॥ ३७ ॥
प्राणादप्यधिके साध्वि किमेतदुचितं प्रिये ।
त्वं पत्युः प्राणसदृशी पतिः प्राणसमस्तव ॥ ३८ ॥
सखीवर्गसमस्तोपि इन्द्रियाणीव देहिनः ।
त्वमात्मेव प्रियस्यासि क्व मानावसरस्तव ॥ ३९ ॥
पूर्णानन्दे पूर्णकामे गिरः प्रियतमे सति ।
न वक्तुं परुषो योग्यो यथा धूर्त्ते शठे खले ॥ ४० ॥
बिम्बाधरस्फुरणतो भ्रुवोरुत्तम्भनादपि ।
लौहित्यादलकभित्तेश्च मानस्ते लक्ष्यते गुरुः ॥ ४१ ॥
अन्तस्तापोष्णनिश्वासो दहत्यधरपल्लवम् ।
मिथ्या ग्लापयसे चाङ्गलतिकां मानवह्निना ॥ ४२ ॥
दुःसहः क्षणविश्लेषः प्रियस्याननपङ्कजम् ।
अदृष्ट्वा यत्तु जीवेत तस्माच्च मरणं वरं ॥ ४३ ॥
सखीनां च सहस्राणि सन्ति यद्यप्यनेकशः ।
त्वय्येव रमते चित्तं कौमुद्यामिव शीतगोः ॥ ४४ ॥

मान्यो मानिनि नायकः प्रमदया वाक्यैः सुधासन्निभै-
र्वाच्यः कोमलपाणिपङ्कजपुटं बध्वाभिवन्द्यः सदा ।
तद्वाक्यं प्रियमप्रियं न हृदये धार्यं सतीनामयं,
स्वाचारः कथितो मया तमनु किं त्यक्त्वा वृथा तप्यसे॥४५॥
किं मानिनि बहूक्तेन कुरु मद्वचनं यथा ।
गाढमानपरिक्लिष्टं औदासिन्यं व्रजेत्प्रियः ॥ ४६ ॥
तस्मान्मद्वचने श्रद्धां कृत्वा तन्निकटं व्रज ।
विलम्बेन तु मानोयं परां कोटिं गमिष्यति ॥ ४७ ॥
प्रियस्त्वयि प्रयातायामकस्माज्जातकश्मलः ।
हास्यक्रीडारसावेशरहितो वर्त्ततेधुना ॥ ४८ ॥
त्वामाह्वायितुमेवाहं प्रेषितास्मि प्रियेण हि ।
आज्ञापयसि चेत्कान्ते तमेवेहानयाम्यहम् ॥ ४९ ॥

शिव उवाच ॥

श्रुत्वा कलावतीवाक्यं स्वामिनी मानमन्थरा ।
मानाद्रिशिखरात्किंचिदुत्तीर्णा वाक्यमब्रवीत् ॥ ५० ॥

स्वामिन्युवाच ॥

कलावति प्रिये मानो न कदापि मया कृतः ।
सुन्दरीगुणमाहात्म्यश्रवणं मे विषादकृत् ॥ ५१ ॥
मनुते चेत्प्रियस्त्वेकां सुन्दरीं गुणगुम्फितां ।
कलावति तदा कार्यं किमस्माभिः प्रियस्य हि ॥ ५२ ॥
इति मत्वाहमुत्थाय प्राप्तास्मि भवनं रहः ।
सुखी भवतु सुन्दर्या गुणवत्या गुणी प्रियः ॥ ५३ ॥

कलावत्युवाच ॥

नाग्रहः सति कर्त्तव्यस्त्वया सरलनायके ।
नायकाः सन्ति चत्वारः स्वलक्षणविलक्षिताः ॥ ५४ ॥
अनुकूलो दक्षिणश्च धृष्टश्च शठ एव च ।

एकपत्नीव्रतधरः अनुकूल उदीरितः ॥ ५५ ॥
अन्यस्यां बद्धचित्तोपि पूर्वस्यां स्नेहगौरवम् ।
न त्यजत्येव सततं स च दक्षिणनायकः ॥ ५६ ॥
त्वमेका मम सर्वस्वं नान्या मे कामिनी प्रिया ।
समक्षमेवं वदति परोक्षं योऽपराधकृद् ॥ ५७ ॥
ज्ञातापराधः शपथान् कुरुते गूढचेष्टितः ।
कुटिलं तं विजानीयान्नायकं शठसंज्ञकम् ॥ ५८ ॥
कृतदोषोपि निःशङ्कस्ताड्यमानो न लज्जते ।
प्रत्यक्षेष्वपि दोषेषु मिथ्यावाक् धृष्ट उच्यते ॥ ५९ ॥
एवं चतुर्विधेष्वेषु नायकेषु मनस्विनि ।
अनुकूलो दक्षिणश्च कीर्त्यतेऽसौ तव प्रियः ॥ ६० ॥
न शठोऽयं न धृष्टोऽयं किं मुधा खिद्यसे हृदि ।
इत्युक्ते विस्मयं प्राप्ता पुनः प्राह कलावतीम् ॥ ६१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे-
एकोनचत्वारिंशं पटलम् ॥ ३९ ॥

---

## चत्वारिंशं पटलम् ॥ ४० ॥

### स्वामिन्युवाच ॥

कलावति महाप्राज्ञे यत्त्वयोक्तं प्रियाश्रयम् ।
विरुद्धमिव मे भाति विरुद्धैर्लक्षणैः किल ॥ १ ॥
एकपत्नीव्रतधरोऽनुकूल इति कीर्त्तितः ।
दक्षिणो बहुपत्नीकः सर्वास्वविषमः स्मृतः ॥ २ ॥
एकस्मिन्नायके साध्वि कथमेतद्द्वयं भवेत् ।
अश्रद्धेयमिवाभाति यदि जानासि तद्वद ॥ ३ ॥

कलावत्युवाच ॥

शृणु स्वामिनि प्रवक्ष्यामि तव प्रश्नोत्तरं शुभम् ।
यस्य श्रवणमात्रेण स्वास्थ्यं तव भविष्यति ॥ ४ ॥
एकदा पुष्परागाद्रौ क्रीडनाय गतः प्रियः ।
आरुह्य शिविकां दिव्यां सुवर्णकलशोज्ज्वलां ॥ ५ ॥
उपर्युपरिविन्यस्तनानातोरणमण्डितां ।
हंसपारावतशुकपिकसारसनादितां ॥ ६ ॥
नवरत्नविचित्राभां कामगां च मनोजवाम् ।
शतयोजनविस्तीर्णां नानाक्रीडारसालयाम् ॥ ७ ॥
काञ्चने मध्यकलशे विन्यस्ते चोपरिस्थिते ।
कोटिचन्द्रप्रभागौररत्नेनोल्लासिताम्बराम् ॥ ८ ॥
तस्मिन्विमानप्रवरे संस्थितः पुरुषोत्तमः ।
द्विषट्सखीसहस्रेषु मध्ये चन्द्र इवोडुषु ॥ ९ ॥
मनोनुसारिगमनं विमानं कृष्णयोषिताम् ।
तीर्यगूर्ध्वमधश्चापि पुष्पाद्रिशिखरेऽपतत् ॥ १० ॥
तत्र (१)चन्द्रप्रभो नाम्ना ह्रदः पीयूषपूरितः ।
रचितस्वर्णसोपानः स्वर्णपङ्कजभूषितः ॥ ११ ॥
अस्ति दक्षिणतस्तस्य सरः परमसुन्दरम् ।
नाम्ना पञ्चनदं ख्यातं शतयोजनविस्तरम् ॥ १२ ॥
अधोधः कल्पितैः सप्तशतैर्मणिचितान्तरैः ।
जातरूपमयैर्दिव्यसोपानैर्बद्धमायतैः ॥ १३ ॥
वैदूर्यपद्मिनीखण्डैः पद्मरागसरोरुहैः ।
मरालकीलापतनैर्मण्डितं तत्र तत्र ह ॥ १४ ॥
तत्र या याः कृताः क्रीडा जलस्थलविभेदतः ।
त्वया स्वपातिना साकं तास्ताः स्मर भामिनि ॥ १५ ॥

(१) 'तत्र यश्च नदो नाम्ना नदः पीयूषपूरितः' इत्यपि पाठः

प्रियः सरसि सर्वाभिः सखीभिः परिवेष्टितः ।
समन्तान्निपतद्वर्षैराहतो यत्र विद्रुतः ॥ १६ ॥
आरुरोह ततस्तूर्णं सरोविश्रान्तिमण्डपम् ।
प्रतिजग्मुः प्रियाः सर्वास्तत्रोत्तीर्णसरोवराः ॥ १७ ॥
तावत्पपात सहसा पुनरेव सरोजले ।
उत्तीर्णगम्भीरजलः कुत्रचिद्विजनस्थले ॥ १८ ॥
अनेककुञ्जगहने प्रच्छन्नोऽभवदेकलः ।
मृगयन्त्यः प्रियाः सर्वा विचेरुस्तत्र तत्र च ॥ १९ ॥
अहं विचिन्वती तत्र गता गहनधामनि ।
विलीय संस्थितं कृष्णमद्राक्षमतिसुन्दरम् ॥ २० ॥
तत्र मामागतां सुभ्रु विलोक्य प्रहसन् प्रियः ।
नासाग्राहिततर्जन्या कौतुकी सन्न्यवारयत् ॥ २१ ॥

प्रिय उवाच ॥

कलावति कलाभिज्ञे मां विचिन्वन्ति योषितः ।
न पश्यन्ति परं चात्र विभ्रमन्ते यतस्ततः ॥ २२ ॥
त्वमप्यत्रैव सन्तिष्ठ मया सह कलावति ।
त्वया सह करिष्यामि लीलाखेलं रहः स्थितः ॥ २३ ॥
इत्युक्ताहं स्थिता तत्र बहुमानेन मानिता ।
तत्र नानाविधाः क्रीडाः प्रियश्चक्रे मया सह ॥ २४ ॥
तदा मया कृतः प्रश्नः प्रियमुद्दिश्य भामिनि ।
नायकाः सन्ति चत्वारस्तेषु वा को भवानिति ॥ २५ ॥
ततः प्रश्नोत्तरं प्राह कृष्णः कमललोचनः ।
तदहं ते प्रवक्ष्यामि यथाश्रुतमनिन्दिते ॥ २६ ॥

श्रीकृष्ण उवाच ॥

अनुकूलो दक्षिणश्च द्वैविध्यं मयि वर्त्तते ।
तदन्यत्र विरुद्धं स्यादविरुद्धं मयि स्फुटं ॥ २७ ॥

रसोहं मूर्त्तिमान् साक्षात् घनीभूतः कलावति ।
तस्याद्यभागं मां विद्धि द्वितीयं स्वामिनीं प्रियाम्(१) ॥२८॥
नावयोर्विद्यते भेदो भोक्तृभोग्यस्वरूपयोः ।
मदात्मा स्वामिनी प्रोक्ता स्वामिन्यात्माहमेव च ॥ २९ ॥
मदन्यः पुरुषो नास्ति न च स्त्री स्वामिनीपरा ।
नैकाकी रमते यस्मात् द्विधाभूतो रसस्ततः ॥ ३० ॥
पुंस्त्रीरूपविभागाभ्यां रसोहं विलसाम्यहम् ।
ब्रह्मानन्दमयीं साक्षान्न लक्ष्मीमपि संस्पृशेत् ॥ ३१ ॥
तेनाहमनुकूलोस्मि नायकः कमलेक्षणे ।
यथाहं दक्षिणश्चास्मि तत्प्रकारं वदामि ते ॥ ३२ ॥
यथानर्घस्य रत्नस्य परितः किरणावलिः ।
प्रसर्पति न सा भिन्ना मणितस्तु विचारतः ॥ ३३ ॥
स्वामिन्या एव ताः सख्यः कलारूपाः कलावति ।
न स्वामिन्यो विभेदोस्ति सखीनामणुमात्रतः ॥ ३४ ॥
अत एवासु सर्वासु द्रवीभूतो वसाम्यहं ।
बहिश्चापि घनीभूतस्ताभिः क्रीडारतोस्म्यहम् ॥ ३५ ॥
क्रीडमानोपि सर्वाभिः स्वामिनीप्रेमविह्वलः ।
अतोहं दक्षिणश्चास्मि नायको हि कलावति ॥ ३६ ॥
अत्रापि नैव विहतमानुकूल्यं विचारतः ।
भेदद्वयोपचारो हि कदाचिन्मयि वर्तते ॥ ३७ ॥
इति मानिनि यत्पृष्टं त्वयैतत्कथितं मया ।
प्रियेण कथितं साक्षात्स्वमुखेन यथातथा ॥ ३८ ॥
प्रश्नोत्तरावसाने च विचिन्वन्त्यश्च ताः प्रिया ।
घनकुञ्जान्तरे लीनं दृष्ट्वाजग्मुस्त्वरान्विताः ॥ ३९ ॥
ततः प्रियेण सहिता आगतास्तव सन्निधिम् ।

---

(१) 'पराम्' इ० डा०

एतत्सर्वं तु जानासि विशेषस्तु मनोदितः ॥ ४० ॥
तस्मान्मानिनि मानस्ते प्रियेण सह नोचितः ।
आनन्दोपि निरानन्दः प्रतिभाति विना त्वया ॥ ४१ ॥
तस्मादुत्तिष्ठ तत्पार्श्वमलंकुरु मनस्विनि ।
त्वया विरहितं चण्डि प्रियं नो वीक्षितुं क्षमाः ॥ ४२ ॥
इति पाण्डित्यचातुर्यं कलावत्या प्रयोजितं ।
निशम्य हृष्टवदना वाक्यं चेदमुवाच ह ॥ ४३ ॥

स्वामिन्युवाच ॥

कलावति महाप्राज्ञे मानस्ते वचसा गतः ।
तथापि(१) मानिनीनां च समयान् वेत्सि हृद्गतान् ॥ ४४ ॥
आगच्छामि यदि स्वैरं गौरवं मेऽपगच्छति ।
तस्मात्प्रियः करे धृत्वा सुखं नयतु मामिति ॥ ४५ ॥
इत्थं तया निगदिता सखी प्राप्ता प्रियान्तिकम् ।
प्रहृष्टवदनां दृष्ट्वा प्रियोपि मुमुदे भृशम् ॥ ४६ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवगौरीसंवादे
चत्वारिंशं पटलम् ॥ ४० ॥

## एकचत्वारिंशं पटलम् ॥ ४१ ॥

पार्वत्युवाच ॥

कलावती यदा कान्तदूती प्राप्ता प्रियान्तिकम् ।
ततः किमभवत्तत्र तन्मे ब्रूहि महेश्वर ॥ १ ॥

शिव उवाच ॥

शृणु देवेशि वक्ष्यामि कथां दिव्यां रसाश्रयां ।
यस्याः श्रवणजानन्दो न मुक्तावपि विद्यते ॥ २ ॥

(१) 'भामिनीनांचेत्यपि पाठः'

प्रहृष्टवदनाम्भोजां दृष्ट्वा दूतीं कलावतीं ।
स्मयन्निव प्रियः प्राह शृण्वतीनां च योषिताम् ॥ ३ ॥
कलावति कलाभिज्ञे किमुक्तं प्रियया तया ।
पिपासोरिव पीयूषं तद्वचस्तृप्तये मम ॥ ४ ॥
तत्सुधानिधिपीयूषप्रणाली त्वं कलावति ।
सखीलतासमाश्लिष्टकल्पद्रुमं निषिञ्च माम् ॥ ५ ॥
॥ कलावत्युवाच ॥
प्राणनाथ प्रिया तेऽद्य मानमास्थाय संस्थिता ।
गत्वा मया बहुविधैर्वाक्यैरुद्बोधिता मुहुः ॥ ६ ॥
मानाद्रिशिखरारूढा मां कथञ्चिदुवाच ह ।
कलावति प्रिये मानो न कदापि मया कृतः ॥ ७ ॥
सुन्दरीगुणमाहात्म्यश्रवणं मे विषादकृत् ।
मनुते चेत्प्रियस्त्वेकां सुन्दरीं गुणगह्वरां ॥ ८ ॥
अस्माभिर्गुणहीनाभिः कार्यं तस्य न विद्यते ।
इत्यादिविविधैर्वाक्यैर्वदन्ती सा मनस्विनी ॥ ९ ॥
युक्तियुक्तैश्च वचनैस्तोषिता सा मयापि हि ।
त्यक्तरोषा प्रियं च त्वां हस्तग्राहमपेक्षते ॥ १० ॥
स्त्रीणां जातिस्वभावोयं तस्मात्कुरु तथा प्रभो ।
कलावतीवचस्तथ्यं मन्यमानः परात्परः ।
आत्मारामोऽपि तत्प्रीत्यै आजगाम तदन्तिकम् ॥ ११ ॥
श्रीकृष्ण उवाच ।
नोचितस्ते प्रिये साध्वि मानो मयि निरागसि ।
त्वदात्मकत्वात्सख्यो मे सर्वाः प्रियतमा अपि ॥ १२ ॥
लहर्यः सलिलस्येव यथाग्नेर्विस्फुलिङ्गकाः ।
पृथक् न सन्ति ते तद्वत्सख्यो भिन्ना न ते क्वचित् ॥ १३ ॥
तासु सर्वासु यत्प्रेम मदीयं परिवर्त्तते ।

अनेकधापि विलसत् त्वय्येव पर्यवस्यति ॥ १४ ॥
इति सत्येन वचसा प्रार्थयामि मुहुर्मुहुः ।
स्वसङ्केतं समायाहीत्युक्त्वा जग्राह तत्करम् ॥ १५ ॥
गृहीते स्वकरे पत्या भावपूरितमानसा ।
तीर्यक्कटाक्षविशिखं सन्दधाना स्मिताधरा ॥ १६ ॥
चुम्बितालिङ्गिता प्रेम्णा प्रियेणोत्थाप्य सत्वरं ।
प्रियांसारोपितभुजा स्वीयांसारूढतद्भुजा ॥ १७ ॥
स्वसङ्केतं समागत्य यथापूर्वं निषेदतुः ।
मुदमापुः परां सख्यो दृष्ट्वा तं प्रियया युतम् ॥ १८ ॥
हासक्रीडावसाने तां प्रियः प्राह हसन्निव ।
प्रिये विज्ञाप्तुमिच्छामि यदि ते श्रवणेस्पृहा ॥ १९ ॥
अवाच्यं तत्तु जानीहि तथापि कथयामि ते ।
कदाचिन्मोहजलधौ यदा मग्ना भविष्यथ ॥ २० ॥
तदेयं सुन्दरी साक्षाद्भवतीरुद्धरिष्यति ।
यदा यदा महामोहजलधौ परिमज्जथ ।
तदा तदोद्धरित्रीयं भवतीर्नात्र संशयः ॥ २१ ॥
यदेनामवलम्ब्यैव सख्यः सर्वा भ्रमार्णवं ।
तरिष्यन्तीति विज्ञातवतो मे सुन्दरी प्रिया ॥ २२ ॥
सुन्दर्य्यामधिकः(१) प्रेम हेतुस्ते विनिरूपितः ।
इति प्रियवचः श्लक्ष्णं श्रुत्वा सर्वा विसिस्मिरे ॥ २३ ॥
तां सर्वाः पूजयामासुः स्वामिन्याद्याश्च सुन्दरीं ।
मनोज्ञभाषणपरैर्वचोभिः कुसुमैरिव ॥ २४ ॥
स्वभावशीतलै रम्यैः स्वभावैश्चन्दनैरिव ।
प्रसन्नाग्निविनिर्दग्धहृत्कालुष्यैश्च धूपकैः ॥ २५ ॥
मानांधतमसध्वंसप्रसादैरिवदीपकैः ।

(१) 'अधिकं प्रेम' इ० पा०

ततो बहुतरे काले यदा जाता सुमङ्गला ॥ २६ ॥
(१)तदाविष्टः सखीवर्गो ययाचे प्रियमीप्सितम् ।
दुःखाति दुःखमिति वः प्रार्थितं चेति बोधिताः ।
न शिक्षावचनं चक्रुरिच्छाशक्तिविमोहिताः ॥ २७ ॥
वियोगदलमाश्रित्य यदा क्रीडति वै रसः ।
तद्रसानुकूलगतिर्विमोहयति सुमङ्गला(२) ॥ २८ ॥
तदा प्रियः सखीः प्राह शृणुध्वं मम भाषितम् ।
निवार्यमाणा हि मया दुरन्ताच्च मनोरथात् ॥ २९ ॥
न निवृताश्च भो सख्यो यूयमाग्रहतत्पराः(३) ।
नानादुःखमयीं बाललीलां द्रक्ष्यथ मा चिरम् ॥ ३० ॥
विस्मरिष्यथ मां तत्र किमन्यदधिकं ब्रुवे ।
तथापि सुन्दरी ह्येषा तारयिष्यति तत्तमः ॥ ३१ ॥
मया प्रबोधिता सम्यक् कथयित्वा विनिर्णयम् ।
इति प्रियवचः श्रुत्वा सर्वाः सख्यो मुदान्विताः ॥ ३२ ॥
प्रसन्नानन्दजलधौ निमग्नाः शक्तिमोहिताः ।
फले विलम्बमाज्ञाय पुनस्ताः प्रार्थनोत्सुकाः ।
(४)यदा तदा प्रियश्चक्रे तन्मनोरथपूरणम् ॥ ३३ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवगौरिसंवादे एकचत्वारिंशं पटलम् ॥ ४१ ॥

---

(१) अक्षरान्तःस्थिताक्षरातीतप्रतिबिम्बभूतकेवलधामविहारिणीनामन्तरावृणोत्येषा सुमङ्गला, अक्षरहृदाकाशे तत्सत्त्वात् । ब्रह्मानन्दविहारिणीदर्शनलालसमानसस्याक्षरब्रह्मणोपि निजधामान्तर्दुष्प्रवेशत्वात्कुत एतस्यास्तत्र प्रवृत्तिरितिब्रह्मानन्दरसज्ञचरणाः किलाज्ञापयन्ति ।

(२) 'तत्कालानुकूलगतिर्विमोहयति सुमङ्गला' इ० पाठः

(३) आग्रहमेदुराः इ० पा०

(४) यदास्माकम्प्रियं चेच्छ तदा पूरय चेप्सितम् इत्यपि पा०

# द्विचत्वारिंशं पटलम् ॥ ४२ ॥

अतः परं प्रवक्ष्यामि प्रस्तुतं शृणु सुन्दरि ।
यच्छ्रुत्वा विविधा लीला हृद्यारूढा भवेत्प्रिये ॥ १ ॥
सन्तोषानन्दभूम्योस्तु सन्धौ पुष्पाद्रिरुत्तमः ।
योजनायुतमानेन नानाश्चर्यमयो महान् ॥ २ ॥
नानाधातुमयः श्रीमान् नानामणिविभूषितः ।
त्रीण्यस्याद्रिप्रधानस्य शिखराणि द्युमन्ति च ॥ ३ ॥
पावमानं महारम्यं विभ्राजमिति तद्विदा ।
पावमाने तु शिखरे नित्यं सङ्क्रीडते हरिः ॥ ४ ॥
नित्यं सङ्क्रीडतोरेव स्वामिनीकृष्णयोरपि ।
श्रमघर्मजलस्रावो महानासीच्च देहतः ॥ ५ ॥
तद्वारिपूर्णं यत्रास्ते सरः परमसुन्दरं ।
शतयोजनमानेन रत्नसोपानभास्वरम् ॥ ६ ॥
भ्रमद्भ्रमरसंशोभि सरोजवनसङ्कुलम् ।
पक्षिणां स्वर्णपक्षाणां कुलैर्मण्डितसैकतम् ॥ ७ ॥
तस्मात्प्रवृत्ता सरसो नाम्ना सा यमुना नदी ।
अगाधतोया गम्भीरा बहुलावर्तभीषणा ॥ ८ ॥
पावमानात्पतन्ती सा नदी विरजमस्तके ।
शतैकयोजनोत्तुङ्गे धाराध्वनितगह्वरे ॥ ९ ॥
सन्तोषभूमिकां प्लाव्य किञ्चिद्वैराग्यभूमिकां ।
चिदानन्दमयीं भूमिं किञ्चिदानन्दभूमिकां ॥ १० ॥
रतिभूमिं प्लावयन्ती याति भूमिं प्रकाशिकां ।
प्रकाशानन्दभूम्योस्तु ह्यन्तराले महासरः ॥ ११ ॥
सपादलक्षयोजनमानेन परिविस्तृतम् ।
समुद्र इव गम्भीरं रत्नसोपानसुन्दरम् ॥ १२ ॥
पूरयन्ती पुनस्तस्मान्नियाति ज्ञानभूमिकां ।

मुक्तिभूमिं समाप्लाव्य याति प्रेमात्मिकां भुवम् ॥ १३ ॥
प्रेमात्मिकां भुवं प्लाव्य सुधाब्धौ विलयङ्गता ।
रसस्य रममाणस्य दलाभ्यां गिरिनन्दिनि ॥ १४ ॥
तत्स्यन्दमात्रां यमुनां चिन्तयेत्तदभेदतः ॥
यमुनानिलसंसर्गसमुत्थानन्दसागरः ।
कूटस्थं गणितानन्दं पूरयत्येव सन्ततम् ॥ १५ ॥
परब्रह्म रसः कृष्णः तस्यापि द्रवरूपिणीं ।
यमुनां केन तुलयेद्रसानन्दजलात्मिकाम् ॥ १६ ॥
गोमेदखण्डे यमुनाप्रवाहो योजनात्मकः ।
तत्र पीतमिव स्वच्छं जलं पीयूषसन्निभम् ॥ १७ ॥
उभयोः कूलयोस्तस्याः कुट्टिमानि बृहन्ति च ।
नानारत्नमयस्तम्भमण्डपानि द्युमन्ति च ॥ १८ ॥
गुञ्जद्भ्रमरपुष्पालिलताकुञ्जावृतानि च ।
चतुर्लक्षाणि देवेशि (१)महस्तोमोज्ज्वलानि च ॥ १९ ॥
उपर्यधः स्थितास्तेषां पक्षिणश्चित्रपक्षकाः ।
कुञ्जसञ्चारिणः केचित् केचिन्मण्डपसंस्थिताः ॥ २० ॥
कुट्टिमान्तःस्थिताः केचिद्गायन्तो मधुरस्वराः ।
वज्रखण्डप्रवेशोऽस्यादशयोजनमानतः ॥ २१ ॥
पयः फेननिभं तत्र दृश्यते सलिलं शिवम् ।
तावानेव प्रवाहोऽस्यास्तटयोः कुट्टिमानि च ॥ २२ ॥
स्वर्णभक्तिविचित्राणि रत्नस्वस्तिकवन्ति च ।
चतुर्द्वाराणि सर्वाणि (२) मुक्तातोरणवन्ति च ॥ २३ ॥
मणिमण्डपयुक्तानि स्वर्णस्तम्भोज्ज्वलानि च ।
वज्रमुक्ताप्रवालाढ्यविष्टरास्तरितानि हि ॥ २४ ॥

---

(१) 'महान्त्युज्ज्वलानि च' इ० पा०
(२) चतुर्द्वाराणि मुक्तानां नानातोरणवन्ति च इ० पा०

रसानन्दात्मनां यत्र पक्षिणां कलकूजितैः ।
श्रवणानन्दसन्दोहं वर्षद्भिः सुखमीयते ॥ २५ ॥
पुष्परागमये खण्डे चिदानन्दात्मभूमिके ।
श्यामश्वेतजला भाति प्रविष्टा यमुना नदी ॥ २६ ॥
शतयोजनमानेन विशालस्तत्प्रवाहकः ।
स्वर्णमाणिक्यसोपाना फुल्लस्वर्णाम्बुजाकुला ॥ २७ ॥
पतत्पद्मरजः पुञ्जपिञ्जरीकृतसज्जला ।
हंसकारण्डवानेककोलाहलतटोत्सवा ॥ २८ ॥
अन्तः स्थारत्नसिकताचाकचक्यलसज्जला ।
एकेनोनं च(१) शतकं योजनानां प्रमाणतः ॥ २९ ॥
चिदानन्दमहीव्याप्ता पादेनानन्दभूमिका ।
आनन्दभूमिसञ्चारियमुनातटसीमनि ॥ ३० ॥
तीर्थसप्तकमीशानि स्मरेल्लीलारसाश्रयं ।
जलावतारमार्गाणां (२)तटसीमवनानि तु ॥ ३१ ॥
वनं चान्द्रमसं नाम द्वितीयं नीलकाननम् ।
तृतीयं पुष्पदन्ताख्यं तूर्यमानन्दकाननम् ॥ ३२ ॥
पञ्चमं हेमकूटाख्यं षष्ठं तत्तारकूटकम् ।
गारुडं नाम विख्यातं सप्तमं वनमुच्यते ॥ ३३ ॥
वने चान्द्रमसे देवि नाम्ना चान्द्रमसो महान् ।
न्यग्रोधराज आभाति वैदूर्यविलसच्छदः ॥ ३४ ॥
चक्षुष्मत्पद्मरागोऽथ फलस्फारप्रभाचितः ।
स्वर्णाङ्कुरजटाप्रान्तलम्बिनमौक्तिकगुच्छकः ॥ ३५ ॥
दिव्यपक्षिकृतावासशाखान्दोलनविभ्रमैः ।
दर्शनादन्तरात्मानं चमत्कुर्वन्नटो यथा ॥ ३६ ॥

(१) एकेन न्यूनंशतकं इ० पा०
(२) तटसीम्नि इ० पा०

फलापह्नुतचञ्चुश्रीपत्रापह्नुतपत्रकाः ।
महाराजेति कृष्णेति वाचा च दृष्टव्यक्तिकाः ॥ ३७ ॥
माध्वीकश्रवणां दिव्यां नानाकलपदांचितां ।
गिरं च कीरनिवहाः संसृजन्ति कुतूहलम् ॥ ३८ ॥
यस्याधस्तात्समाभाति शशिकान्तमणिस्थली ।
अखण्डचन्द्रकान्तोद्यत्प्रभापुञ्जसुपेशला ॥ ३९ ॥
यद्दीर्घविटपालम्बमानान्दोलनविभ्रमाः ।
सख्यः परस्परं यस्यां प्रतिबिम्बभुजो भुवि ॥ ४० ॥
यदालवालवद्भाति माणिक्यवरकुट्टिमः ।
चतुर्भिः काञ्चनस्तम्भैर्मुक्तावैदूर्यभूषितैः ॥ ४१ ॥
उपर्यर्कमणिक्लृप्तमण्डपच्छाययाविलः(१) ।
विष्वग्विततविटपाक्रान्तप्रान्तमहीतलः ॥ ४२ ॥
न्यग्रोधमूलसं(२)सृतकल्पद्रुमलतामधः ।
दिव्यपल्लवपुष्पाढ्यो (३)रत्नसिंहासनोत्तमे ॥ ४३ ॥
क्रीडार्थमागतस्तत्र तिष्ठते पुरुषोत्तमः ।
योजनायुतमाणिक्यकुट्टिमस्थाः सखीगणाः ॥ ४४ ॥
हसन्तो हासयन्तश्च दिव्यक्रीडाकुतूहलैः ।
मञ्जुस्वरेण गायन्ति प्रियस्यैव यशोऽमलम् ॥ ४५ ॥
तिष्ठन्त्यत्र महोद्याने तत्स्थानपरिचारिकाः ।
चतुर्विंशतिर्देवेशि सहस्राणीति संख्यया ॥ ४६ ॥
तासां सौधानि शुभ्राणि मणिद्वाराणि पार्वति ।
प्रवालदेहलीकानि विष्वक् न्यग्रोधमण्डलम् ॥ ४७ ॥
द्विपङ्क्तिभाञ्जि रम्याणि सप्तभौमानि सुन्दरि ।

(१) 'छाययान्वितः' इ० पा०
(२) 'संसृत' इ० पा०
(३) 'पुष्पाढ्यां' इ० पा०

तावन्त्येव विराजन्ते वीथीयुक्तानि मध्यतः ॥ ४८ ॥
अन्योन्यपङ्क्तिस्थितहर्म्यलम्बदोलासमारूढसखीसमूहः(१) ।
अन्योन्यसङ्घट्टन(२)पाणिपालीकरः पुनः श्लेषमुपैति गायन् ॥४९॥
हेमप्राकारकलितमिदं चान्द्रमसं वनम् ।
यमुनाभिमुखे यस्य द्वारमाभाति काञ्चनम् ॥ ५० ॥
द्वारापसव्यसव्यस्थौ कुट्टिमौ रत्नकाञ्चनौ ।
महाचतुःस्तम्भलसन्मण्डपाडम्बरस्पृशौ ॥ ५१ ॥
ततः सोपानमार्गेण गन्तव्या यमुना नदी ।
सोपानानि सहस्रे द्वे द्वे शते च दशोत्तरे ॥ ५२ ॥
पद्मरागार्कवैदूर्यप्रवालशशिगारुडैः ।
मुक्तेन्द्रनीलगोमेदपुष्पवज्रहिरण्मयैः ॥ ५३ ॥
पुनः पुनः क्रमादेतैः सोपानैः प्रान्तमण्डपैः ।
अधोधः कल्पितैः सम्यक् गम्यते यमुना नदी ॥ ५४ ॥
मणिकाञ्चनसन्नद्धा यत्र नौकाः सुपेशलाः ।
वायूद्धूतध्वजपटाः विभ्रमन्ते यतस्ततः ॥ ५५ ॥
अनेकपोतसंस्थासु सखीषु पुरुषोत्तमः ।
मध्यपोतस्थितः सम्यक् राजते तिसृभिर्युतः ॥ ५६ ॥
स्वामिनी वामभागस्था दाडिमीपुष्पभांशुकाः ।
इन्दिरा सुन्दरी चोभे पुरः सव्यापसव्ययोः ॥ ५७ ॥
इन्दिरा कृष्णपक्षीया सुन्दरी स्वामिनी परा ।
हास्य केलिविहारेषु विषादेषु रसात्मसु ॥ ५८ ॥
तेनेयमिन्दिरा साक्षात्स्वामिनीप्राणवल्लभा ।
सुन्दरी चापि कृष्णस्य प्राणवल्लभा हि सा ॥ ५९ ॥

---

(१) सहस्रः ।
(२) 'काकतालीकरः' इ० पा०

एवं क्रीडारसानन्दसखीभिः पुरुषोत्तमः ।
वने चान्द्रमसे कृष्णः सेवते च यदृच्छया ॥ ६० ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वतीसंवादे द्विचत्वारिंशं पटलम् ॥ ४२ ॥

---

## त्रिचत्वारिंशं पटलम् ।

॥ शिव उवाच ॥

नीलोद्यानेऽपि देवेशि कदाचित्पुरुषोत्तमः ।
सखीसहस्रैरागत्य क्रीडते स्वामिनीमुखैः ॥ १ ॥
अखण्डमाणिक्यशिलाकल्पिता नीलभूमिका ।
अन्तरान्तरितामुक्तावज्रवैदूर्यविद्रुमैः ॥ २ ॥
यत्र वाप्यः सुधापूर्णाः काञ्चनोत्पलमालिनः(१) ।
प्रवालपुष्पाभरणा लतोल्लासितमण्डपाः ॥ ३ ॥
उपर्युपरिविन्यस्तभूमिस्थपरिचारिकाः ।
वीणामृदङ्गघोषेण घोषयन्त्यो वनस्थलीम् ॥ ४ ॥
(२)रुचिरांशुतडिद्दीप्तरत्नभूषणभूषिताः ।
नानारसकलाभिज्ञा यशो गायन्ति संहताः ॥ ५ ॥
चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः ।
द्विपङ्क्त्या परितस्तासां मन्दिराण्युज्वलन्ति च ॥ ६ ॥
तन्मध्यभूमौ देवेशि क्रीडासौधमनुत्तमं ।
कोटिचन्द्रप्रभापुञ्जधिक्कारिमणिकल्पितम् ॥ ७ ॥
चतुर्दिक्षु लसत्स्वर्णस्तम्भराजिविराजितम् ।
प्रतिस्तम्भं प्रविन्यस्तपुत्रिकाभिरलङ्कृतम् ॥ ८ ॥

---

(१) 'मालिनी' इ० पा०
(२) 'चीरांशुतडिदुद्दीत' इ० पा०

मुक्ताप्रवालरचितंकपाटद्वारतोरणम् ।
हंसपारावतशुकैर्भिचिशङ्कुकृतास्पदैः ॥ ९ ॥
अन्योन्यं वादिभिरिव क्षिप्ता वाचो जिगीषया ।
मनः श्रोत्रहरा यत्रानन्दयन्ति सखीगणान् ॥ १० ॥
सौधाङ्गणचतुर्दिक्षु कुट्टिमानि बृहन्ति च ।
मण्डपाट्टालयुक्तानि मणिस्तम्भशतानि च ॥ ११ ॥
दीर्घिकास्तेषु दिव्यन्ति सृजन्त्यः सलिलोन्नतिम् ।
कल्पद्रुमकुसुमामोदसुवासितजलाः शिवाः ॥ १२ ॥
नर्त्तक्यो यत्र नृत्यन्ति नाट्यविद्याविशारदाः ।
यन्नूपुररणत्काराः श्रूयन्ते कुञ्जभूमिषु ॥ १३ ॥
कुट्टिमनिकटारूढाश्चत्वारो जम्बुपादपाः(१) ।
शाखायां शतविस्ताराः काननस्येव केतवः ॥ १४ ॥
शाखाबद्धसुवर्णशृङ्खलसद्दोलाधिरूढाङ्गना
हस्ताहस्तमृदङ्गधीरनिनदैरानन्दयन्त्यः शिखीन् ।
विद्युत्पुञ्जनिभांशुकांशुपरिधानापादयन्त्यश्चलान् ,
यातायातविहारविभ्रमलसत्स्मेराननाक्षिभृतः ॥ १५ ॥
इन्द्रनीलमणिभ्राजत्प्राकारपरिवेष्टिते ।
नीलोद्याने महारम्ये क्रीडते पुरुषोत्तमः ॥ १६ ॥
यमुनाभिमुखे यस्य महाद्वारं विराजते ।
चन्द्रकान्तशिलाक्लृप्तकपाटं रत्नतोरणम् ॥ १७ ॥
द्वारस्य दक्षिणे वामे काञ्चनौ कुटिमौ समौ ।
चतुर्द्वारमणिस्तम्भवज्रकल्पितमण्डपौ ॥ १८ ॥
ततः सोपानमार्गेण गन्तव्या यमुना नदी ।

(१) चतुर्दशश्लोकोऽयं 'कुट्टिमनिकटनिरूढाश्चत्वारो जम्बुपादपप्रवराः । शाखाशतविचिन्तवन्तः कितव इवेह काननस्योत्केः ॥१४॥ इत्थमार्याछन्दसोपनिबद्ध प्राचीन पुस्तकेषूपलभ्यते ।ः

सोपानानि सहस्रे द्वे शते च दशोत्तरे ॥ १९ ॥
अस्मिन् सोपानमार्गेऽपि वामदक्षिणयोः स्थिताः ।
रत्नमण्डपशोभाढ्याः कुट्टिमाः सन्त्यनेकशः ॥ २० ॥
कदाचिज्जलखेलान्ते तिष्ठन्त्यत्र सखीगणाः ।
चतुरस्रा विशालास्ति तत्रोच्चैर्मणिवेदिका ॥ २१ ॥
वेदिकायां विशालायां कुट्टिमो मणिभूषितः ।
स्वर्णस्तम्भचतुर्द्वारो मुक्तामण्डितमण्डपः ॥ २२ ॥
वेदिकायां समुद्भूते द्वे दले स्वर्णपत्रके ।
पार्श्वयोः पद्मरागीयपुष्पप्रचयभूषिते ॥ २३ ॥
मण्डपोपरि तच्छाखाः प्रसृताः कुसुमाकुलाः ।
काञ्चन प्रसृतास्तस्य मध्यदेशे सुशोभने ॥ २४ ॥
तत्र सिंहासनं देवि कोटिचन्द्रांशुनिर्मलम् ।
इन्दिरासुन्दरीभ्यां तु पार्श्वयोः समधिष्ठितम् ॥ २५ ॥
कदाचित्तत्र भगवान् कृष्णः कमललोचनः ।
तिष्ठते क्रीडते ताभिः सखीभिः कृतकौतुकः ॥ २६ ॥
स्मरेदथो वनं दिव्यं पुष्पदन्ताख्यमद्भुतम् ।
वैदूर्यवीरुधां यत्र राजयो भान्ति पेशलाः ॥ २७ ॥
लतापरिमलोद्गारलोभमुग्धीकृताशयाः ।
इतस्ततोऽनुधावन्ति भृङ्गा मायार्दिता यथा ॥ २८ ॥
पुष्पदन्ताभिधो यत्र दाडिमीतरुरुल्लसन् ।
माणिक्यकुसुमश्रीको वैदूर्य(१)रुचिरच्छदः ॥ २९ ॥
विशुद्धस्फाटिकमयी यत्र भूमिर्विराजते ।
अरजस्कामृतस्यन्दा प्रतिबिम्बितभूरुहा ॥ ३० ॥
वैदूर्यपत्रद्युतिपुञ्जपूरितं माणिक्यपुष्पप्रभयानुरञ्जितम् ।
वनं विशन्त्यो हि मयूरवल्लभा नृत्यन्ति विद्युद्धनशङ्किताशयाः ॥३१॥

(१) अत्र सर्वत्र वैडूर्य शब्द एवोपलभ्यते नतु वैदूर्य इति ।

विदीर्णसद्दाडिमबीजसंहतीर्निरीक्षमाणाः प्रबलानुरागिणीः।
स्वदन्तसादृश्यमुपैति वा न वाभ्युपेतुमादर्शधरा भवन्ति ॥३२॥

योजनायुतमूर्द्धन्यः (१)शाखाक्रान्तमहीतलः।
फलपल्लवपुष्पश्रीभारभुग्नमहाभुजः ॥ ३३ ॥
अनेकपक्षिसङ्घातगीतश्रवणनन्दनः।
यदधः कुट्टिमवरो राजते स्वर्णनिर्मितः ॥ ३४ ॥
प्रवालस्तम्भशोभाढ्यरत्नमण्डपमण्डितः।
पुष्पदन्तः सखीवृन्दावतंसीकृतपुष्पकः ॥ ३५ ॥
आधिपत्ये वनस्यास्य नियुक्त इव राजते।
स्वर्णकुट्टिममध्ये तु वैदूर्यमणिनिर्मितम् ॥ ३६ ॥
महासिंहासनं देवि यत्र कृष्णोधितिष्ठति।
नीलाम्बर इवाभाति शुभ्रवस्त्रधरोपि यत् ॥ ३७ ॥
सर्वाः सख्योपि वैदूर्यसिंहासनपरम्पराम्।
जुषाणाः परितो भान्ति नीलाम्बरधरा इव ॥ ३८ ॥

अतीव भूषाम्बरवैपरीत्यं निरीक्ष्यमाणाः प्रहसन्ति सख्यः।
स्वानां प्रियस्यापि परस्परं ताः प्रदत्ततालीकरपङ्कजेषु ॥ ३९ ॥

चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः।
परिचर्यापरास्तत्र वसन्ते कृष्णयोषिताम् ॥ ४० ॥
दिव्यपुष्पाम्बराकल्पैर्दिव्यगन्धानुलेपनैः।
दिव्यानन्दरसैस्तत्र सेवन्ते परिचारिकाः ॥ ४१ ॥
नानाक्रीडारसासक्ता यदा सख्यः प्रियेण हि।
तदा काचिन्मृदङ्गेण काचित्तन्त्रीरवेण च ॥ ४२ ॥
काश्चिन्मधुरवीणाभिर्नृत्यगीतादिभिश्च काः।
परितः स्वगृहारूढा दूरतस्तोषयन्ति ताः ॥ ४३ ॥
पूर्वोक्तेन प्रकारेण तासां सौधानि पार्वति।

---

(१) योजनायतमूर्धन्यशाखा क्रान्तमहीतलः इ० पा०

द्विपङ्क्त्यापरितो भान्ति वीथीयुक्तानि मध्यतः ॥ ४४ ॥
वैदूर्यरत्नविलसत्प्राकारपरिवेष्टिते ।
पुष्पदन्तमहोद्याने क्रीडते पुरुषोत्तमः ॥ ४५ ॥
यमुनाभिमुखे यस्य राजते गोपुरं महत्त ।
पद्मरागमणिक्लृप्तकपाटद्वारतोरणम् ॥ ४६ ॥
ततः सोपानमार्गेण गन्तव्या यमुना नदी ।
सोपानानि च तावन्ति संख्यावर्णविभेदतः ॥ ४७ ॥
द्वारस्य दक्षिणे वामे कुट्टिमौ सुमनोहरौ ।
स्तम्भमण्डपसंयुक्तौ मुक्तामाणिक्यतोरणौ ॥ ४८ ॥
जलक्रीडावसाने तु कृष्णः स्वसखीवृतः ।
मुहूर्त्तं कुट्टिमे स्थित्वा ततो याति निजालयम् ॥ ४९ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवगौरीसंवादे
त्रिचत्वारिंशं पटलम् ॥ ४३ ॥

---

## चतुश्चत्वारिंशं पटलम् ॥ ४४ ॥

शिव उवाच ॥

स्मरेदथो महानन्दवनं सर्वर्तुसेवितम् ।
नानापुष्पलताकुञ्जपुञ्जशोभाविराजितम् ॥ १ ॥
यत्र भूः काञ्चनी दिव्या नवरत्नविचित्रिता ।
सार्द्धैकयोजनायामविस्तारा मध्यवेदिका ॥ २ ॥
चतुरस्रा दिव्यरत्ना प्रभापुञ्जारुणान्तरा ।
तन्मध्ये कुट्टिमो देवि योजनार्द्धप्रमाणतः ॥ ३ ॥
रजतस्वर्णवज्रेन्दुमुक्ताविद्रुमगारुडैः ।
वैदूर्यैरिन्द्रनीलैश्च पद्मरागार्कगोमदैः ॥ ४ ॥
समन्ततः परिक्लृप्तस्तम्भराजिविराजितः ।

दक्षिणोत्तरमध्यस्थसूत्रमाकर्ष्य पार्वति ।
पूर्वगर्भगतं कुर्यादधः पश्चिमगर्भगम् ॥ ५ ॥
इन्द्रनीलप्रभालिप्तमेवं कोणचतुष्टयम् ।
कल्पद्रुमलताकोणे चतुष्कोपरिराजते ॥ ६ ॥
शतयोजनसंसर्पिदिव्यसौरभमेदुरा ।
दिव्यप्रवालकुसुमामोदमोहितषट्पदा ॥ ७ ॥
मन्दमारुतसंसर्गचलत्कुसुमपल्लवा ।
पद्मरागमयस्तम्भौ पूर्वद्वारे नियोजितौ ॥ ८ ॥
महानीलमणिस्तम्भौ दक्षिणे तु व्यवस्थितौ ।
महावज्रमणेः स्तम्भौ प्रतीच्यां दिशि कल्पितौ ॥ ९ ॥
वैदूर्यस्तम्भयुगलमुत्तरे ह्यनुकल्पितम् ।
तप्तचामीकरक्लृप्तमण्डपस्तेषु कल्पितः ॥ १० ॥
अन्तर्बहिस्तत्र मुक्ता भान्ति तारागणा इव ।
अनेककोटिचन्द्रार्कप्रभाधिक्कारिवर्चसः ॥ ११ ॥
वेदिमध्ये तु कलशा विभान्ति मणिमेदुराः ।
मण्डपाधो मध्यभागे रत्नसिंहासनोत्तमम् ॥ १२ ॥
परितस्तस्य देवेशि सिंहासनपरम्परा ।
कृष्णप्रियानिवेशार्हा कृष्णे मध्यासनं गते ॥ १३ ॥
वेदिकापरितो भान्ति नानामणिमया लताः ।
मालती मल्लिका यूथी जातिचन्दनपाटली(१) ॥ १४ ॥
कदम्बपारिजाताम्रबकुलार्जुनकेसराः ।
केतकीचम्पकाशोकनीपाश्वत्थवटादिकाः ॥ १५ ॥
रत्नच्छदा घनीभूताः पुष्पपल्लवमण्डिताः ।
मरुल्लीलाचलशाखारूढस्थल(२) विहङ्गमाः ॥ १६ ॥

(१) 'पाटला' इ० पा०
(२) 'चलः' इ० पाठः

रत्नकुल्याविनिर्गच्छत्सुधापूरसुतर्पिताः ।
आभान्ति पादपा दिव्या महानन्दवने प्रिये ॥ १७ ॥
चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः ।
तासां गृहाणि दिव्यानि परितो भान्ति सुन्दरि ॥ १८ ॥
वज्रप्रकल्पितमहाप्राकारपरिवेष्टितं ।
महानन्दवनं वन्दे रसानन्दैकपत्तनं ॥ १९ ॥
यमुनाभिमुखे यस्य गोपुरं पद्मरागजम् ।
यौगपद्योदितानेकबालार्कद्युतिभासुरम् ॥ २० ॥
कुट्टिमद्वयमीशानि यद्बहिर्भातिसुन्दरम् ।
चतुर्द्वारं चतुःस्तम्भं शोभाविर्भावभूमिकम् ॥ २१ ॥
ततः सोपानमार्गेण गन्तव्या यमुना नदी ।
स्मरेदथो महेशानि हेमकूटवनं महत् ॥ २२ ॥
यत्र हेममयी भूमिर्हेमपादपसङ्कुला ।
तन्मध्ये कुट्टिमौ हैमौ हैमस्तम्भचतुष्टयम् ॥ २३ ॥
गव्यूत्यर्द्धयुतः श्रीमान् हैममण्डपभूषितः ।
चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः ॥ २४ ॥
तासां गृहाणि दिव्यानि हैमोपस्करवन्ति च ।
मण्डपम्परितो भांति तडितामिव राशयः ॥ २५ ॥
सौधमण्डपयोर्देवि यावत्स्यादन्तरालकम् ।
तत्सर्वं परितो व्याप्तं नारङ्गीलतिकाशतैः ॥ २६ ॥
एलालविङ्गकाश्मीरसुरभ्यानिलसेवितम् ।
मृद्वीकामण्डपयुतं मातुलिङ्गलतोल्लसत् ॥ २७ ।
बन्धूकैर्हयमारैश्च लवलीभिरलङ्कृतम् ।
कर्णिकारैश्च कुन्दैश्च चम्पकैश्चन्दनैर्वृतम् ॥ २८ ॥
नानापक्षिगणाध्वानमुखरीकृतदिङ्मुखम् ।
महानन्दमहोल्लासक्रान्तकोकिलकूजितम् ॥ २९ ॥

नृत्यत्कलापिनिकरं गुञ्जन्मत्तमधुव्रतम् ।
धावद्धरिणसञ्चारमुत्पतत्प्लवगद्रुमम्(१) ॥ ३० ॥
हेमप्राकारसंवीतं हेमकूटमिवास्थितम् ।
हेमकूटमहोद्यानं हेमगोपुरमण्डितम् ॥ ३१ ॥
हेमकुट्टिमविभ्राजद्बहिःपार्श्वद्वयोज्ज्वलम् ।
ततः सोपानमार्गेण गन्तव्या यमुना नदी ॥ ३२ ॥
ततश्च तारकूटाख्यं स्मरेद्विपिनमद्भुतम् ।
नीलरत्नमयी भूमिर्भ्राजते यत्र निस्तुला ॥ ३३ ॥
कदम्बकल्पद्रुमपारिजातैरमन्दगन्धाहृतभृङ्गसङ्घैः ।
मरुल्लसत्पल्लवराजिपुष्पैर्यथा सदः सद्भिरिवातिशोभते ॥३४॥
जम्बीरैर्निम्बुकैश्चैव कोविदारार्जुनैरपि ।
श्रीपर्णैः सरसैराम्रैः पनसैर्बकुलैरपि ॥ ३५ ॥
नागपुन्नागमन्दारैस्तथैवामलकीद्रुमैः ।
अम्लानपुष्पाभरणैः समन्तात् परिशोभितम् ॥ ३६ ॥
तारकूटमहं वन्दे तारप्राकारवेष्टितम् ।
चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः ॥ ३७ ॥
तासां गृहाणि दिव्यानि तारकुट्टिममुच्चकैः ।
परितो भान्ति देवेशि दलानीव कुशेशयम् ॥ ३८ ॥
यमुनाभिमुखे यस्य भाति गोपुरमुन्नतम् ।
गोपुरस्य बहिर्भागे राजितं कुट्टिमद्वयम् ॥ ३९ ॥
स्तम्भैश्चतुर्भिरुद्भान्तं राजतैः स्वर्णसूत्रितैः ।
ततः सोपानमार्गेण गन्तव्या यमुना नदी ॥ ४० ॥
स्मरेदथो महेशानि गारुडं वनमद्भुतं ।
गारुडै रत्ननिचयैः परिकल्पितभूमिकम् ॥ ४१ ॥
तत्र हस्तान्तरे देवि चतुष्कं मणिकल्पितम् ।

(१) 'उत्प्लवत्प्लवगद्रुमम्' इ० पा०

पूर्वपश्चिमभागेन चन्द्रकान्तमणिद्वयम् ॥ ४२ ॥
दक्षिणोत्तरभागेन पद्मरागद्वयाङ्कितम् ।
अन्योन्यचुम्बितमुखं शुद्धस्वर्णगृहार्पितम् ॥ ४३ ॥
एवं कोटिचतुष्काणि हस्तमात्रान्तरान्तरम् ।
भान्ति सर्वत्र देवेशि गरुत्ममणिभूमिषु ॥ ४४ ॥
यस्याः प्रान्तचतुष्केषु स्थलपङ्केरुहाण्यपि ।
यत्परागरजःपुञ्जैररुणीक्रियतेऽम्बरम् ॥ ४५ ॥
तन्मध्यदेशगः श्रीमान् भाति माणिक्यमण्डपः ।
सूर्यकान्तमणिस्थम्भनीलपत्रश्रियोल्लसत् ॥ ४६ ॥
तन्मध्ये दीर्घिका दीर्घा स्वर्णपङ्कजमालिनी ।
यद्गन्धाघ्राणमत्तालिझङ्कारमुखरान्तरा ॥ ४७ ॥
माणिक्यभूमिपतिता अपि मौक्तिकराजयः ।
न हर्षयन्ति कादम्बान् गुञ्जाशङ्काप्रतारितान् ॥ ४८ ॥
माणिक्यकन्दलाक्रान्ता वैदूर्यविलसच्छदाः ।
मण्डपं परितो दूराद्विभान्ति कदलीलताः ॥ ४९ ॥
कदलीकाण्डमारूढा हंसा गोफेनसन्निभाः ।
तत्पत्रद्युतिसम्भिन्ना न लक्ष्यन्ते मनागपि ॥ ५० ॥
वाय्वान्दोलितपत्रौघप्रकम्पत्कंदलस्तनाः ।
कूजत्पक्षिगणक्रीडा मनोनयननन्दनाः ॥ ५१ ॥
नृत्यमाना इवाभान्ति कदल्यो वारयोषितः ।
चतुर्विंशतिसाहस्रं तत्स्थानपरिचारिकाः ॥ ५२ ॥
मध्यवीथीनि सौधानि द्विपंक्त्या भान्ति तद्बहिः ।
भ्राजन्मणिकपाटानि हसद्रत्नाजिराणि च ॥ ५३ ॥
तद्बहिर्भान्ति देवेशि महोद्यानलताद्रुमाः ।
गन्धालुभ्य भ्रमद्भृङ्गा मरुदाघातवेपिताः(१) ॥ ५४ ॥

(१) 'गन्धलुब्धद्भ्रमद्भृङ्गाः सप्त गायन्ति ते स्वराः' इ० पा०

मयूरमृगचक्राह्वहंसकारण्डवैः पिकैः ।
शुकपारापतक्रौञ्चसारसैर्हारिलैरपि ॥ ५५ ॥
शाखामृगैः शशैः क्रोडैश्चातकैश्चटकैरपि ।
पतत्रिभिरनेकैश्च कुलङ्गैरुपसेवितम् ॥ ५६ ॥
जाड्यं मम धियो भिंद्यादुद्यानं गारुडाह्वयं ।
मुक्ताप्राकारकल्पितमप्राकृतजनाश्रयम् ॥ ५७ ॥
यमुनाभिमुखे यस्य महाद्वारं विराजते ।
माणिक्यदेहलीरम्यमिन्द्रनीलकपाटकम् ॥ ५८ ॥
महाद्वारबहिर्भागे कुट्टिमद्वयमद्भुतम् ।
काञ्चनं विद्रुमस्तम्भं स्वर्णमण्डपमण्डितम् ॥ ५९ ॥
यत्रस्थाः परिगायन्ति नृत्यन्ति च वराङ्गनाः ।
वीणामृदङ्गवाद्यादिविद्यानैपुण्यशालिनः(१) ॥ ६० ॥
ततः सोपानमार्गेण गन्तव्या यमुना नदी ।
पूर्वसङ्ख्यैव सर्वत्र सोपानानां प्रियंवदे ॥ ६१ ॥
एषु स्थानेषु देवेशि लीलार्थं पुरुषोत्तमः ।
आयाति चन्द्रिकोद्गारिविमानेन सखीवृतः ॥ ६२ ॥
कदाचिद्रथमारुह्य सहस्राश्वयुजं हरिः ।
सखीसमाजमध्यस्थस्तल्लीलाप्रेमगर्वितः ॥ ६३ ॥
रथाः सन्ति महादिव्याः सहस्राणि तु षोडश ।
प्रधानाः षोडशैवेषु तांस्ते वक्ष्यामि नामतः(२) ॥ ६४ ॥
चन्द्रको भद्रकश्चैव मनोजवमहाजवौ ।
जवमाली माणिस्कन्दो रोचिष्मान् भद्रसेनकः ॥ ६५ ॥
मेघनादो महानादश्चन्द्रगौरो विसर्पणः ।
नीलचक्रः कुरङ्गाह्वः स्वर्णनेमिर्विभावसुः ॥ ६६ ॥

(१) शालिनीः ।
(२) 'संशृणु' इ० पा०

सर्वे एते सहस्राश्वयुजः काञ्चनमालिनः ।
क्षुद्रघण्टानिनादेन परिपूरितदिङ्मुखाः ॥ ६७ ॥
केचिन्नीलवरूथेषु व्युप्तमौक्तिकराजयः ।
विभान्ति विलसत्तारागणा इव बलाहकाः ॥ ६८ ॥
केचिन्नीलवरूथेषु स्वर्णरेखाविचित्रिताः ।
तडिदुन्मेषरुचिरा हेपयन्ति घनाश्रियं ॥ ६९ ॥
केचिद्रक्तवरूथेषु वज्रमण्डपमण्डिताः ।
विलज्जयन्ति सन्ध्याभ्रशतभानूदयं नभः ॥ ७० ॥
अन्येपि स्यन्दनवरा मेघगम्भीरनिःस्वनाः ।
मौक्तिकाख्ये वने दिव्ये राजन्ते राजिमण्डलैः ॥ ७१ ॥
महासौधाङ्गणभ्राजन्मण्डपस्याप(१)सव्यतः ।
रथाः षोडश तिष्ठन्ति हयशालासु ते हयाः ॥ ७२ ॥
विमानान्यपि दिव्यानि व्यायतानि निजेच्छया ।
विचित्रशयनस्थानसभावाटीवृतानि च ॥ ७३ ॥
मुक्तावितानशोभानि मणिस्तम्भोज्वलानि च ।
कोटिचन्द्रप्रभास्पर्द्धिरत्नचित्राङ्गणानि च ॥ ७४ ॥
रत्नस्तम्भावलिभ्राजत्पुत्रिकाहस्तकल्पितैः ।
मणिभिर्भान्ति वेश्मानि प्रदीपावलिभिर्यथा ॥ ७५ ॥
अष्टादशसहस्राणि विमानप्रवराणि हि ।
तेष्वप्यष्टादशैवेहि वरीयांसि द्युमन्ति च ॥ ७६ ॥
उन्मादनं सुधास्यन्दि चन्द्रकं शतचन्द्रकं ।
तुङ्गभद्रं मनोयानं महानीलसुदर्शनं ॥ ७७ ॥
वज्रकूटं कलासारं चारुचन्द्रं प्रभारुणम् ।
हेमकक्षं प्रभापूरं पुष्पगंधमनाविलम् ॥ ७८ ॥

(१) मंडपस्यास्य सव्यतः इ० पा०

चित्रध्वजं(१) वज्रकूटमेवमष्टादश स्मृताः ।
स्थाप्यन्ते शिविकाख्या या विमानश्रेष्ठभूमिषु ॥ ७९ ॥
चिदानन्दानन्दभूम्योरेवमाप्लाव्य निम्नगा ।
प्रकाशानन्दसन्धिस्थसरस्यां विशते हि सा ॥ ८० ॥
सरसः पुनरुद्भूय प्रकाशाभिमुखं गता ।
शतयोजनमानेन ततः पश्चिमवाहिनी ॥ ८१ ॥
ज्ञानभूमिमथाप्लाव्य प्रयाता भुक्तिभूमिकां ।
प्रेमभूमिं ततः प्लाव्य प्रविष्टा पश्चिमार्णवम् ॥ ८२ ॥
आनन्दभुक्त्योरन्तराले महामाणिक्यपर्वतः ।
बालार्ककोटिरुचिर उच्छ्राये शतयोजनः ॥ ८३ ॥
यन्नितम्बभवा नद्यश्चतस्रो यमुनां गताः ।
प्रविशन्ति सुधासिन्धु सुषुम्णा सिरसा सिता ॥ ८४ ॥
निम्लोचा नामतः ख्याताः सर्वाः पीयूषवाहिनीः ।
कदाचित् क्रीडते तत्र निर्झरध्वनिनादिते ॥ ८५ ॥
सखीसहस्रसङ्कीर्णविमानवरमाश्रितः ।
गिरिद्रोणीषु रम्यासु भगवान्पुरुषोत्तमः ॥ ८६ ॥
एवं चानेकलीलाभी रसरूपाभिरन्वहम् ।
क्रीडते हि रसः साक्षात् कृष्णः परमपूरुषः ॥ ८७ ॥
एतत्ते सर्वमाख्यातमनापृष्टमपि प्रिये ।
स्मृत्यवस्थोदये कृष्णस्त्रीणामेताद्धितं यतः ॥ ८८ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डेशिवगौरीसंवादे
चतुश्चत्वारिंशं पटलम् ॥ ४४ ॥

---

(१) 'चित्रकूट' इ० पा०

## पञ्चचत्वारिंशं पटलम् ॥ ४५ ॥

शिव उवाच ॥

स्मरेदथो महादेवि ब्रह्मनालश्रियं शुभां ।
(१)ब्रह्मनालानन्दवनाद्दण्डाकारतया स्थितः ॥ १ ॥
मार्ग एव महेशानि निजालयनिवेशने ।
गोपुरद्वारमारभ्य प्राकारदशकावधि ॥ २ ॥
विंशतिर्योजनानां च ब्रह्मनाल उदाहृतः ।
पार्श्वयोरुभयोस्तस्य षष्ठ्युत्तरशतं प्रिये ।
सौधानि सन्ति देवेशि बहिः कुट्टिमवन्ति च ॥ ३ ॥
तत्तत्प्राकारसंवीत तत्तदुद्यानमण्डलं ।
तत्तद्द्वारप्रवेशेन गम्यते ब्रह्मनालतः ॥ ४ ॥
प्रतिप्राकारमीशानि प्रवेशे ब्रह्मनालतः ।
सव्यापसव्ययोर्द्वारद्वयमुद्यत्प्रभारुणम् ॥ ५ ॥
स्वर्णप्राकारसंवीता महाचम्पकवाटिकाः ।
अनेकपक्षीनिनदा बहुलामोदमेदुराः ॥ ६ ॥
तप्तकाञ्चनवर्णाभा भान्ति चम्पककोरकाः ।
दीपा इव निवातस्था भृङ्गैर्दूरतरोज्झिताः ॥ ७ ॥
पूर्णशारदराकेशानुकारिकुसुमोज्वलाः ।
राजन्ते यत्र बहुशो दिव्याश्चम्पकवीरुधः ॥ ८ ॥
चम्पकोद्यानुकुञ्जेषु दिव्यहर्म्यकृतास्पदाः ।
चतुर्दशसहस्राणि वसन्ति परिचारिकाः ॥ ९ ॥
कदाचित् क्रीडते तत्र श्रीकृष्णः स्वसखीवृतः ।
मध्ये तारागणस्येव पूर्णशारदचन्द्रमाः ॥ १० ॥
तदन्तः संस्मरेद्देवि वनं कल्पद्रुमाकुलम् ।
महावैदूर्यशालेन समन्तात्परिवेष्टितम् ॥ ११ ॥

(१) 'ब्रह्मनालोनन्दवनात्' इ० पा०

कल्पद्रुकुसुमामोदमोदमानाः शिलीमुखाः ।
नान्यगन्धमपेक्षन्ते पूर्णकामा यथेतरत् ॥ १२ ॥
कल्पद्रुकुसुमास्वादुरसव्यासक्तबुद्धयः ।
स्वां वाचं मुद्रयन्तीह ज्ञाततत्वा इवालयः ॥ १३ ॥
महामरकतक्लृप्तस्थलीपतितमौक्तिका ।
यथा तामसभक्तस्य बुद्धिः प्रेमाङ्कुरोज्वला ॥ १४ ॥
मधुश्रीमाधवश्रीकः स्त्रीस्कन्धार्पितसद्भुजः ।
पुष्पकल्पितवासःश्रीभूषाशृङ्गारमण्डितः ॥ १५ ॥
वसन्तः सन्ततं यत्र चरतेऽसौ रसात्मकः ।
कल्पद्रुमहाकुञ्जवीथिषु प्रेमविह्वलः ॥ १६ ॥
कामकोदण्डकुटिलभ्रूलताचारुविभ्रमः ।
कुङ्कुमारक्तवसनः साचीक्षणविचक्षणः ॥ १७ ॥
दिव्यपुष्परजः पुञ्जधूसरः सस्मिताननः ।
कल्पकोद्यानकुञ्जेषु दिव्यहर्म्यकृतालयाः ॥ १८ ॥
त्रयोदश सहस्राणि वसन्ति परिचारिकाः ।
कदाचिदत्र भगवान्कृष्णः कमललोचनः ॥ १९ ॥
वसन्तलीलारसिको रसात्मोपवने चरन् ।
इन्दिरासुन्दरीमुख्यप्रियाविभ्रममोहितः ॥ २० ॥
प्रियाकटाक्षचषकैरापीत इव सर्वतः ।
आवृष्ट इव पुष्पौघैः सखीमुक्तैः समन्ततः ॥ २१ ॥
अभिवर्षन् स्वयमपि सखीः कुसुमवृष्टिभिः ।
मुखामोदप्रसक्तालिझङ्कारोद्विग्ननेत्रया ॥ २२ ॥
गाढमालिङ्गितः कण्ठे स्वामिन्या पद्महस्तया ।
प्रियाभिः प्रेमयुक्ताभिर्जलयन्त्राविनिर्गतैः ।
कुङ्कुमाम्भोभिरासिक्तो जातः पीताम्बरो यथा ॥ २३ ॥
गजीभिरिव मातङ्गो रमते रतिलम्पटः ।

अनेकरसयुक्तासु क्रीडासु कृतकौतुकः ॥ २४ ॥
तदन्तः संस्मरेद्दिव्यां मन्दारद्रुमवाटिकाम् ।
दिव्यप्रवालरत्नोद्यत्प्राकारपरिवेष्टिताम् ॥ २५ ॥
महानीलमणिभ्राजद्भूमिकाभासमाश्रिताम्(१) ।
नृत्यन्ति यत्र शिखिनो नित्यमम्भोदशङ्कया ॥ २६ ॥
मन्दारमकरन्देषु विलीनमतयोऽलयः ।
विस्मरन्त्यन्यपुष्पाणि यथा ब्रह्मरसप्लुताः ॥ २७ ॥
यत्रास्ते सततं राका पूर्णचन्द्रसमन्विता ।
कुहुः कोकिलचञ्चुस्था केवलं यत्र लभ्यते ॥ २८ ॥
मन्दारमन्दसौरभ्यलुब्धा रोलम्बराजयः ।
न क्वापि गन्तुमिच्छन्ति दानलुब्धा इवार्थिनः ॥ २९ ॥
शुक्रिश्रीति शुचिश्रीति यस्य वामे मदालसे ।
मन्दारोद्यानसञ्चारी ग्रीष्मर्त्तुर्मदविह्वलः(२) ॥ ३० ॥
मन्दारोद्यान कुञ्जेषु दिव्यहर्म्यकृतास्पदाः ।
द्वादशैव सहस्राणि वसन्ति परिचारिकाः ॥ ३१ ॥
मन्दारकुञ्जक्रीडार्थं कदाचित्प्रमदागणैः ।
मूलभूमेः समुत्थाय पश्चिमद्वारमार्गतः ॥ ३२ ॥
प्रविशत्यरविन्दाक्षः क्रीडते रतिलालसः ।
महाकामकलाभिज्ञः कामात्मा पुरुषोत्तमः ॥ ३३ ॥
ततस्तदन्तरुद्यानं पारिजातमयं स्मरेत् ।
महामाणिक्यशालेन समन्तात्परिवेष्टितम् ॥ ३४ ॥
चन्द्रकान्तशिलाक्लृप्तस्थलीकमतिसुन्दरम् ।
यत्रेन्दुरश्मयः स्पर्शात्सुधाकणमवापिताः ॥ ३५ ॥
कुट्टिमा यत्र भूयांसो विस्फुरद्रत्नमण्डपाः ।

---

( १ ) 'भासिनीकृताम्' इ० पा०
( २ ) 'ग्रीष्मर्तुस्तिग्मलोचनः' इ० पा०

कुञ्जगुञ्जन्मधुकरव्रातझङ्कारनादिताः ॥ ३६ ॥
सरस्यो(१) विलसत्स्वर्णसहस्रदलपङ्कजैः ।
खेलन्मरालमिथुनैर्गन्धवासितपादपैः ॥ ३७ ॥
निश्चलालिसमाक्रान्तपत्रजालैः समन्ततः ।
विलोकयन्ति वात्यन्तं नेत्रैरुन्मेषवर्जितैः ॥ ३८ ॥
पारिजातवनीकुञ्जदिव्यसौधकृतालयाः ।
एकादशसहस्राणि वसन्ति परिचारिकाः ॥ ३९ ॥
पारिजातवनक्रीडारसलुब्धेन चेतसा ।
कदाचिदत्र भगवान् समायाति सखीगणैः ॥ ४० ॥
कृष्णं सरोवराभ्यासमणिकुट्टिमसंस्थितम् ।
भूषाम्बरादिभिः सख्यः(२) कौसुम्भैर्भूषयन्ति हि ॥ ४१ ॥
हारकुण्डलकेयूरवलयोत्तुङ्गमौलिभिः ।
उष्णीषकञ्चुककटिबन्धरम्योत्तरीयकैः ॥ ४२ ॥
पौष्पैः कृतश्रीः भगवान् सखीवृन्दान्तरे चरन् ।
दिव्यपुष्पमयं वेत्रमादधानः कराम्बुजे ॥ ४३ ॥
वमाङ्घ्रिरिव सत्प्रेम विकुञ्चद्भ्रूकुटीतटैः ।
अभिवर्षन्निव सखीवृन्दं लोचनपङ्कजैः(३) ॥ ४४ ॥
स्वकरालूनकुसुमाभूषाभिर्भूषयन्(४) सखीः ।
हसितो हासयन्सर्वा लीलागतिविचक्षणः ॥ ४५ ॥
गीयमानयशा गायन् रमते कुञ्जभूमिषु ।
स्मरेदतस्तदंतःस्थां हरिचन्दनवाटिकां ॥ ४६ ॥
गोमेदकमहारत्नरचितस्वीयगोपुराम् ।

---

(१) 'सरसीषु लसत्' इ० पा०
(२) 'कौसुमैः' इ० पा०
(३) 'अभिवर्षन्तीव सखीवृन्दलोचनषट्पदः' इ० पा०
(४) कुसुमाक्रीडाभिः इ० पा०

शुद्धस्फटिकविभ्राजद्भूमिकाकिरणोज्ज्वलाम् ॥ ४७ ॥
मरुल्लसत्पल्लवराजिराजितद्रुमावलीनां प्रतिबिम्बभूमिषु ।
विहङ्गमाः पक्वफलाशया मुहुश्चञ्चूपुटाघातविधिं वितेनिरे ॥४८॥
क्वचिद्विहङ्गाः स्फटिकावनीतले निरीक्षमाणाः प्रतिबिम्बविभ्रमम् ।
स्वजातिपक्षिव्रजशङ्किताशयाः कूजन्ति स्वं स्वं स्वरमुच्चकैर्मुहुः४९
हरिचंदनस्फुरदमन्दसुन्दरस्फटिकावनीतला वनविहारिणः ।
पवनोल्लसद्विटपविष्टराः खगा विवदन्ति पंडितगणा इवोद्भटाः
मणिकुट्टिमास्फुरदमन्दरश्मयः परितो विभान्ति कृतरत्नमण्डपाः।
शुककोकिलभ्रमरहंससारसैः समुपास्यमानरमणीयमध्यमाः ५१
मुखराट्टहासपरिपूरिताम्बरः सुनभोनभस्यरमणीविराजितः ।
ऋतुराज एव किल प्रावृडित्ययं मदघूर्णमाननयनो विराजते ॥५२॥
मृदुमन्दगर्जितपयोदमण्डलीघटनान्धकारपरिलब्धवर्चसः ।
परितो भ्रमन्ति वनकुञ्जमण्डलेष्वतिनीलरत्ननिभकीटकोटयः ५३
हरिचन्दनद्रुमनिकुञ्जमण्डलेष्वतिदिव्यरत्नपरिचारिकागृहाः ।
परितो विभान्त्ययुतसंख्यया शिवे ज्वलदग्निबीजरचिताङ्गणश्रियः

अत्रापि क्रीडते कृष्णः स्वामिन्यादिसखीवृतः ।
नानाक्रीडाविनोदैश्च परिहासरसादिभिः ॥ ५५ ॥
तदन्तः संस्मरेद्दिव्यमुद्यानं सुमनोहरम् ।
वैडूर्यलतिकाखण्डमण्डितं नन्दनं हशाम् ॥ ५६ ॥
यत्र वैडूर्यवृक्षेषु प्रवालप्रतिबिम्बजा ।
काप्यभिख्या दृगम्भोजमोदहेतुः प्रवर्तते ॥ ५७ ॥
सूर्यकान्तमणिक्लृप्तदिव्यप्राकारमण्डितं ।
सन्धिवर्जितमाणिक्यशिलाकल्पितभूमिकम् ॥ ५८ ॥
सूर्यकान्तमणिच्छायाविद्धमाणिक्यभूमिका ।
जातारुणोदयमिव भ्रममुत्पादयत्यहो ॥ ५९ ॥
वैडूर्यद्रुमकुञ्जेषु दिव्यसौधकृतालयाः ।

सहस्राणि नव प्रोक्ताः तत्स्थानपरिचारिकाः ॥ ६० ॥
तदन्तः संस्मरेद्दिव्यां महामौक्तिकवाटिकाम् ।
विस्फुरत्पुष्परागीयप्राकारपरिवेष्टिताम् ॥ ६१ ॥
माणिक्यपुष्पविद्योतन्महामुक्तालतावृताम् ।
लतासु विस्फुरद्दिव्यवैडूर्यवृन्तभासुराम् ॥ ६२ ॥
महावज्रमणिभ्राजद्भूमिकाकिरणप्लुताम् ।
कुञ्जेषु पक्षिनिनदप्रतिध्वानमनोहराम् ॥ ६३ ॥
इषो(१)र्जलक्ष्मीलावण्यप्रवाहपतितान्तरः ।
मल्लिकामालतीपुष्पभूषावासःपरिच्छदः ॥ ६४ ॥
स्मितशोभिमुखाम्भोजश्चम्पकद्युतिपाण्डुरः ।
तत्र सञ्चरते साक्षाद्रसरूपी शरदृतुः ॥ ६५ ॥
मुक्तानिकुञ्जभुवनक्रीडारसवशंवदाः ।
सहस्राण्यष्ट देवेशि वसन्ति परिचारिकाः ॥ ६६ ॥
क्रीडतेऽत्रापि भगवान् कृष्णः कमललोचनः ।
स्वामिन्यादिसखीवृन्दसभाक्रीडाकुतूहलः ॥ ६७ ॥
तदन्तः संस्मरेद्दिव्यां प्रवालद्रुमवाटिकां ।
गरुत्मन्मणिशालेन निगूढां परितः प्रिये ॥ ६८ ॥
पुष्परागशिलाक्लृप्तवसुधातलमण्डितां ।
मुक्तास्तवकसंशोभिप्रवालद्रुमशोभितां ॥ ६९ ॥
स(२)हसहस्यश्रीभ्यां तु नारीभ्यामुपलालितः ।
हेमन्तस्तत्र चरते लीलाखेलकृतादरः ॥ ७० ॥
प्रवालोद्यानकुञ्जस्थरत्नसौधनिकेतनाः ।
सप्त चैव सहस्राणि वसन्ति परिचारिकाः ॥ ७१ ॥
सूर्यकान्तमणिभ्राजल्लताकुसुमपल्लवं ।

---

(१) 'विस्फूर्जलक्ष्मी' इ० पा०
(२) 'सहः' इ० पा०

तदन्तः संस्मरेद्दिव्यमुद्यानं कोटिसूर्यभं ॥ ७२ ॥
कोटीन्दुविस्फुरच्चन्द्रकान्तशालेन व्यूहितं ।
दिव्यप्रवालरत्नौघैर्निबद्धवसुधातलं ॥ ७३ ॥
तपस्तपस्यश्रीभ्यां च तरुणीभ्यामलङ्कृतं ।
तद्भावानुभवानन्दमोदमानमहर्निशम् ॥ ७४ ॥
शिशिरर्तुं भजेत्तत्र चरन्तं मदविह्वलं ।
सूर्यकान्तनिकुञ्जेषु खेलन्त्यो मदविह्वलाः ॥ ७५ ॥
षट्सहस्राणि देवेशि वसन्ति परिचारिकाः ।
कदाचिदत्र क्रीडार्थं सखीभिः पुरुषोत्तमः ॥ ७६ ॥
स्वामिन्या च समासाद्य क्रीडन् विक्रीडयत्यपि ।
तदन्तः संस्मरेद्दिव्यमुद्यानं तु मनोहरम् ।
पद्मरागलतापुञ्जकुञ्जगुञ्जन्मधुव्रतं ॥ ७७ ॥
चिन्तारत्नविचित्रान्तर्भूमिविद्योतितान्तरं ।
अनेककुट्टिमैर्भ्राजन्मण्डपैः कुञ्जमध्यगैः ॥ ७८ ॥
भ्राजत्कपाटरत्नालिप्रभौघैर्वियदन्तरं ।
उदितेन्द्रधनुःकोटिकुर्वाणमिव सर्वतः ॥ ७९ ॥
क्वचिदिन्दीवरवनप्रोच्छलन्तः प्रभाङ्कुराः ।
सांद्रमेघान्धकारेण लिम्पन्त इव दिक्तटान् ॥ ८० ॥
कलापिनो हृष्टचित्तास्तत्र नृत्यन्ति सन्ततम् ।
उद्घाट्य स्वकलापांश्च जलदाटोपशंकया ॥ ८१ ॥
शुकपारापतक्रौंचपिककोलाहलाकुलम् ।
कोटीन्दुकौमुदीगर्वनिर्वासनलताशतं ॥ ८२ ॥
उत्पतद्भिर्मृगीवृन्दैर्वराहैर्गवयैः शशैः ।
रुरुभिर्मृगनाभैश्च चमरीभिरलङ्कृतं ॥ ८३ ॥
अनेकसूर्यसङ्काशचिन्तारत्नाट्टतिव्रतं ।
यत्र पञ्चसहस्राणि मणिहर्म्यकृतास्पदाः ॥ ८४ ॥

दिव्यशृङ्गारवेषाढ्या रसभावविभावुकाः ।
सेवोपचारचतुरा वसन्ति परिचारिकाः ॥ ८५ ॥
तदन्तः संस्मरेद्दिव्यं महापद्मवनं महत् ।
लक्षयोजनविस्तीर्णं गुञ्जन्मत्तमधुव्रतं ॥ ८६ ॥
वियद्वितानितमिव परागैः पवनेरितैः ।
कुर्वन् तद्गन्धसञ्चारिषट्पदव्याजचित्रितम् ॥ ८७ ॥
महापद्माटवीमध्ये स्मरेदेकमणिगृहम् ।
चतुःषष्टिमहास्तम्भशोभाडम्बरमण्डितम् ॥ ८८ ॥
मूलभूमिस्तु प्रथमा द्वितीया मतिविभ्रमा ।
तृतीया भोगभूमिश्च नृत्यभूमिश्चतुर्थिका ॥ ८९ ॥
पञ्चमी शयनीयाख्या षष्ठी वैमानिकीति च ।
सप्तमी अष्टमी चोभे दोलाभूमी निरूपिते ॥ ९० ॥
नवमी दूरलक्षा च दशमी चन्द्रभूमिका ।
इत्येता दश आख्याता भूमयो निजवेश्मनः ॥
प्रियाभिः सह वसेदस्मिन् घनीभूतो रस पुमान् ॥ ९१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे पञ्चचत्वारिंशं पटलम् ॥ ४५ ॥

## षट्चत्वारिंशं पटलम् ॥ ४६ ॥

शिव उवाच ।

इत्थं स्मरन्ती सततं निजधाममहोदयम् ।
क्रमेण वासना देवि गमयत्येव वासरान् ॥ १ ॥
यद्येषा विरहावस्था स्मरणाख्या प्रवर्त्तते ।
तदा स्मृतिपथारूढं निजं धाम भवेत्प्रिये ॥ २ ॥
अन्यथा ध्यायमानस्य रसलीलामहोदधिम् ।

मध्येविच्छिद्य विच्छिद्य मनस्तस्मान्निवर्त्तते ॥ ३ ॥
यावन्न जायते ह्येषा दशा विरहसम्भवा ।
तावन्न शक्नुयात्कर्तुं विद्धि सेवां मनोमयीम् ॥ ४ ॥
स्मृत्यवस्थोदयो यावत्तावत्सेवाद्वयं भवत् ।
आन्तरीया तथा बाह्या तयोर्नैकतरा क्वचित् ॥ ५ ॥
सेवया तद्गतं चेतः शनैर्लीलागतं भवेत् ।
स्मृत्यवस्थामवाप्नोति क्रमेण परमेश्वरि ॥ ६ ॥
स्मृत्यवस्थोदये देवि मनस्तत्तन्मनोरथैः ।
प्रलापाख्यामवाप्नोति दशां च व्याकुलीकृतम् ॥ ७ ॥
अबुद्धिपूर्वकालापः प्रलापः कथितः प्रिये ।
प्रियलीलाविलासादिविषयस्थिरचेतसः ॥ ८ ॥
रमयस्वाद्य रुचिरं प्रियप्रेम्णा वनान्तरे ।
प्रिय त्वं चिरकालेन मया प्राप्तोसि साम्प्रतं ॥ ९ ॥
इत्यादिविविधालापाः प्रवर्त्तन्ते महेश्वरि ।
यदा देहानुसन्धानं मध्ये मध्ये प्रजायते ॥ १० ॥
अत्युग्रतरसन्तापनिर्वापणपटीयसी ।
सुधाधारेव सततं वाक् त्वदीया रसास्रवा ॥ ११ ॥
अनङ्गकोटिसौन्दर्यमहाब्धिमथनोद्धृतः ।
सारांश इव ते रूपमानन्दोद्वेलनक्षमं ॥ १२ ॥
महादुःखतमस्तोमविपाटनपटीयसी ।
चन्द्रज्योत्स्नेव रुचिरा हास्यशोभा तव प्रिय ॥ १३ ॥
मय्येतत्तु कथं नाथ विपरीतं प्रवर्त्तते ।
एवमादीनि वाक्यानि प्रवर्त्तन्ते गुणस्तवे ॥ १४ ॥
ततः क्रमेण देवेशि मनोवैवश्यकारिणी ।
आध्यवस्था प्रवर्तेत विप्रलम्भदशात्मिका(१) ॥ १५ ॥

---

( १ ) 'विप्रलंभरसात्मिका' इ० पा०

दीर्घतापाग्निसन्तप्तमाधिग्रस्तं मनोन्तरं ।
बहिः सृजत्यश्रुधारां श्वासकम्पादिकं तथा ॥ १६ ॥
विरहे प्राणनाथस्य अप्राप्तौ सङ्गमस्य च ।
जायते देवदेवेशि दशा चोन्मादसंज्ञिका ॥ १७ ॥
श्वासाश्रुपातसन्तापकम्पभूलेखनादिभिः ।
अवस्था ज्ञायते देवि ह्युन्माद इति संज्ञया ॥ १८ ॥
जायमाने ततो देवि तापे विरहसम्भवे ।
हुङ्कारमात्रवचना तन्द्रामोहसमाकुला ॥ १९ ॥
अनुसन्धानरहिता श्वाससंशोषिताधरा ।
विवर्णवदनाकारा कृशीभूतकलेवरा ॥ २० ॥
नैकव्य जातमरणा (१)जडावस्था भवेत्प्रिये ।
कदाचिद्देवदेवेशि धैर्यस्याप्यनवस्थितौ ॥ २१ ॥
निजनाथवियोगाग्निज्वालाज्वलितविग्रहा ।
जायते देवदेवेशि दशा मरणरूपिणी ॥ २२ ॥
इत्येता विरहावस्था दश प्रोक्ता तवानघे ।
विप्रलम्भाख्यश्रृङ्गाररसे प्रादुर्भवन्ति ताः ॥ २३ ॥
यद्यप्येका प्रजायेत दशा विरहसम्भवा ।
तथापि च वरारोहे रसस्यानुभवो भवेत् ॥ २४ ॥
यावन्न जायतेऽप्येका दशा विरहसम्भवा ।
तावन्न जायते देवि रसस्यानुभवः क्वचित् ॥ २५ ॥
ज्ञात्वापि प्रियविश्लेषं यद्यवस्थोदयो नहि ।
तदा चूडामणिजपः कर्त्तव्यः शुद्धिहेतवे ॥ २६ ॥
मनोविकारे भावाख्ये जायमाने सुरेश्वरि ।
अप्राप्तौ विरहावस्थां धत्ते भावः स एव हि ॥ २७ ॥
परानन्दे प्रिये ज्ञाते तदप्राप्तिवशादिह ।

---

(१) 'विरहे संभवेत्' इ० पा०

मनो विकृतिमभ्येति भावसंज्ञामलौकिकीं ॥ २८ ॥
अनेकजन्मकलुषैर्यदा वीतं मनो भवेत् ।
नैवाप्नोति तदाभावं येन स्याद्विरहोदयः ॥ २९ ॥
तन्मालिन्यनिरासार्थं जपसेवार्चनादिकम् ।
अवश्यमेव कर्त्तव्यं श्रीकृष्णप्रीतये चिरम् ॥ ३० ॥
अनुग्रहदृशा पश्येद् यदैव पुरुषोत्तमः ।
प्रसादसुमुखो भूत्वा तदा स्याद्विरहोदयः ॥ ३१ ॥
इति ते सर्वमाख्यातं दशावस्थानिरूपणम् ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ३२ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे
षट्चत्वारिंशं पटलम् ॥ ४६ ॥

---

## सप्तचत्वारिंशं पटलम् ॥ ४० ॥

॥ पार्वत्युवाच ॥

भगवन् श्रोतुमिच्छामि यथा कृष्णः प्रसीदति ।
विना जपं विना सेवां विना पूजामपि प्रभो ॥ १ ॥
यथा कृष्णः प्रसन्नः स्यात्तमुपायं वदाधुना ।
अन्यथा देवदेवेश पुरुषार्थो न सिद्ध्यति ॥ २ ॥

॥ शिव उवाच ॥

साधु पार्वति ते प्रश्नः सावधानतया शृणु ।
विना जपं विना सेवां विना पूजामपि प्रिये ॥ ३ ॥
यथा कृष्णः प्रसन्नः स्यात्तमुपायं वदामि ते ।
जपसेवादिकं चापि विना स्तोत्रं न सिद्ध्यति ॥ ४ ॥
कीर्तिप्रियो हि भगवान् परात्मा पुरुषोत्तमः ।
जपस्तन्मयतासिद्ध्यै सेवा स्वाचाररूपिणी ॥ ५ ॥

स्तुतिः प्रसादनकरी तस्मात्स्तोत्रं वदामि ते ।
सुधाम्भोनिधिमध्यस्थे रत्नद्वीपे मनोहरे ॥ ६ ॥
नवखण्डात्मके तत्र नवरत्नविभूषिते ।
तन्मध्ये चिन्तयेद्रम्यं मणिगृहमनुत्तमं ॥ ७ ॥
परितो वनमालाभिः ललिताभिः विराजिते ।
तत्र सञ्चिन्तयेच्चारु कुट्टिमं सुमनोहरं ॥ ८ ॥
चतुःषष्ट्या मणिस्तम्भैश्चतुर्दिक्षु विराजितं ।
तत्र सिंहासने ध्यायेत्कृष्णं कमललोचनं ॥ ९ ॥
अनर्घ्यरत्नजटितमुकुटोज्वलकुण्डलं ।
सुस्मितं सुमुखाम्भोजं सखीवृन्दनिषेवितं ॥ १० ॥
स्वामिन्याश्लिष्टवामाङ्गं परमानन्दविग्रहं ।
एवं ध्यात्वा ततः स्तोत्रं पठेत्सुविजितेन्द्रियः ॥ ११ ॥

कृष्णं कमलपत्राक्षं सच्चिदानन्दविग्रहं ।
सखीयूथान्तरचरं प्रणमामि परात्परं ॥ १२ ॥
शृङ्गाररसरूपाय परिपूर्णसुखात्मने ।
राजीवारुणनेत्राय कोटिकन्दर्परूपिणे ॥ १३ ॥
वेदाद्यगमरूपाय वेदवेद्यस्वरूपिणे ।
अवाङ्मनसाविषयनिजलीलाप्रवर्त्तिने ॥ १४ ॥
नमः शुद्धाय पूर्णाय निरस्तगुणवृत्तये ।
अखण्डाय निरंशाय निरावरणरूपिणे ॥ १५ ॥
संयोगविप्रलम्भाख्यभेदभावमहाब्धये ।
सदंशविश्वरूपाय चिदंशाक्षररूपिणे ॥ १६ ॥
आनन्दांशस्वरूपाय सच्चिदानन्दरूपिणे ।
मर्यादातीतरूपाय निराधाराय साक्षिणे ॥ १७ ॥
मायाप्रपञ्चदूराय नीलाचलविहारिणे ।
माणिक्यपुष्परागाद्रिलीलाखेलप्रवर्त्तिने ॥ १८ ॥

चिदन्तर्यामिरूपाय ब्रह्मानन्दस्वरूपिणे ।
प्रमाणपथदूराय प्रमाणाग्राह्यरूपिणे ॥ १९ ॥
मायाकालुष्यहीनाय नमः कृष्णाय शम्भवे ।
क्षरायाक्षररूपाय क्षराक्षरविलक्षणे ॥ २० ॥
तुरीयातीतरूपाय नमः पुरुषरूपिणे ।
महाकामस्वरूपाय कामतत्त्वार्थवेदिने ॥ २१ ॥
दशलीलाविहाराय सप्ततीर्थविहारिणे ।
विहाररसपूर्णाय नमस्तुभ्यं कृपानिधे ॥ २२ ॥
विरहानलसन्तप्तभक्तचित्तोदयाय च ।
आविष्कृतनिजानन्दविफलीकृतमुक्तये ॥ २३ ॥
द्वैताद्वैतमहामोहतमःपटलपाटिने ।
जगदुत्पत्तिविलयसाक्षिणेऽविकृताय च ॥ २४ ॥
ईश्वराय निरीशाय निरस्ताखिलकर्मणे ।
संसारध्वान्तसूर्याय पूतनाप्राणहारिणे ॥ २५ ॥
रासलीलाविलासोर्मिपूरिताक्षरचेतसे ।
स्वामिनीनयनाम्भोजभावभेदैकवेदिने ॥ २६ ॥
केवलानन्दरूपाय नमः कृष्णाय वेधसे ।
स्वामिनीहृदयानन्दकन्दलाय तदात्मने ॥ २७ ॥
संसारारण्यवीथीषु परिभ्रान्तामनेकधा ।
पाहि मां कृपया नाथ त्वद्वियोगाधिदुःखिताम् ॥ २८ ॥
त्वमेव मातृपित्रादिबन्धुवर्गादयश्च ये ।
विद्या वित्तं कुलं शीलं त्वत्तो मे नास्ति किञ्चन ॥ २९ ॥
यथा दारुमयी योषिच्चेष्टते शिल्पिशिक्षया ।
अस्वतन्त्रा त्वया नाथ तथाहं विचरामि भोः ॥ ३० ॥
सर्वसाधनहीनां मां धर्माचारपराङ्मुखाम् ।
पतितां भवपाथोधौ परित्रातुं त्वमर्हसि ॥ ३१ ॥

मायाभ्रमणयंत्रस्थामूर्ध्वाधोभयविह्वलाम् ।
अदृष्टनिजसंकेतां पाहि नाथ दयानिधे ॥ ३२ ॥
अनर्थेऽर्थदृशं मूढां विश्वस्तां भयदस्थले ।
जागृतव्ये शयानां मामुद्धरस्व दयापरः ॥ ३३ ॥
अतीतानागतभवसन्तानविवशान्तराम् ।
बिभेमि विमुखी भूय त्वत्तः कमललोचन ॥ ३४ ॥
मायालवणपाथोधिपयःपानरतां हि मां ।
त्वत्सान्निध्यसुधासिन्धुसामीप्यं नय माऽचिरं ॥ ३५ ॥
त्वद्वियोगार्तिमासाद्य यज्जीवामीति लज्जया ।
दर्शयिष्ये कथं नाथ मुखमेतद्विडम्बनं ॥ ३६ ॥
प्राणनाथ वियोगेपि करोमिप्राणधारणं ।
अनौचिती महत्येषा किं न लज्जयतीहि मां ॥ ३७ ॥
किं करोमि क्व गच्छामि कस्याग्रे प्रवदाम्यहं ।
उत्पद्यन्ते विलीयन्ते वृत्तयोब्धौ यथोर्मयः ॥ ३८ ॥
अहं दुःखाकुली दीना दुःखहा नभवत्परः ।
विज्ञाय प्राणनाथेदं यथेच्छसि तथा कुरु ॥ ३९ ॥
ततश्च प्रणमेत्कृष्णं भूयो भूयः कृताञ्जलिः ।
इत्येतद्गुह्यमाख्यातं न वक्तव्यं गिरीन्द्रजे ॥ ४० ॥
एवं यः स्तौति देवेशि त्रिकालं विजितेन्द्रियः ।
आविर्भवति तच्चित्ते प्रेमरूपी स्वयं प्रभुः ॥ ४१ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवपार्वतीसंवादे पुरुषोत्तमस्तवो नाम सप्तचत्वारिंशं पटलम् ॥४७॥

## अथाष्टचत्वारिंशं पटलम् ॥ ४८ ॥

पार्वत्युवाच ॥

भगवन् देवदेवेश जगन्नाथ दयानिधे ।
कथा साध्वी महापुण्या भवता विनिरूपिता ॥ १ ॥
अनुगृहीता नाथेन त्वयाहं करुणात्मना ।
ब्रह्मगुह्यमिदं देव यदेतत्प्रकटीकृतम् ॥ २ ॥
अतः परं तु देवेश वेदितव्यं न विद्यते ।
तथापि प्रष्टुमिच्छामि कोऽमृतं पीय तृप्तिभाक् ॥ ३ ॥
मन्त्रराजप्रसङ्गेन सेवा ते विनिरूपिता ।
यथा सिध्यन्ति देवेश वासनाः कृष्णयोषितां ॥ ४ ॥
धर्मः कृष्णप्रियाणां हि न सेवातोऽधिकः क्वचित् ।
तथापि भवता नाथ किञ्चित्पूजापि सूचिता ॥ ५ ॥
विधिना केन देवेश क्रियते सा कदा च कैः ।
एतन्मे ब्रूहि भो विद्वन् महांस्त्वं दीनवत्सलः ॥ ६ ॥

शिव उवाच ॥

प्रिये धन्यासि धन्यासि धन्यासि मम मानसम् ।
प्रीणासि प्रश्नवादेन सूर्योऽब्जमिव भानुना ॥ ७ ॥
अतस्त्वां कथयिष्यामि सुगोप्यमपि पूजनम् ।
सेवनं मुख्यमेवोक्तं पूजनं गौणमुच्यते ॥ ८ ॥
सेवां कर्तुमशक्तश्चेत् पूजयेत्पुरुषोत्तमम् ।
तदहं ते प्रवक्ष्यामि यन्मां त्वं पृच्छसि प्रिये ॥ ९ ॥
प्रातरुत्थाय देवेशि ब्रह्मरन्ध्रे निजं गुरुम् ।
ध्यात्वा पञ्चोपचारैश्च मानसैः पूजयेत्परम् ॥ १० ॥
ततो हृदम्बुजे ध्यायेच्छ्रीकृष्णं स्वामिनीयुतम् ।
प्रसन्नवदनाम्भोजप्रियावृन्दविहारिणम् ॥ ११ ॥

पूर्ववत्पूजयित्वाथ व्यवहारविधौ प्रिये।
अनुज्ञां प्रार्थयेत्तस्य प्रबद्धकरसम्पुटा ॥ १२ ॥
जानामि धर्मं न हि मे प्रवृत्तिर्जानाम्यधर्मं न ततो निवृत्तिः।
मायान्धकारे गहने प्रविष्टा गृहान्धकूपे पतिता प्रमादात् ॥ १३ ॥
यद्यत्करिष्यामि शुभाशुभं वा नाहं स्वतन्त्रः प्रकरोमि तत्तत्।
तस्मात्क्षमस्व प्रियनाथ सर्वं संसारयात्रामनुवर्त्तमानम् ॥ १४ ॥
आदायाज्ञां ततो देवि भूमिं सम्प्रार्थ्य पूर्ववत्।
मलोत्सर्गविधिं कृत्वा हस्तपादादिशोधनम् ॥ १५ ॥
पूर्ववद्देवदेवेशि दन्तशुद्धिं समाचरेत्।
तीर्थे वा स्वगृहे वापि स्नानं कृत्वा च पूर्ववत् ॥ १६ ॥
पूजागृहसमीपं तु गत्वोक्तासनसंस्थितः।
कुङ्कुमादिशुभैर्द्रव्यैस्तिलकं हरिमन्दिरम् ॥ १७ ॥
वामरेखास्थितो ब्रह्मा दक्षिणायामहं प्रिये।
हरिर्मध्यगतस्तस्मान्मध्यदेशं न लेपयेत् ॥ १८ ॥
न दर्पणे च जले तैले विलोक्य तिलकी भवेत्।
कृतमप्यकृतं वीक्ष्य दर्पणादौ तु यत्कृतम् ॥ १९ ॥
मुद्रादिधारणं कुर्यात् यथा स्थानं महेश्वरि।
आदौ ललाटदेशे तु गदां कौमोदिकीं न्यसेत् ॥ २० ॥
एकैकां विन्यसेद्वामपार्श्वे वामस्तने तथा।
बाहुयुग्मे तथैकैका द्वे द्वे वा भक्तिभावतः ॥ २१ ॥
उदरे पञ्च चक्राणि हृदि चक्रत्रयं न्यसेत्।
चक्रद्वयं ततो देवि दक्षपार्श्वे नियोजयेत् ॥ २२ ॥
त्रीणि दक्षस्तने युञ्ज्यात् द्वयं दक्षभुजे वहेत्।
दक्षकर्णस्य मूले तु चक्रयुग्मं प्रविन्यसेत् ॥ २३ ॥
कण्ठदेशे तथा वामबाहौ चक्रं सकृत्सकृत्।
एक एव भवेद्देवि शङ्खो वामकपोलगः ॥ २४ ॥

वामपार्श्वे तथा चैकः स्तने वामे द्वयं न्यसेत् ।
वामबाहौ त्रयं विद्याद्वामकर्णे द्वयं तथा ॥ २५ ॥
अधरेपि द्वयं न्यस्य शुभया गोपिकामृदा ।
दक्षबाहौ तथा चैकमेवं शङ्खान्प्रविन्यसेत् ॥ २६ ॥
पद्ममुद्राद्वयं वामे दक्षिणेपि तथा न्यसेत् ।
नाममुद्रा तु सर्वाङ्गे विभृयाद्भक्तितत्परः ॥ २७ ॥
अधृत्वा तुलसीमालामकृत्वायुधलाञ्छनम् ।
न सिद्धिमवाप्नुयात्कोपि सत्यमेव वचो मम ॥ २८ ॥

पार्वत्युवाच ॥

अधृत्वायुधलिङ्गानि यः कुर्याद्भजनादिकम् ।
न सिद्धिमवाप्नुयादत्र मनो मे मुह्यतेतराम् ॥ २९ ॥
रसरूपस्य कृष्णस्य न चास्त्ययुधधारणम् ।
कस्मात्कृष्णप्रिया साक्षात् बिभृयाद्वैष्णवायुधम् ॥ ३० ॥
यो यो यद्देवता भक्तः स बिभर्त्ति तदायुधम् ।
प्रयोजनं तु नास्त्येव तथाप्यादिश्यते त्वया ॥ ३१ ॥
तस्मान्मे संशयो जातो व्यथते हृदि शल्यवत् ।
तमुद्धर दयासिन्धो येन मे निश्चयो भवेत् ॥ ३२ ॥

शिव उवाच ॥

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
यस्य श्रवणमात्रेण मनो निःसंशयं भवेत् ॥ ३३ ॥
अद्वैतं भावयेन्नित्यं द्वैतभावं न भावयेत् ।
द्वैतभावनया नित्यं संसारो न निवर्त्तते ॥ ३४ ॥
अद्वैतभावनिष्णातः संसारं नैव पश्यति ।
तस्मादद्वैतभावेन यः पश्यति स पश्यति ॥ ३५ ॥
अयं ब्रह्मा हरिरयं रुद्रोयमिति वै भिदा ।
यः पश्यति महेशानि तस्य कालकृतं भयम् ॥ ३६ ॥

प्रपञ्चो ब्रह्मतन्मात्रं ब्रह्मादिस्थावरान्तकः।
द्वे ब्रह्मणीति वेदोक्तिर्लीलाभेदकृता भवेत् ॥ ३७ ॥
एकमेवाद्वितीयं चेत्यन्यथा तु विरुद्ध्यते।
तस्माद्‌द्वैतं तु देवेशि भ्रममात्रं न संशयः ॥ ३८ ॥
चन्द्रद्वैतं प्रतीयेत जलोपाधिप्रसङ्गतः।
जलोपाधिनिरासेन चन्द्राद्वैतं प्रकाशते ॥ ३९ ॥
ब्रह्मण्यपि तथा द्वैतमज्ञानेन विजृम्भितं।
अज्ञानस्य निरासे तु ब्रह्माद्वैतं यथा भवेत् ॥ ४० ॥
कः शिवः को हरिर्ब्रह्मा 'एकत्वमनुपश्यतः'।
तस्मादायुधलिङ्गानां धारणं न विरुध्यते ॥ ४१ ॥
आत्मश्रेयः प्रवर्त्तानां तामससर्गमाश्रिताः।
दोषा विनायकाश्चान्ये भ्रंशयन्ति मनःश्रिताः ॥ ४२ ॥
पलायन्ते च ते सर्वे वैष्णवायुधदर्शनात्।
जाज्वल्यमानज्वलनज्वालयेवाकुलीकृताः ॥ ४३ ॥
सत्त्वोपाधिगतं ब्रह्म विष्णुस्तस्यायुधान्यपि।
दृष्ट्वा दोषाः पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ ४४ ॥
अन्यथाविश्य चित्तं ते भजनं वारयन्ति हि।
तस्मादायुधलिङ्गानां धारणं सर्वथा प्रिये ॥ ४५ ॥
दृष्ट्वा बिभ्यन्ति पापानि चक्राङ्कितवपुर्धरं।
रजस्तमोमयाभावा न स्पृशन्ति कदाचन ॥ ४६ ॥
ये लोकरञ्जनार्थाय चक्राद्यायुधलाञ्छनाः।
पाखण्डिनः पतन्त्येते निरयेषु पुनः पुनः ॥ ४७ ॥
तस्माद्भजनाङ्गतया बिभृयादायुधानि तु।
भजन्सिद्धिमवाप्नोति पापदोषाद्यसंश्रितः ॥ ४८ ॥
द्वारपूजां ततः कृत्वा प्रविशेद्यागमन्दिरम्।
त्रिर्वामपार्ष्णिघातेन भौमांस्तालत्रयेण च ॥ ४९ ॥

अन्तरिक्षस्थितान् दिव्यदृष्ट्या भूतान् दिवि स्थितान् ।
उत्सार्य भूमिं सम्प्रार्थ्य सम्प्रोक्ष्य विधिनासनम् ॥ ५० ॥
आचम्य च शिखां बध्वा मूलमन्त्रेण देशिकः ।
स्त्रीवेषधारी सुभगः ताम्बूलवदनोऽर्चयेत् ॥ ५१ ॥
इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवगौरीसंवादे
अष्टचत्वारिंशं पटलम् ॥ ४८ ॥

## ॥ एकोनपञ्चाशत्तमम् ॥ ४९ ॥

शिव उवाच ॥

पृथिव्यादीनि भूतानि ब्रह्मणि प्रविलाप्य च ।
क्रमेणोत्पाद्य च पुनः पवित्राणि विभावयेत् ॥ १ ॥
भूतशुद्धिं विधायेत्थं प्राणान् संस्थापयेत्पुनः ।
पञ्चाशन्मातृका न्यस्य न्यसेत् ऋष्यादिकं ततः ॥ २ ॥
मूलमन्त्राक्षरन्यासं ततः कृत्वा समाहितः ।
ध्यायेत्स्वहृदयाम्भोजे कृष्णं कमललोचनम् ॥ ३ ॥
दिव्यरत्नकिरीटं तु मूर्ध्नि सञ्चिन्तयेत्प्रिये ।
अथवोष्णीषकं ध्यायेद्दाडिमीकुसुमप्रभम् ॥ ४ ॥
अनर्घ्यरत्नविलसन्मुक्ताकुण्डलमण्डितं ।
उष्णीषबद्धरत्नेन वर्त्तुलेनातिभास्वता ॥ ५ ॥
धिक्कुर्वन्तामिव प्रोद्यत्पूर्णचन्द्रस्य मण्डलम् ।
दिव्यमुक्ताफलस्रजा वेष्टितोष्णीषसुन्दरम् ॥ ६ ॥
क्षीरसागरकल्लोलशोभातिशयसुन्दरम् ।
न्यस्तरत्नप्रभोद्भासि वसानममलाम्बरम् ॥ ७ ॥
प्रांतपल्लवविभ्राजँल्लम्बिमुक्तालिभास्वरम् ।
दधानमुत्तरं वासो नवीनजलदप्रभम् ॥ ८ ॥

वलयाङ्गदकेयूरभ्राजमानकरद्वयम् ।
वैडूर्यमुक्तामाणिक्यहारभारविराजितम् ॥ ९ ॥
दिव्याङ्गरागसौरभ्याघ्राणमत्तमधुव्रतान् ।
लीलारविन्दभ्रमणैर्वारयन्तं मुहुर्मुहुः ॥ १० ॥
हीरालिदशनज्योत्स्नां विकिरन्तं स्मिताननात् ।
रसालभ्रूकुटीलीला (१)विह्वलीकृतवल्लभम् ॥ ११ ॥
नीलकुञ्चितसुस्निग्धालकशोभिमुखाम्बुजम् ।
पाटीरतिलकोद्भासिभालस्थलमनोहरम् ॥ १२ ॥
ताम्बूलपूर्णवदनं चाम्पेयद्युतिविग्रहम् ।
सदाषोडशवर्षीयं (२)ध्यायेत्कृष्णं हृदाम्बुजे ॥ १३ ॥
वामभागगतां तस्य स्वामिनीं संस्मरेत्प्रिये ।
कुञ्चितानङ्गकोदण्डभ्रूलताविभ्रमश्रियम् ॥ १४ ॥
रसानन्दाङ्कुरीभूतदशनावलिभासुरां ।
मीनाब्जखञ्जरीटोग्रगर्वनिर्नाशिलोचनां ॥ १५ ॥
तिलसूनलसन्नासानटन्मौक्तिकभूषणाम् ।
प्रान्तमुक्तावलिभ्राजद्भालभूषणभूषिताम् ॥ १६ ॥
मुखेन्दुमण्डलप्रोद्यत्कस्तूरीतिलकाङ्किताम् ।
(३)कपोलपालिविलुठन्मुक्तादाममनोहराम् ॥ १७ ॥
किंशुकाभांशुकद्युत्या प्रसर्पन्त्याधऊर्ध्वतः ।
सिन्दूरपूरितमिव कुर्वाणां वियदन्तरम् ॥ १८ ॥
सुवर्णरचनाचञ्चन्मुक्तारत्नविचित्रिताम् ।
दधानां नीलजलदश्यामलां कुचपट्टिकाम् ॥ १९ ॥
प्रान्तलम्बितमुक्तादिच्छटाविच्छुरितावनि ।
नीलचण्डातकं चारु दधानां स्वर्णसूत्रवत् ॥ २० ॥

(१) 'भ्रूकुटीभाव' इ० पाठः ।
(२) 'वार्षिक्यं इ० पाठः ।
(३) 'कपोलावलि' इ० पाठः ।

सुवर्णमुक्तामणिहारशोभां ग्रैवेयविद्योतितकम्बुकण्ठीम् ।
माणिक्यमञ्जीररणत्पदाब्जां श्रीस्वामिनीं चेतसि चिन्तयामि २१

ततस्तौ मानसैर्दिव्यैरुपचारैः प्रपूजयेत् ॥ २२ ॥
दत्त्वा नैवेद्यमीशानि वैश्वदेवं समाचरेत् ।
मूलाधारे महाकुण्डे चतुरस्रं विचिन्त्य च ॥ २३ ॥
चतुर्भिरात्मभिः क्लृप्तं संविदग्निसमुज्वलम् ।
जुहुत्यादाहुतीस्तत्र कामक्रोधादिकाः प्रिये ॥ २४ ॥
कामः क्रोधश्च लोभश्च मोहश्च मदमत्सरौ ।
अधर्मानृतमज्ञानं जुहुयाज्ज्ञानपावके ॥ २५ ॥
दग्धकामादिकलुषमात्मानं वासनात्मकम् ।
ध्यात्वा कृतक्षणः किञ्चिद्दत्वाचमनमेतयोः ॥ २६ ॥
भुञ्जानौ मनसा ध्यात्वा दत्त्वा चैव पुनर्जलम् ।
ताम्बूलवीटिकां दत्त्वा यथाशक्ति जपेद्धिया ॥ २७ ॥

अन्तःपूजां समाप्यैवं बहिःपूजां समारभेत् ।
पूजायन्त्रं लिखेत्पट्टे सौवर्णे राजते च वा ॥ २८ ॥
ताम्रे चापि महेशानि श्रीपर्णीचन्दनोद्भवे ।
षट्कोणमादौ निर्माय शक्तिं निर्भिद्य वह्निना ॥ २९ ॥
अष्टकोणं ततः कुर्यात् तत्प्रकारं शृणुष्व मे ।
चतुरस्रं लिखेदादौ ऋजुरेखं मनोहरम् ॥ ३० ॥
पूर्वरेखामूर्ध्वभागाद्रेखामाकृष्य पार्वति ।
मध्यभागान्महादेवि सन्धिभेदक्रमेण च ॥ ३१ ॥
पूर्वरेखामध्यभागात् रेखामाकृष्य पार्वति ।
मध्यभागान्महादेवि सन्धिभेदक्रमेण च ।
दक्षरेखां विनिर्भिद्य बहिः किञ्चित्प्रसारयेत् ।
दक्षरेखामूर्ध्वगतामाकृष्य परमेश्वरि ॥ ३२ ॥
प्रातीचिमानयेदाशां पूर्ववद्बहिरानयेत् ।

तामाकृष्योत्तरगतरेखां मूर्द्धानमानयेत् ॥ ३३ ॥
प्राग्वद्वहिः प्रसृमरां तामाकृष्य सुलोचने ।
पूर्वरेखोपरिस्थाप्य अग्रदेशेन मेलयेत् ॥ ३४ ॥
अष्टकोणमिदंकृत्वा वेष्टयेद्वृत्तरेखया ।
तल्लग्नमूलपत्रञ्च लिखेद्द्वादशयन्त्रकम् ॥ ३५ ॥
तस्योपरि लिखेद्देवि वृत्तं पूर्णेन्दुसन्निभम् ।
चतुरस्रत्रयं कुर्याच्चतुर्द्वारं मनोहरम् ॥ ३६ ॥




(१)

पूजापीठं समारोप्य पूजयेच्च ततः परम् ।
सामान्यविधिना देवि सामान्यार्घं प्रकल्पयेत् ॥ ३७ ॥
स्ववामभागे देवेशि जलेन चतुरस्रकं ।

(१) श्रीकृष्णप्रियाचार्योद्धारितमिदं यंत्रम् ।

कृत्वाभ्यर्च्याक्षतैरक्तैर्गन्धचन्दनलोलितैः ॥ ३८ ॥
तत्राधारं प्रतिष्ठाप्य पूजयेद्वह्निमण्डलम् ।
शङ्खं वान्यतरत्पात्रं तत्र संस्थाप्य सुन्दरि ॥ ३९ ॥
कलाभिः सहितं तत्र पूजयेत्सूर्यमण्डलं ।
तत्र शुद्धोदकं पूर्य चन्द्रगन्धादिमिश्रितम् ॥ ४० ॥
तत्र तीर्थान्यथावाह्य भित्वा सूर्यस्य मण्डलम् ।
अभिमन्त्र्याष्टधा मूलमन्त्रेण कुसुमादिभिः ॥ ४१ ॥
सुरभ्या चामृतीकृत्य शङ्खमत्स्यौ प्रदर्शयेत् ।
अनेनैव विधानेन पाद्यमर्घं प्रकल्पयेत् ॥ ४२ ॥
कांस्यजं मधुपर्कार्थं तथैवाचमनीयकम् ।
एवं पात्राणि संस्कृत्य पीठपूजां समारभेत् ॥ ४३ ॥
मण्डूकाधारशक्ती च कूर्मोऽनन्तवराहकौ ।
पृथिवी च जलं तेजो वायुराकाश एव च ॥ ४४ ॥
अहङ्कारो महत्तत्त्वं प्रकृतिः पुरुषस्तथा ।
रत्नद्वीपो ब्रह्मनालः कल्पद्रुमवनं ततः ॥ ४५ ॥
मन्दारोद्यानमीशानि पारिजातवनं ततः ।
हरिचन्दनमुद्यानं वैडूर्यद्रुमवाटिका ॥ ४६ ॥
दिव्यमुक्तावनं चैव प्रवालद्रुमवाटिका ।
सूर्यकान्तद्रुमोद्यानं पद्मरागवनं ततः ॥ ४७ ॥
महापद्मवनं चैव मणिगृहमनुत्तमम् ।
चतुःषष्टिमणिस्तम्भमण्डपस्तु ततः परम् ॥ ४८ ॥
रत्नसिंहासनं देवि तस्य पादचतुष्टये ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं वह्निदिक् क्रमात् ॥ ४९ ॥
एवं पीठार्चनं कृत्वा बध्वावाहनमुद्रिकाम् ।
स्वामिनीसहितं कृष्णं ध्यात्वानाकुलचेतसा ॥ ५० ॥
हृद्यागतमिति ध्यायन् सामरस्यमयं महः ।

नेत्रद्वारेण कुसुमं जलाक्षतसमन्वितम् ॥ ५१ ॥
यन्त्रराजोपरि क्षिप्त्वा प्राणन्यासं समाचरेत्।
आवाहनादिकां मुद्रां दर्शयेदथ पार्वति ॥ ५२ ॥
पाद्यपात्रोदकेनैव पाद्यं दद्याद्विचक्षणः।
अर्घ्यपात्रोदकेनैव दद्यादर्घ्यं च मूर्द्धनि ॥ ५३ ॥
मधुपर्कं ततः कृत्वा दद्यादाचमनीयकम्।
पुष्पतैलं ततो दत्वा दर्शयेन्मणिपादुकाम् ॥ ५४ ॥
स्नानं दिव्यजलैर्देवि वासः खचितरत्नकम्।
भूषणानि समर्प्याथ दिव्यगन्धार्पणं ततः ॥ ५५ ॥
चम्पकैः करवीरैश्च केतकैर्बकुलैरपि।
पङ्कजैर्जातिकुसुमैर्मालतीमोगरैरपि ॥ ५६ ॥
पूजयेद्यन्त्रराजस्थं धूपं दद्याद्यथाविधि।
निवेदयेत्ततो दीपमज्ञानध्वान्तनाशनम् ॥ ५७ ॥
दक्षिणे स्थापयेद्दीपं तैलदीपस्तु वामतः।
तयोरेकतरेणापि दीपं दद्याद्यथारुचि ॥ ५८ ॥
वामभागे तु देवेशि त्रिविधानर्चयेद्गुरून्।
करुणानन्दनाथश्च तरुणानन्द एव च ॥ ५९ ॥
भुवनानन्दनाथश्च त्रीनेतानूर्ध्वतो यजेत्।
द्वितीयायां तथा पङ्क्तौ तदधः परमेश्वरि ॥ ६० ॥
मदनं मोहनं चैव मन्द्रं चैव यजेत्ततः।
मन्दरं शङ्करं ताम्रं स्वगुरुं तद्गुरुं तथा ॥ ६१ ॥
षड्गुरूंश्च(१) महेशानि तदधः परिपूजयेत्।
साध्यसाधकयोर्मध्यदेशः प्राचीति गद्यते ॥ ६२ ॥
क्लृप्तप्राचीं समारभ्य सर्वत्र परिपूजयेत्।
षट्कोणेष्वर्चयेद्देवि सुन्दरीमिन्दिरां तथा ॥ ६३ ॥

---

(१) 'तद्गुरूंश्च' इ० पा०

आह्लादिनीमथानन्दामरुणां करुणावतीम् ।
श्यामानङ्गानङ्गरेखा सुरङ्गा व्युञ्जली रतिः ॥ ६४ ॥
बलाकी केसराङ्गी च वसुकोणे प्रपूजयेत् ।
ततो द्वादशपत्रेषु पूजनं प्रवदामि ते ॥ ६५ ॥
चत्वारिंशद्यूथमुख्यास्तिस्रस्तिस्र उदाहृताः ॥
प्रतिपत्रं प्रपूज्ये द्वे स्वामिनीनित्यपार्श्वगे ॥ ६६ ॥
मालती १ माधवी २ नन्दा ३ सुभद्रा ४ रुचिरानना ५ ।
पुष्पावती ६ रत्नरेखा ७ पद्मवृन्दा ८ विलासिनी ९ ॥ ६७ ॥
मन्दारमधुरा १० माध्वी ११ मञ्जुनादा १२ कलावती १३ ।
शृङ्गारलतिका १४ वृन्दा १५ प्रमोदा १६ मधुमालती १७ ॥ ६८ ॥
किशोरी १८ कुसुमानन्दा १९ रसकुल्या २० प्रभावती २१ ।
आशावती २२ विशाला च २३ निस्तुला २४ नीलकुन्तला २५ ॥ ६९ ॥
विद्युद्वर्णा २६ निम्ननाभिः २७ विरजस्का २८ विहारिणी २९ ।
रागिणी ३० रङ्गलतिका ३१ तथा रत्नावतीति च ३२ ॥ ७० ॥
पद्मावती ३३ पद्मगर्भा ३४ पद्मिनी च ३५ पिकस्वरा ३६ ।
बहिर्वृत्ते च कूटस्थं(१) व्यापकं नित्यमव्ययम् ।
अखण्डं सच्चिदानन्दं पूजयेत्परमेश्वरि ॥ ७१ ॥
कालमेघालिरुचिरं स्फुरन्माणिक्यकुण्डलम् ।
दिव्यरत्नकिरीटेन ज्वालयेव हविर्भुजम् ॥ ७२ ॥
मुक्ताहारं चतुर्बाहुमुद्यत्सूर्यारुणाम्बरम् ।
कोटिचन्द्रांशुसन्दोहप्रकाशपरमोज्ज्वलम् ॥ ७३ ॥
यदुन्मेषनिमेषाभ्यां ब्रह्माण्डविलोदयौ ।
जगद्भ्रमस्याधिष्ठानं रजतस्येव शुक्तिका ॥ ७४ ॥
अध्यारोपापवादाभ्यां विदुषां ज्ञानगोचरम् ।
यत्सत्तयाप्यसद्भाति नामरूपविकल्पितम् ॥ ७५ ॥

---

(१) "अक्षरस्वरूपवर्णनमिदम्" ।

उपेतं रमया पञ्चवार्षिक्या सप्तवार्षिकम् ।
नवरत्नविचित्रश्रीमालयालङ्कृतं परम् ॥ ७६ ॥
तद्बहिश्चतुरस्रे च प्रतिद्वारं सुरेश्वरि ।
पुरुषं प्रकृतिं कालं यज्ञं पूर्वादिवामतः ॥ ७७ ॥
तद्बहिश्चतुरस्रे च वासुदेवादिकान् यजेत् ।
किरीटकुण्डलधरान् जलदश्यामलाकृतीन् ॥ ७८ ॥
शङ्खचक्रगदापद्मभ्राजद्भुजचतुष्टयान् ।
तद्बहिश्चतुरस्रेपि पूजयेच्च ततः परम् ॥ ७९ ॥
अग्नेरीशानपर्यन्तं पञ्चभूतार्चनं क्रमात् ।
ईशानाद्वायुपर्यन्तं तन्मात्राः परिपूजयेत् ॥ ८० ॥
नैऋतेर्वायुपर्यन्तं पञ्चकर्मेन्द्रियाण्यपि ।
नैऋतादग्निपर्यन्तं पूजयेत् ज्ञानपञ्चकम् ॥ ८१ ॥
तद्बहिर्द्वारदेशेषु पूर्वादिक्रमतोऽर्चयेत् ।
इन्द्रमग्निं यमं चैव नैर्ऋतिं च जलेश्वरम् ॥ ८२ ॥
पवनं धनदं रुद्रमूर्ध्वं ब्रह्माणमर्चयेत् ।
अधस्ताच्च तथानन्तं तत्रैवास्त्राणि वाहनैः ॥ ८३ ॥
पूजयित्वा ततो देवि ततो नैवेद्यमर्पयेत् ।
भक्ष्यभोज्यान्नभरितं साधारं पात्रमुत्तमम् ॥ ८४ ॥
सामान्यसलिलैः प्रोक्ष्य दत्त्वा पुष्पाक्षतादिकम् ।
ततो धेन्वामृतीकृत्य मूलमन्त्रं ततोऽष्टधा ॥ ८५ ॥
पञ्चप्राणाहुतीर्दद्यात् ग्रासमुद्रां च दर्शयन् ।
जलपात्रं निवेद्याथ विसृयादन्तरे पटम् ॥ ८६ ॥
पौराणैः प्राकृतैः स्तोत्रैः स्तुत्वा भुञ्जानमीश्वरम् ।
ध्यात्वा तृप्तमिति ज्ञात्वा दूरीकृत्य पटात्तृप्तिम् ॥ ८७ ॥
दत्त्वाचमनमीशानि गन्धचूर्णैरनेकधा ।
स्नेहापनोदनं कृत्वा हस्तयोः परमेशितुः ॥ ८८ ॥

गण्डूषान् कारयेत्पश्चात् कर्पूरैर्मुखशोधनम् ।
हस्तपादौ च प्रक्षाल्य हस्तवासस्ततोऽर्चयेत् ॥ ८९ ॥
ततः प्रसन्नपूजान्ते लवङ्गैलेन्दुमिश्रिताम् ।
पूगाश्मचूर्णनिर्भिन्नां दद्येत्ताम्बूलवीटिकाम् । ९० ॥
सम्प्रार्थ्य पादुकायुग्मं निधाय पुरतः शिवे ।
पुनः सिंहासनगतं दीपैर्नीराजयेत्ततः ॥ ९१ ॥
ईषत्पक्वसुपिष्टेन कुर्याद्विदाङ्कुलोन्नतान् ।
चतुरस्रान् शुभाकारान् नव सप्ताथ पञ्च वा ॥ ९२ ॥
ततश्छत्रं चामरं च मायूरं व्यजनं तथा ।
दर्पणं च ततो दत्वा प्रदक्षिणनमस्क्रियाम् ॥ ९३ ॥
गीतनृत्यादिकं कृत्वा प्रीणयेत्परमेश्वरम् ।
इति ते कथितो देवि पूजाया विधिरुत्तमः(१) ॥ ९४ ॥
मनः प्रसादकाले तु कुर्यात्पूजां समाहितः ।
न कालनियमश्चात्र विद्यते परमेश्वरि ॥ ९५ ॥
इत्येतत्कथितं देवि त्वया पृष्टं सुलोचने ।
समासेन महेशानि किं भूयः श्रोतुमिच्छसि ॥ ९६ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे एकोनपञ्चाशत्तमं पटलम् ॥ ४९ ॥

## पञ्चाशत्तमं पटलम् ॥ ५० ॥

पार्वत्युवाच ॥

देव नाथ महेशान त्रिलोचन जगत्पते ।
पूजनस्यापि परमो विधिर्मे संश्रुतो महान् ॥ १ ॥
कूटस्थपूजने तत्र ध्यानमुक्तं त्वया स हि ।
व्यापकं नित्यमव्यक्तमखण्डमिति शङ्कर ॥ २ ॥

( १ ) 'इति ते कथिता देवि पूजाया विधिरुत्तमा' इ० पा०

अखण्डं व्यापकं तच्चेत्तदानन्दगतं न किम् ।
केवलानन्दलीलायामङ्गीकारो विरुध्यते ॥ ३ ॥
अनङ्गीकारे देवेश व्यापकत्वं विरुध्यते ।
ज्ञानरूपं तु कूटस्थमानन्दः पुरुषोत्तमः ॥ ४ ॥
मिथौ विरुद्धौ देवेश ज्ञानानन्दौ सुरेश्वर ।
भेदशून्यं यदा ज्ञानं जायते कृष्णयोषिताम् ॥ ५ ॥
रसस्तदा निवर्त्तेत निर्विशेषतया प्रभो ।
रसाभासकरं ज्ञानं कथं युज्येत तत्र हि ॥ ६ ॥
अखण्डव्यापकत्वादिधर्माणां तत्र का गतिः ।
एतज्जिज्ञासया देव मनो मे खिद्यतेतराम् ॥ ७ ॥

शिव उवाच ॥

साधु पृष्टं त्वया भद्रे जिज्ञासूनामभीप्सितम् ।
यच्छ्रुत्वा तत्क्षणादेव जिज्ञासा विनिवर्त्तते ॥ ८ ॥
कूटस्थं व्यापकं देवि व्याप्यं कार्यमिति स्थितम् ।
न कार्यं व्यापकं क्वापि न व्याप्यं कारणं भवेत् ॥ ९ ॥
अल्पवृत्ति भवेद्व्याप्यं व्यापकं तु तदन्यथा ।
व्याप्यव्यापकता चापि कूटस्थानन्दयोरपि ॥ १० ॥
विशेषं तत्र वक्ष्यामि शृणु त्वं कमलेक्षणे ।
कामांशकणिकाव्याप्तं कूटस्थं ज्ञानरूपकम् ॥ ११ ॥
अत एव श्रुतिशतैरानन्दमिति कीर्त्यते ।
कूटस्थमपरिच्छिन्नं विद्यते यद्यपि प्रिये ॥ १२ ॥
तिरोहितमिवानन्दे कुहां बिम्बमिवैन्दवम् ।
कामांशस्त्वपरिच्छिन्नमखण्डमचलं ध्रुवम् ॥ १३ ॥
सर्वतो व्याप्य देवेशि स्वरूपेण प्रकाशते ।
चिदानन्दमयीलीला भोक्ता कामांशभावजा ॥ १४ ॥
अनुभूता पुरा देवि निगमैः प्राकृते लये ।

तस्माद्गोलोकलीलेति प्रोच्यते वरवर्णिनि ॥ १५ ॥
पार्वत्युवाच ॥
कीदृशी सा भवेल्लीलानुभूता निगमैः कथम् ।
शब्दात्मकः कथं वेदो रसानुभवमर्हति ॥ १६ ॥
एतदाख्याहि भगवन् यदि योग्यं भवेन्मम ।
शिव उवाच ॥
शृणु पार्वति वक्ष्यामि तव प्रश्नमनुत्तमम् ॥ १७ ॥
सम्प्राप्ते प्रतिसञ्चरे न स विभुर्ब्रह्मा प्रजानां पति-
र्नोसूर्यादिग्रहर्क्षसागरसरिद्विश्वन्धराः(१) पर्वताः ।
वृक्षा औषधयस्तदा न विबुधा दैत्या मनुष्या दिशो
गन्धर्वा न च राक्षसा मुनिवरा यक्षा(२) न सिद्धोरगाः ॥१८॥
नष्टं स्थावरजङ्गमं विधिकृतं शिष्टं न किञ्चित्तदा
यः शिष्टः स विभुर्विनाशरहितः कूटस्थ एकः पुमान् ।
वेदा विस्मितचेतसोप्यथ विभुं तेऽन्तश्चरा ब्रह्मवत्
सञ्चित्याथ हृदास्तुवन् रहसि ते यं वाङ्मनोगोचरम् ॥१९॥
वेदा ऊचुः ॥(३)
एकस्त्वमात्मा पुरुषः पुराणो नित्योऽव्ययोऽनन्तगुणो निरीहः ।
क्वचित्स्थितः क्वापि गतो न विद्महे तं त्वां परं संशरणं गता वयम् २०

(१) 'विश्वंभराः' इ० पा०
(२) 'साध्या' इ० पा०
(३) यथा-बृहद्वामनपुराणेऽपि भृग्वादीन् प्रति ब्रह्मणो वाक्यानि-
षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा ।
नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥ १ ॥
तथापि न मया प्राप्तास्तासां वै पादरेणवः ।
श्रुत्वैतद्ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥ २ ॥
भृगुरुवाच--
वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि ।
सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥ ३ ॥

तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत् ।
गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥ ४ ॥
ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् ।
कथां सर्वश्रुतीनां च रहस्यं परमाद्भुतम् ॥ ५ ॥

ब्रह्मोवाच ।

न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल ।
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समा क्वचित् ॥ ६ ॥
प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा ।
शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे ॥ ७ ॥
ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः ।
निर्गुणोनाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥ ८ ॥
अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् ।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥ ९ ॥
चिरं स्तुत्या तु सन्तुष्टः परोक्षं प्राह तान् गिरः ।
तुष्टोस्मि ब्रूत भो प्राज्ञा वरं यन्मनसीप्सितम् ॥ १० ॥

श्रुतय ऊचुः ।

नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ।
सगुणं ब्रह्म सर्वदं वस्तुबुद्धिर्न तेषु नः ॥ ११ ॥
ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् ।
वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥ १२ ॥
आनन्दमात्रमिति यद्वदन्तीह पुराविदः ।
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ १३ ॥
श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् ।
केवलानुभवानन्दमात्रमक्षरमव्ययम् ॥ १४ ॥
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः ।
मनोरमणीयकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ १५ ॥
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः ।
रत्नधातुमयः श्रीमान् सुपक्षिगणसंकुलः ॥ १६ ॥
यत्रनिर्मलपानीया कालिन्दी सरितां वरा ।
रत्नबद्धोभयतटी हंसपद्मालिसङ्कुला ॥ १७ ॥
नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् ।
तत्कदम्बकमध्यस्थं किशोराकृतिरच्युतं ॥ १८ ॥

दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः ।
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ १६ ॥
श्रुतय ऊचुः ।
कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयः ॥ २० ॥
यथा तल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
भजंति रन्मणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ २१ ॥
श्रीभगवानुवाच ।
दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः ।
मयानुमोदिताः सम्यक् सत्यो भवितुमर्हति ॥ २२ ॥
आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यमे ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ २३ ॥
पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले ।
वृन्दावने भविष्यामि प्रेयान् वो रासमंण्डले ॥ २४ ॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोधिकम् ।
मयि सम्प्राप्य सर्वा हि कृतकृत्या भविष्यथ ॥ २५ ॥
श्रुत्वैतच्चिन्तयन्तस्ते रूपं भगवतश्चिरम् ।
उक्तं कालं समासाद्य गोप्यो भूत्वा हरिं गताः ॥ २६ ॥
स्त्रियो वा पुरुषो वापि भर्तृभावेन केशवम् ।
हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशयः ॥ २७ ॥
तासां दरजांस्येव नित्ये वृन्दावने भुवि ।
तत्प्राप्य तत्कामनया यान्त्यहो गोपिकागतिम् ॥ २८ ॥
नन्दगोपव्रजस्त्रीणामतः पादरजो मया ।
वाञ्छितं पुत्रकाः सम्यक् यतस्ताः श्रुतयः किल ॥ २९ ॥
श्रुत्वैतदृषयो वाक्यं ब्रह्मणः परमेष्ठिनः ।
सर्वात्मना प्रसन्नाः स्युः श्रीगोपीजनवल्लभे ॥ ३० ॥
उक्तं च सनत्कुमारसंहितायां एकत्रिंशे पटले-
श्रीमहादेव उवाच ॥
कच्चिद्वः कुशलं विप्रा ब्रह्मणो विष्णुदेवयोः ।
ध्यानयोगौ तपो वेदाः कुशलाः सन्ति शाश्वताः ॥ १ ॥
यदर्थमागता यूयं तद्वदामि परिस्फुटम् ।
एवं तु ऋषयो गुह्यं न विख्यातं मया क्वचित् ॥ २ ॥

इदं च कथ्यते गोप्यं गुह्याद्गुह्यतरं महत् ।
श्रूयतां मुनिशार्दूलाः कृष्णधामसमुत्सुकाः ॥ ३ ॥
वृन्दावनं महापुण्यं सर्वपावनपावनम् ।
सर्वलोकबहिर्भूतं निराधारं परिस्फुरत् ॥ ४ ॥
शुद्धं वस्त्रैश्च संवीतं प्रियं तं सुपरिस्थितं ।
तत्र संक्रीडते युग्मं ललितादिसखीवृतम् ॥ ५ ॥
पुनश्चोक्तं सनत्कुमारसंहितायां द्वाविंशत्तमे पटले ।
सदाशिव उवाच ॥
वृन्दावनस्याह्वयाद्यं वृन्दानन्दनमुच्यते ।
द्वितीये करणैर्जातं मथुरामण्डलं परम् ॥ ६ ॥
तत्समो नास्ति तीर्थोन्यो न चेद्वैकुण्ठ एव च ।
किमन्यत्तीर्थगणना अन्धकूपसमा मुने ॥ ७ ॥
मथुरामण्डलं रम्यं सर्वतीर्थोत्तमोत्तमम् ।
तत्र वृन्दावनं रम्यं पञ्चयोजनविस्तृतं ॥ ८ ॥
प्राणत्यागं च मर्त्यास्तत्त्वज्ञास्तत्त्वदर्शिनः ।
कुर्वन्ति ये वने पुण्ये प्राप्नुवन्ति पदं शुभम् ॥ ९ ॥
उत्तरे दक्षिणे भागे योजनद्वयमुच्यते ।
यत्र स्मरणमात्रेण सिद्धिर्नूनं भवेद्ध्रुवम् ॥ १० ॥
भूमौ च जीवसिद्ध्यर्थं रचितं वृन्दावनस्थलं ।
अन्यभूमौ न सहसा यथा वृन्दावने वरे ॥ ११ ॥
जायते तत्पदप्राप्तिरचिरेण सुखेन च ।
सर्वं संत्यज्य गार्हस्थं सर्वतीर्थगणं तथा ॥ १२ ॥
(१)गुह्याद्गुह्यतरं गुह्यं परमानन्दकारणम् ।
अत्यद्भुतरहस्यानां रहस्यं परमं शिवम् ॥ १३ ॥
दुर्लभानां च परमं दुर्लभं सर्वमोहनम् ।
सर्वशक्तिमयं देवि सर्वशास्त्रेषु गोपितम् ॥ १४ ॥
सात्वतं स्थानमूर्द्धन्यं विष्णोरेकान्तवल्लभम् ।
नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम् ॥ १५ ॥
पूर्णब्रह्मसुखैश्वर्यं नित्यमानन्दमव्ययम् ।
वैकुण्ठादि तदंशांशं स्वयं वृन्दावनं भुवि ॥ १६ ॥
गोलोकैश्वर्यंयत्किाचद्गोकुले तत्प्रतिष्ठितम् ।

(१) वाराहसंहितायाः ।

वैकुण्ठवैभवं यच्च द्वारकायां प्रकाशितम् ॥ १७ ॥
यद्ब्रह्मपरमैश्वर्यं नित्यवृन्दावनाश्रयम् ।
तद्देवि माथुरं मध्ये वृन्दावनविशेषतः ॥ १८ ॥
स्त्री लक्ष्मीः पुरुषो विष्णुस्तदंशांशौ बभूवतुः ।
तत्र किशोरवयसा नित्यमानन्द विग्रहः ॥ १९ ॥
अनन्तकोटिब्रह्माण्डे अनन्तत्रिगुणाश्रये ।
तत्कलाकोटिकोट्यंशाः ब्रह्मविष्णुमहेश्वराः ॥ २० ॥

उक्तं च गोतमीतन्त्रे ।

तत्सर्वोपरि गोलोकस्तद्गौलोकोपरि स्वयं ।
विहरेत्परमानन्दो गोविन्दोतुलनायकः ॥ २१ ॥

उक्तं वाराहसंहितायाम् ।

दिव्यवनेषु यद्रूपं नित्यं वृन्दावनेश्वरं ।
व्रजेन्द्रं सात्वतैश्वर्यं व्रजप्राणैकवल्लभम् ॥ २३ ॥
परं धामपरं रूपं द्विभुजं गोकुलेश्वरम् ।
वृन्दावनेश्वरं ध्यायेन्निर्गुणस्यैककारणम् ॥ २४ ॥
नखेन्दुकिरणश्रेणीपूर्णब्रह्मैककारणम् ।
केचिद्वदन्ति तद्रश्मि ब्रह्म चिद्रूपमव्ययम् ॥ २५ ॥
योगीन्द्रैरपि दुष्प्राप्यं सत्यं पुंसामगोचरं ।
यदंशांशं महाविष्णुं प्रवदन्ति मनीषिणः ॥ २६ ॥
उक्तं च सनत्कुमारसंहितायां पञ्चत्रिंशत्तमे पटले ।

सदाशिव उवाच ॥

नन्दस्य गेहे सञ्जातं कृष्णांशं च तुरीयकम् ।
वसुदेवेन यद्दृष्टमाराधितोऽन्यसंज्ञया ॥ २७ ॥
यथा चतुर्भुजो विष्णुस्तथा कोऽप्यपरः पुमान् ।
सोऽपि चतुर्भुजध्येयः इति मोहेन मोहितः ॥ २८ ॥
द्रोणो नन्दो महाकीर्त्तिर्यशोदा सा यशस्विनी ।
तयोर्योगे च सञ्जातः कृष्णांशः (१)कृष्णरूपधृक् ॥ २९ ॥
चक्रतुस्तन्महारासं मुनिविस्मयकारकम् ।
ब्रह्मविष्णुमहेशाद्यैर्दुर्विज्ञं देवतागणैः ॥ ३० ॥ इति ॥

(१) अत एव कृष्णः पशुपांगजः गोपीसुतश्चेति कथ्यते ।

कर्माणि तानीह गुणाश्च ते प्रभो (१)नष्टानि सर्वाण्यधुना न सन्ति ।
क्वचिद्धतानि(२) क्व गता हि जन्तवो ये यज्ञभुग्ब्रह्मपुरोगमास्ते ।२१।
न सन्ति ते क्वापि पुरन्दरादयो येऽस्मत्प्रदत्तानि हवींष्यदन् क्रतौ ।
कामान् मनोज्ञान् हि ददत्यनारतं नाशं गतास्तेपि न विद्महे क्वचित्२२
ब्रह्मेशनारायणनामधेयः करोषि सृष्टिं हरणं च पालनम् ।
स्वयं गुणातीतगुणैस्त्रिभिस्त्वं मनुष्यदैत्यान् विबुधान् विधासि॥२३॥

नमः कूटस्थरूपाय नमोऽनन्ताय वेधसे ।
व्याप्यव्यापकरूपाय वाच्यवाचकरूपिणे ॥ २४ ॥
नमः शिवाय शान्ताय निर्गुणाय गुणात्मने ।
सदसद्व्यतिरिक्ताय (३)सदसद्व्यक्तिहेतवे ।
ई(४)क्षामवर्त्तितजगद्व्यापाराय रते नमः ॥ २५ ॥
त्वय्युदितं त्वयि लीनं जगदेतद्धेम्नि कुण्डलं यद्वत् ।
आदावन्ते यत्सत्त तत्सन्मध्येऽप्यसत्तया सद्वत् ॥ २६ ॥
तस्मिंस्त्वयि वचनानामेषा रचना विभाति नो नाथ
दीपविधिर्दिवसेश्वरबिम्बालोकाय निष्फलो यद्वत् ॥२७॥
तस्मात्प्रसीद भगवन् नोऽनुग्रहमुररीकुरु ।
त्वदुद्भवा वयं वेदास्त्वन्निष्ठास्त्वां कथं स्तुमः ॥ २८ ॥

स्तुवन्त एवं भगवन्तमव्ययं स्थिता हि वेदाः (५)स्थगितार्द्रमानसाः।
महालये प्राकृतसंज्ञके हि ते बभूव गीर्व्योम्नि तदा मनोहरा ॥२९॥
शृणुध्वं विभोर्वाक्यमेतन्मनोज्ञं वृणुध्वं वरं मत्तु वेदाः प्रसन्नात् ।
प्रसन्ने परे मय्यलभ्यं किमस्ति नचापीह लोके परत्रापि शश्वत्॥३०॥

---

( १ ) 'प्रभोऽनन्तानि' इ० पा०
( २ ) 'क्वचिद्गतानि' इ० पा०
( ३ ) 'सदसद्व्यक्तिरूपाय' इ० पा०
( ४ ) 'इच्छा' इ० पा०
( ५ ) 'वेदाश्चकितार्द्रमानसाः' इ० पा०

वेदा ऊचुः ।

वरः कः(१)परो वाणि योस्माभिरीड्यो न चैतत्परं किञ्चिदस्तीह लोके।
यदस्तीह किञ्चित्परं तत्त्वमेव प्रसन्नोसि चेद्दर्शनं नो विधेहि ॥३१॥
अस्माभिर्वर्ण्यते नित्यं तव रूपाण्यनेकशः ।
ज्ञातान्यपि विशेषेण दृष्टानि बहुशोपि हि ॥ ३२ ॥
आविर्भवन्ति लीयन्ते निर्गुणे त्वयि केवले ।
निर्गुणातीतमात्मानं त्वदीयं दर्शयाद्य नः ॥ ३३ ॥
एवं प्रार्थयमानेषु वेदेषु बहुधा तदा ।
आविर्बभूव सहसा लीला गोलोकविश्रुता ॥ ३४ ॥
प्रादुर्बभूवातिमनोहरा सरित् स्फुरन्महारत्नतटाच्छवालुका(२) ।
सुवर्णपङ्केरुहशोभमाना गभीरपीयूषज(३)लोर्मिमालिनी ॥ ३५ ॥
वृन्दावनं तद्वरवृक्षवृन्दैर्युतं सचिन्तामणिकल्पपादपैः ।
शालैस्तमालैस्तरलैः कदम्बैर्जम्बाम्रप्लक्षैर्वटपिप्पलाद्यैः ॥३६॥
कपित्थबिल्वामलनालिकेरैरश्वत्थपूगैः कदलैर्वनैश्च ।
युतं मनोहारिभिरन्यवृक्षैरशोकपाटीरसुपारिजातैः ॥ ३७ ॥
मनोज्ञकुञ्जैर्बहुभिः परीतं गोगोपगोपीनिलयैरुपेतम् ।
आनन्दसन्दोहमिवोद्गिरद्भिर्मरुद्भिरानर्तितपल्लवद्रुमम् ।३८।
प्रादुर्भूतं वनं तत्र नानापक्षिगणाकुलम् ।
नातिदूरे वर्तमानो गोवर्धननगोत्तमः ॥ ३९ ॥
सर्वर्तुगुणसम्पन्नो नानाधातुविचित्रितः ।
स्फुरत्सुवर्णशिखरः सुधानिर्झरशीतलः ।
वीक्ष्य तं विस्मयं प्राप्ताः स्वप्नोऽयं वा मनोभ्रमः ॥ ४० ॥
पारावताः कलरवाःकलराजहंसाः कारण्डवा रथपदाह्वयकोकिलाद्याः

(१) 'कोऽपरो' इ० पा०
(२) 'अम्बुवालुका' इ० पा०
(३) 'जवोर्मि' इ० पा०

सारङ्गबर्हणमनोहरपक्षिपूगास्तस्थुर्वने हरिगणा इव तं स्तुवन्तः॥४१॥
घनश्यामरूपं प्रफुल्लाब्जनेत्रं किरीटाङ्गदैरुल्लसद्भ्रूकपोलम्(१) ।
सुनासं सुवक्त्रं रणद्वेणुहस्तं सुबर्हावतंसं तमापीतवस्त्रम् ॥ ४२ ॥
तमानन्दरूपे वने नन्दसूनुं तदानन्दरूपं प्रभुं तेऽभ्यपश्यन् ।
महावल्लवीयूथमध्ये चरन्तं त्रिभङ्गाकृतिभ्राजमानस्वरूपम् ॥४३॥
कोट्यर्कप्रभया विराजिततनुं कोटीन्दुदर्पापहं
कोटिस्फूर्जदनङ्गरङ्गवपुषं कोट्याब्धिगाम्भीर्यकम् ।
तं लावण्यनिधिं विलोक्य सहसा पार्श्वस्थया राधया
जुष्टं गोपिकया निरन्तरमतिप्रेम्णाथ ते विस्मिताः ॥४४॥
काचिद्गोपी सचमरकरा वीजयन्ती स्वकान्तं
काचिच्चाग्रे करयुगपुटं कृत्य तस्थौ निरीहा ।
काचित् स्थाल्यां मणिगणमयीं कृत्य दीपावलिं तां
राधाकृष्णप्रतिमुखगता कुर्वती दीपकृत्यम् ॥ ४५ ॥
काचित्कृष्णमुखं निरीक्ष्य सुतरां चित्रार्पितेवाभवत्
काचित्कृष्णकरं निगृह्य हृदये संस्थाप्य तस्थौ मुदा ।
काचिच्चांघ्रियुगं निगृह्य सदयं स्वेमूर्ध्न्यधारयन्मुदा
काचिन्नृत्यति कृष्णकीर्तनपरा धृत्वा करे तालिकाम् ॥४६॥
एवं रासरसोन्मत्तं गोपिकायूथमध्यगं ।
वीक्ष्य वृन्दावने कृष्णं प्रणेमुः श्रुतयः समम् ॥ ४७ ॥
ततः प्रसन्नस्ता आह ब्रूत मत्तो वरं शुभम् ।
भवद्भिर्दृष्टमित्येव धाम गोलोकशब्दितम् ॥ ४८ ॥

श्रुतय ऊचुः ॥

न वृणीमो वरं किञ्चित्कालग्रस्तं विनश्वरं ।
यदि दास्यसि चेन्नाथ तदा नोनुग्रहं कुरु ॥ ४९ ॥
विलसन्ति यथा गोप्यस्त्वत्प्रिया भवता सह ।

(१) किरीटाङ्गदाढ्यं लस० इति पाठः ।

जायते च तथास्माकं रिरंसाकुलितं मनः ॥ ५० ॥
सम्पादय तथा काममस्माकं हृदयस्थितम् ।
कोटिकन्दर्पसुभगं वीक्ष्य स्थातुं न शक्नुमः ॥ ५१ ॥
निशम्य वेदगदितं किशोराकृतिरच्युतः ।
शृण्वन्तीनां च गोपीनां प्राह प्रहासिताननः ॥ ५२ ॥
कामोऽयं निगमाः सत्यं खपुष्पमिव दुर्लभः ।
न प्राप्तुं शक्नुयात्कोपि स्वयं पुरुषबुद्धिभाक् ॥ ५३ ॥
प्रियारूपं स्वमात्मानं जानन्मां प्रियमित्यथ ।
अत्युग्रविरहज्वालाज्वलिताकृतिरेति माम् ॥ ५४ ॥
नाद्यावधि ममैवायं लोको गोलोकसंज्ञितः ।
प्राप्तः केनापि निगमा मदुक्तेनापि वर्त्मना ॥ ५५ ॥
तथापि वरदानार्थं प्रोक्ताः स्थ वरदेन मे ।
तदपि स्यान्न मे वाक्यं व्यलीकं कर्हिचित्कचित् ॥ ५६ ॥
यदा चतुर्मुखो ब्रह्मा पद्मकल्पे भविष्यति ।
तत्सृष्टलोकमध्ये तु माथुरं मण्डलं शुभम् ॥ ५७ ॥
तत्र वृन्दावनं दिव्यं भविष्यति रसाश्रयम् ।
तत्र गोलोकलीलेयं सर्वथावतरिष्यति ॥ ५८ ॥
मूलरूपं च मे तत्र स्वप्रियाभिरुदेष्यति ।
भवन्तोपि विशेषेण पुरुषत्वं विहाय च ॥ ५९ ॥
कामिनीभावमापन्ना भविष्यथ (१)व्रजाङ्गनाः ।
तत्रापि मुरलीनादश्रवणानन्दमोहिताः ॥ ६० ॥
अतिक्रम्य स्वमर्यादां रासमण्डलमागताः ।
भविष्यथ तदा यूयं पूर्णकामा न संशयः ॥ ६१ ॥
इत्युक्त्वान्तर्दधे साक्षात्किशोराकृतिरच्युतः ।
ततः कतिपये काले पद्मकल्पे चतुर्मुखे ॥ ६२ ॥

(१) 'वरांगनाः' इ० पा०

जाते तस्य व्यतिक्रान्ते परार्द्धे प्रथमे ततः ।
द्वितीयस्यापि तस्यैव मध्ये लीलेयमागता ॥ ६३ ॥
द्विषट्सहस्रभेदेन स्वात्मानं च विभज्य ते ।
कामिनीभावमापन्ना रासमण्डलमध्यगाः ॥ ६४ ॥
कृष्णप्रियाप्रसङ्गेन कृतकृत्या बभूविरे ।
इति ते सर्वमाख्यातं यत्पृष्टोऽहं सुलोचने ॥ ६५ ॥
कूटस्थहृदयं साक्षात् गोलोक इति विश्रुतः ।
तत्र क्रीडति गोपीभिः कामांशः पुरुषोत्तमः ॥ ६६ ॥
आविर्भूतः सदैवायं कूटस्थे परमात्मनि ।
तिरोहितं तु चैतन्यं वर्त्तते पुरुषोत्तमे(१) ॥ ६७ ॥
रसलीलारसाम्भोधेः पारं गन्तुं क ईश्वरः ।
दिङ्मात्रदर्शनं विद्धि यन्मया वर्णितं शिवे ॥ ६८ ॥

इति श्रीमाहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे गोलोकवर्णने पञ्चाशत्तमं पटलम् ॥ ५० ॥

## अथैकपञ्चाशत्तमं पटलम् ॥ ५१ ॥

शिव उवाच ॥

अथान्यत्ते प्रवक्ष्यामि प्रकारं शृणु पार्वति ।
यस्य श्रवणमात्रेण जायते भावना शुभा ॥ १ ॥
भूमयो दश ते प्रोक्ता मया च वरवर्णिनि ।
पञ्चमी शयनीयाख्या तस्यां शेते निशास्वपि ॥ २ ॥
स्फूर्जद्रत्नमयूखचित्रविलसत्स्वर्णाच्छदण्डोद्धृत-
भ्राजन्मण्डपमण्डिते परिलसद्दिव्योपधानैः सुखे ।
प्रान्तस्फूर्जदनेकमौक्तिकमणिभ्राजत्पटीप्रावृते

(१) 'पुरुषोत्तमः' इ० पा०

दिव्यामोदमनःप्रमोदसुमनःसौरभ्यसम्भाविते ॥ ३ ॥
तल्पे तल्पसुखास्पदे परिलसन्मुक्तावितानोत्तमे
हंसीतूलचिते स्फुरन्मणिगणप्रोच्चैः प्रदीपोज्वले ।
स्वामिन्या परया विलासविविधक्रीडारसव्यग्रया
रात्रौ निर्भरमन्मथोत्सवसुखं शेते रसात्मा प्रभुः ॥ ४ ॥
वीणामृदङ्गमधुरध्वनिगीतनादैः
क्रीडागृहं च परितः परिवृत्तमानाः ।
सख्यः प्रियं परिचरन्ति निशावसाने
प्राणप्रियेशपरिबोधनकर्मदक्षाः ॥ ५ ॥
कनकाङ्गी मञ्जुमुखी कलकण्ठी स्मितानना ।
आनन्दवल्लरी वृन्दा मित्रवृन्दा विशोकिनी ॥ ६ ॥
चित्रवस्त्रा विचित्राङ्गी चन्द्रघण्टा विभावरी ।
मञ्जुमोदा विधुमुखी रत्नदन्ती मदालसा ॥ ७ ॥
लावण्यलहरी लीलावती लावण्यमन्थरा ।
ललिताङ्गी कामवती पुष्पिणी पुष्पदन्तिका ॥ ८ ॥
हसंतिका हंसगतिः पुष्पवेणी मरुल्लता ।
मुदिता मोदिनी श्यामा तथा मुक्तावती रतिः ॥ ९ ॥
हारिणी हरिणी हंसी विहंसी हंसकुण्डला ।
अरुणाङ्गी रङ्गरङ्गा रसरङ्गा कुमुद्वती ॥ १० ॥
कुङ्कुमाङ्गी कुन्दहासा चन्द्रहासा चरित्रिणी ।
आनन्दमञ्जरी मन्द्रा पद्मवृन्दा ज्वलन्तिका ॥ ११ ॥
कुन्ददन्ती रत्नकला जयिनी स्वर्णमेखला ।
पुलिंदिना हेमवर्णा हरिणाक्षी रतिप्रिया ॥ १२ ॥
पद्मकोशा भृङ्गरवा गायनी मदमन्थरा ।
एकषष्टिमिताः सख्यो (१)नियुक्ता बोधकर्मणि ॥ १३ ॥

(१) 'ख्याताः' इ० पा०

प्रातः प्रोत्थितमायतादिकमलप्रोत्तम्भितभ्रूलतं
जृम्भामञ्जुमुखारविन्दविलसद्बिम्बाधरोद्यास्मितम्।
निद्रान्ताघूर्णमानं समधिगतसखीवृन्दमालोकयन्तं।
दृष्ट्या वातेरिताम्भोरुहमुकुललसच्छोभया निस्तुलाङ्गम् १४
स्फूर्जत्काञ्चनमण्डितामलमणिप्रोद्भासिते पात्रके।
श्रीमन्मङ्गलवस्तुनि प्रविलसच्छ्रीरत्नदीपैः शुभैः।
सख्यस्ता मृदुमञ्जुकङ्कणरणत्कारान् (१)समातन्विताः।
कान्ताः कान्तमनङ्गकोटिरुचिरं नीराजयन्ति प्रियम् ॥१५॥
तदनु झटिति रागादागतानन्दमञ्ज-
दर्पणघकरसरोजे व्यादधत्(२) दर्पणं च।
प्रियसुभगमुखाब्जं दर्शनीयं तवेदं
(३)असितकणकृतश्रि रम्यमालोकयेति ॥ १६ ॥
ह्लादिनीनिहितरत्नपादुके पादपङ्कजयुगे निधाय च।
रत्नपीठमुपसाद्यसुन्दरं दन्तधावनविधिं करोति सः ॥१७॥
दन्तधावनविधानयोजिते मन्द्रिणीति सुरसेति विश्रुते।
मन्द्रिणी धृतवती शुभं जलं हस्तवस्त्रममलं तथेतरा ॥१८॥
ततो लविङ्गकर्पूरचूर्णैलापूगमिश्रितम्।
उपतिष्ठति सत्पात्रे धृत्वा मदनमेखला ॥ १९ ॥
ताम्बूलमास्वाद्य ततः प्रसन्नः सखीजनप्रार्थनयातिकामम्।
आरुह्य रत्नोज्वलपादुके द्वे स्नानगृहस्याभिमुखः प्रयाति ॥२०॥
रत्नमौक्तिकवितानमण्डितं धूपितं स्वगरुधूमराजिभिः।
कल्पवृक्षकुसुमालिसौरभोद्भ्रान्तभृङ्गमुखरीकृताम्बरम् ॥ २१ ॥
सज्जसर्वपरिचारिकागणं नृत्यमानबहुनर्त्तकीगणम्।

---

(१) 'समातन्वती' इ० पा०
(२) 'व्यादधानात्मदर्शं' इ० पा०
(३) 'सुकृतिजनकृतश्रि' इ० पा०

उल्लसद्विविधवाद्यगायनोज्जृम्भितप्रतिनिनादमञ्जुलम् ॥ २२ ॥
स्तम्भलग्नमणिपुत्रिकागणं स्नानमण्डपमुपेत्य भास्वरम् ।
रत्नपीठमुपनीय दर्शितं भामया समधितिष्ठति प्रभुः ॥ २३ ॥
उत्तार्य भूषणकलापमथो मनोज्ञं
तत्तत्प्रियाकरयुगान्युपलम्भयित्वा ।
नीराजितः स्वममदोत्तमभूषणोद्यत्
कान्तिच्छटाभिरिव दीपशतैर्विभाति ॥ २४ ॥
यक्षकर्दम (१)काश्मीररजनीचूर्णमिश्रितैः ।
उद्वर्त्तनं चकारेला गन्धद्रव्यैर्मनोहरैः ॥ २५ ॥
आनीय मणिपात्रस्थं गन्धतैलं मनोजवा ।
करोत्यभ्यङ्गमङ्गेषु स्वभावसुरभिष्वपि ॥ २६ ॥
मुक्तारत्नविचित्रहेमकलशैरापीड्यमानैः शरत्
पूर्णेन्दूज्ज्वलहस्तिकुंभशिखरारूढैः सुधास्पर्द्धिभिः ।
कस्तूरीद्रवयक्षकर्दममहासौरभ्यसम्भावितैः
सख्यः पुष्पगणाधिवासितजलैः संस्नापयन्ति प्रियम् ॥२७॥
स्मेरानना विधुकला वल्गुनादा विहङ्गमा ।
(२)सङ्गमाला स्मरानन्दा विश्वानन्द सुकुण्डला ॥ २८ ॥
तेजोवती हेमगर्भा तरुणी तपनावती ।
एताः प्राधान्यतः प्रोक्ता द्वादश स्नानकर्मणि ॥ २९ ॥
गोफेनस्वच्छशुचिना वाससाङ्गं सुकुण्डला ।
प्रियस्याह्लादजननी (३)प्रोच्छयत्यतिकोमलम् ॥ ३० ॥
स्नानवासः परित्यज्य तेजोवत्या निवेदितम् ।

---

(१) 'कर्पूरागरुकस्तूरी कुंकुमं चन्दनं तथा । महासुगन्धिरित्युक्तो नामतो यक्षकर्दमः' इति धन्वन्तरिः ।

(२) 'मंगलामाला' इ० पा०

(३) 'प्रोत्थयति' इ० पा०

काश्मीररागरुचिरं कटिवस्त्रं बिभर्त्यसौ ॥ ३१ ॥
पादुकायुगमारुह्य मन्दं मन्दं परः प्रभुः ।
भूषामण्डपमायाति प्रियाभिः परिवेष्टितः ॥ ३२ ॥
रत्नराजितसुवर्णकुट्टिमे स्फूर्जदंशुनिवहैस्तथोर्ध्वगैः ।
शक्रचापरचनाचितान्तरे(१)मण्डपे स्फटिकपीठमाश्रितः॥३३॥
केशावलिं कङ्कतिकामुखेन संशोध्यमाना ललिता प्रियस्य ।
निर्दग्धकालागरुधूपधूपैः सुवासयत्यत्र सरोजगन्धा ॥ ३४ ॥
सिन्दूरपूरारुणिमानमुच्चैर्वहन्महोष्णीष मनङ्गरेखा ।
प्रान्तेषु मुक्तागुणगुम्फितं तदा व्यापारयामास तदुत्तमाङ्गे ॥३५॥
सुवर्णरचितं प्रान्तं मुक्ताजालपरिस्कृतं ।
पद्मरागं मध्यनीलमुष्णीषाग्रे बबन्ध सा ॥ ३६ ॥
अनेकमुक्तामणिराजमाने निजेच्छया स्वीकृतहंसकुण्डले ।
तडित्प्रभापुञ्जमिवोद्वमन्ती(२) श्रुतिद्वयस्याभरणं चकार॥३७॥
नवरत्नमयीं मालां ग्रैवेयाभरणं तथा ।
हृदम्बुजे लम्बमानं चतुष्काभरणं तथा ॥ ३८ ॥
बाह्वोः केयूरयुगलं कटकाङ्गदमुद्रिकाः ।
उन्मिषद्रत्नरचितं काञ्चीसूत्रं महद्घनम् ॥ ३९ ॥
निर्यद्भूषांशुनिचयैः किर्मीरितमिवोत्तमम् ।
निःश्वासहारिवसनं श्वेतं स्निग्धं मनोहरं ॥ ४० ॥
नवीनजलदस्निग्धमुत्तरीयं सुशोभनम् ।
अनर्घ्यमौक्तिकमणिभ्राजत्प्रान्तचतुष्टयम् ॥ ४१ ॥
अनेकदिव्याभरणान्यङ्गे प्रियतमस्य हि ।
रचयामास शृङ्गारचमत्कृतिमुपेयुषः ॥ ४२ ॥
इति सज्जितशृङ्गारो गायद्भिः परितो वृतः ।

(१) 'चिताम्बरे'
(२) 'उद्वहन्ती' इ० पा०

सखीवृन्दैः वाद्यहस्तैर्भोगभूमिं प्रयाति सः ॥ ४३ ॥
पाकशालास्वधिकृता ललिताद्यादिकाः प्रियाः ।
तिष्ठन्ति यत्र सुभगाः किशोराकृतयः शतम् ॥ ४४ ॥
स्वर्णपीठं समास्थाय तिष्ठति पुरुषोत्तमः ।
सौवर्णविमलं पात्रं साधारमति विस्तृतम् ॥ ४५ ॥
परितस्तस्य सौवर्णपात्राणां च सहस्रकम् ।
स्थाप्यन्ते तेषु ते भोगाः स्निग्धा हृद्याः पृथग्विधाः ॥४६॥
जातीकोरकपुञ्जविभ्रमकरं स्वन्नं च मध्यस्थितं
वामे ऽस्याढकमुद्गमोदनमथो प्राज्यं घृतं माहिषम् ।
सूपापूपहयङ्गवीनविलसत्पक्वान्नरम्भाफलै
र्मुक्तालड्डुकपूलिकाशिखरिणीदध्यक्तमाषान्नकैः ॥ ४७ ॥
वह्न्युष्णशर्करयुतं मणिपात्रसंस्थं
दुग्धं च पायसमथोघृतशर्कराक्तम् ।
पूर्णेन्दुचन्द्रकाचितं मधुराम्लतिक्त
नानारसाम्ररसमाक्षिकगोस्तनीकम् ॥ ४८ ॥
कुष्माण्डवृन्ताकपटोलबिम्बीशिम्बीसुकोशातकिसूरणाद्यैः ।
मृद्वग्नितापेन सुपाचितैर्युतं हिङ्ग्वामरीचादिसुवासितैर्भृशम् ॥४९॥
चतुर्विधान्नं परिवेश्यमाणमानन्दमानन्दमयोपि भुङ्क्ते ।
प्रियाः समस्ता अपि तं समन्तात्प्रहासयन्त्यो बुभुजुः स्वपात्रैः॥५०॥
भोजनान्ते ततः कृष्णं मणिपीठे तु दक्षिणे ।
शुद्धाङ्गी स्वर्णभृङ्गारजलेनाचमनं ददौ ॥ ५१ ॥
स्नेहापनोदनार्थाय गन्धचूर्णं शुभं ददौ ।
दन्तकाष्ठं च कर्पूरशशाङ्कशकलास्तथा ॥ ५२ ॥
गण्डूषाचमनीयान्ते केसराङ्गी तु वीटिकाम् ।
पादुकायुगमारुह्य पञ्चवाद्यपुरःसरम् ॥ ५३ ॥
पीठान्तरगतं कृष्णं परमानन्दविग्रहम् ।

स्वामिनीप्रमुखाः सर्वाः मुक्ताभिः समवाकिरन् ॥ ५४ ॥

मुक्ताविचित्रचतुरस्रसुवर्णपात्रे
दूर्वादधिप्रभृतिमाङ्गलिकोपचारैः ।
आरोपितैः स्थिरशिखैः शुभरत्नदीपै-
र्नीराजयन्ति निजनाथमकामकामम् ॥ ५५ ॥

शृङ्गारहास्याद्भुतमोदमानः प्रियानुरोधेन ततः परेशः ।
विश्रम्य तत्रैव मुहूर्तमात्रं प्रयाति भूमिं शयनीयसंज्ञाम् ॥ ५६ ॥

मृदुवाद्यादिगीतेन गीयमानः प्रियाजनैः ।
चित्रया वीजितः शेते मृदुव्यजनहस्तया ॥ ५७ ॥

सुप्तोत्थितः परिजनैः सह नृत्यभूमौ
सिंहासने विमलरत्नमयूखचित्रे ।
स्थित्वा प्रियाविलसनादिकनृत्तगीतं
पश्यंस्तुतोष यदपि स्वयमेव तोषः ॥ ५८ ॥

अखण्डितशरच्चन्द्रसमयाप(१)हारमण्डलम् ।
मिहिला छत्रमाधत्त रत्नदण्डरुचोज्ज्वलम् ॥ ५९ ॥

व्यजनं पादुके चारु चामरे दर्पणादिकम् ।
दधानाः परिसेवन्ते पूर्वोद्दिष्टाः परात्परम् ॥ ६० ॥

ततो विमानप्रवरं नाम्ना चित्रध्वजं महत् ।
सखीसहस्रैरास्थाय गतश्चान्द्रमसं वनम् ॥ ६१ ॥

कदाचिन्नीलविपिने कदाचित्पुष्पदन्तके ।
कदाचिदानन्दवने हेमकूटेऽपि कर्हिचित् ॥ ६२ ॥

कदाचिच्चारकूटाख्ये गारुडे नीलपर्वते ।
कदाचित्पुष्परागाद्रौ माणिक्याद्रावपि क्वचित् ॥ ६३ ॥

मन्दारविपिने क्वापि पारिजातवनान्तरे ।

---

(१) 'अपस्मार' इ० पा०

हरिचन्दनकोद्याने वैदूर्यविपिने(१) क्वचित् ॥ ६४ ॥
महामुक्तावने क्वापि प्रवालोद्यान एव च ।
पद्मरागवनोद्याने महापद्मवने तथा ॥ ६५ ॥
कदाचिच्चम्पकवने क्वचित्कल्पद्रुकानने ।
अनेकविधलीलाभिः क्रीडते पुरुषोत्तमः ।
ततश्चान्द्रमसादेत्य विमानेन महौजसा ॥ ६६ ॥
महाद्वारपुरोवर्त्ति मण्डपेपि स्थितः (२)क्षणः ।
चतुःषष्टिमहास्तम्भां मूलभूमिं समाश्रितः ॥ ६७ ॥
रत्नसिंहासनगतं तदैवेच्छाविमोहिताः ।
स्वामिनीप्रमुखाः कृष्णं प्रार्थयामासुरुत्सुकाः ॥ ६८ ॥
तत्तु सर्वं मया प्रोक्तं पुरा ते वरवर्णिनि ।
अतः परं प्रवक्ष्यामि शृणुष्वैकाग्रमानसा ॥ ६९ ॥
यथानेन प्रकारेण प्रियाः परिचरन्ति तम् ।
तथैव काश्चन व्यग्राः स्वामिनीसेवनादिषु ॥ ७० ॥
नीराजनस्नानवस्त्रगन्धमाल्यविभूषणैः ।
शयनासनताम्बूलैः सख्यः परिचरन्ति ताम् ॥ ७१ ॥
द्विषट्सहस्रसंख्याताः याः सख्यस्ते मयोदिताः ।
षट्सहस्राणि कृष्णस्य परिचर्यापराणि हि ॥ ७२ ॥
स्वामिन्याः षट्सहस्राणि वर्त्तन्ते परिकर्मणि ।
तासां यूथानि देवेशि चत्वारिंशन्मितानि हि ॥ ७३ ॥
तासां सौधानि दिव्यानि सहस्राणीति द्वादश ।
एकैकं योजनार्द्धेनायामविस्तारसंयुतं ॥ ७४ ॥
एकैकस्याः प्रियायास्तु मन्दिरे मन्दिरे प्रिये ।
शतं शतं प्रवर्त्तन्ते सेवार्थं परिचारिकाः ॥ ७५ ॥
प्रियासौधबहिर्भागे तत्क्रमेणैव भामिनि ।

(१) वैडूर्यमणिकानने' इ० पा० (२) 'कृतक्षणः'

परिचारिकावर्गसमं मन्दिराणि पृथक् पृथक् ॥ ७६ ॥
योजनार्द्धप्रमाणेन किञ्चिदप्यधिकेन च ।
विस्तारयामयुक्तानि त्रिभौमानि द्युमन्ति च ॥ ७७ ॥
प्रियासौधानि दिव्यानि नानावर्णाकृतीनि च ।
चन्द्रामृतोद्गारवन्ति चन्द्रकान्तोद्भवानि तु ॥ ७८ ॥
कानि कृष्णानि रक्तानि कृष्णरक्तानि कान्यपि ।
कानिचिद्रक्तकृष्णानि श्वेतरक्तानि कानिचित् ॥ ७९ ॥
श्वेतानि चैव रक्तानि रक्तश्वेतानि कान्यपि ।
एवं धूम्राणि कृष्णानि धूम्रकृष्णानि कानिचित् ॥ ८० ॥
कृष्णधूम्राणि देवेशि सर्वसौधेष्वयं क्रमः ।
एकैकमन्दिरे देवि मज्जनागारमायतम् ॥ ८१ ॥
नानोपकरणैर्युक्तं दिव्यरत्नवितानकं ।
भूषागृहं तथैकत्र महाकुट्टिममण्डपम् ॥ ८२ ॥
भूषागृहस्य पूर्वे तु गन्धालेपस्य मन्दिरम् ।
नानागन्धविभेदादिसमृद्धं बहुयुक्तिकं ॥ ८३ ॥
महानसं तु देवेशि वर्त्तते वह्निकोणगम् ।
ईशान्ये तु सभासद्म दिव्यासनविराजितम् ॥ ८४ ॥

एवं कृष्णप्रियासौधस्थितिरुक्ता तवानघे ।
द्रवीभूतरसः कृष्णः प्रियाभावात्मकस्तु यः ॥ ८५ ॥
आविर्भूय प्रियावृन्दैः क्रीडते प्रतिमन्दिरम् ।
स्वामिनीमन्दिरेपि च घनीभूतस्तु केवलम् ॥ ८६ ॥
न स्वामिनीं विना कृष्णः न स्वामिनी कृष्णं विना ।
न तिष्ठति क्षणं देवि ह्यन्यथा लुप्यते रसः ॥ ८७ ॥
अत्र ये मणयो मुक्ताः कुसुमानिलतांघ्रिपाः ।
विद्रुमस्वर्णरजतनानाभेदाश्च धातवः ॥ ८८ ॥
सूर्याचन्द्रमसौ देवि पशुपक्षिसमीरणाः ।

भक्ष्यभोज्यलेह्यचोष्यपेयभेदा ह्यनेकशः ॥ ८९ ॥
भोक्तृभोग्यविभागश्च ज्ञातृज्ञेयादिकं तथा ।
रस एवेति विज्ञाय न मुह्यति कदाचन ॥ ९० ॥
न कालगणना तत्र वर्त्तते परमेश्वरि ।
न सूर्यचन्द्रताराणामुदयास्तादिकं भवेत् ॥ ९१ ॥
उदयास्तादिभावाश्च प्रतीयन्ते तथापि हि ।
लीलासमयभेदार्थमेवं जानीहि पार्वति ॥ ९२ ॥
एतन्मयोदितं साध्वि त्वया सम्यक् श्रुतं किल ।
न वाच्यं कस्यचिद्देवि सर्वोपनिषदां रहः ॥ ९३ ॥
एतन्माहेश्वरं तन्त्रं सर्वतन्त्रोत्तमोत्तमम् ।
रसनिर्णयसम्पन्नं समाधौ यच्छ्रुतं मया ॥ ९४ ॥
मया(१) प्रकटितं तेऽद्य पुत्रयोरपि गोपितम् ।
वासना एव तुष्यन्ति श्रुत्वा साध्वीं कथामिमाम् ॥ ९५ ॥
अल्पाः कूपा विवर्द्धन्ते ज्योत्स्नया किं समुद्रवत् ।
हरिणा एव तुष्यन्ति गानं श्रुत्वा न गर्दभाः ॥ ९६ ॥
तस्मात्परीक्ष्य वक्तव्यं सहसा न प्रकाशयेत् ।
श्रद्धधानाय शान्ताय कुलीनाय महेश्वरि ॥ ९७ ॥
विनीताय कृतज्ञाय क्रियाशुद्धाय दीयताम् ।
श्रद्धाभक्तिविहीनाय कृतघ्नाय दुरात्मने ॥ ९८ ॥
गुरुभक्तिविहीनाय हेतुवादरताय च ।
असम्भावितचित्ताय विपरीतार्थवादिने ॥ ९९ ॥
वृथार्थैकप्रवर्त्ताय वेदशास्त्रार्थमानिने ।
दाम्भिकायातिदुष्टाय विषयाक्रान्तचेतसे ॥ १०० ॥
न देयः सर्वथा देवि तन्त्रार्थः परमाद्भुतः ।

---

(१) अनेन ज्ञायतेऽस्य तंत्रस्यातिगोप्यत्वान्नाममात्रमपि न क्वापि ६४ तंत्रेषु प्राकट्यं हंसमाहेश्वरतंत्रं तु भिन्नविषयकमिति मे मतम् ।

तन्नास्ति त्रिषु लोकेषु यद्दत्त्वाप्यनृणी भवेत् ॥ १०१ ॥
प्रभोर्देवस्य सर्वस्वं मयेदं ते प्रकाशितम् ।
अतः परं तु देवेशि ज्ञातव्यं नावशिष्यते ॥ १०२ ॥
तस्मादिदं सुविज्ञाय रहस्यं कृष्णयोषिताम् ।
स्वयमेव परानन्दनिमग्ना भव सुन्दरि ॥ १०३ ॥
अतः परं तु देवेशि पृष्टव्यं नैव किञ्चन ।
नित्यं ध्यायामि यच्चित्ते तदेतत्ते निवेदितम् ॥ १०४ ॥
इत्युक्त्वा च तदा शम्भुस्तूर्ष्णींभूत्वा च संस्थितः ।
वर्णमानमहालीलासमुद्रे मन आदधे ॥ १०५ ॥
स्तिमितोर्मिरिवाम्भोधिः पुलकाङ्कः सुलोचनः ।
बभूव देवदेवेशः कृपासिन्धुरुमापतिः ॥ १०६ ॥
एवमानन्दसन्दोहनिमग्नं वीक्ष्य शङ्करम् ।
सर्वोपचारविधिना पूजयामास पार्वती ॥ १०७ ॥
दण्डवत्प्रणनामैषा (१)कृतार्थास्मीति वादिनी ।
तुष्टाव शङ्करं भूयः कृपानिधिमनुत्तमम् ॥ १०८ ॥
त्वं देव सर्वविद्यानामुपदेष्टा गुरुः स्वयम् ।
त्वयि भक्तिवतामेव मन्त्रयन्त्रादिसिध्यतु ॥ १०९ ॥
इत्युक्त्वा पार्वती चित्ते लीलामाधाय वर्णिताम् ।
अवाप परमानन्दं हर्षाश्रुपुलकाङ्किता ॥ ११० ॥

इति श्रीमन्माहेश्वरतन्त्रे उत्तरखण्डे शिवोमासंवादे
एकपञ्चाशत्तमं पटलम् ॥ ५१ ॥

---

आदितः श्लोकानां समष्ट्यंकाः ॥ ३०६० ॥

श्रीमन्माहेश्वरं तन्त्रं समाप्तम् ।

---

(१) दण्डवत्प्रणतामैषा० इति पा० ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| भुजंगमीबद्ध | भुजंगमाबद्ध | १ | १३ |
| संसारवारिधितरणे | संसारवार्धितरण | १ | १५ |
| मार्त्ताण्ड | मार्तण्ड | १ | १७ |
| ब्रह्म | ब्रह्मा | २ | ३ |
| घातकः | घाततः | २ | २१ |
| प्रिथतमा | प्रियतमा | २ | २५ |
| फलैषिणा | फलैषणा | ३ | ५ |
| महेश्वरिः | महेश्वरि | ४ | ६ |
| जंघयोश्चातलं । त्तरं ज्योतींष्यस्योरः स्थले० | जंघयोपरि सुतलं वितलं कट्युत्तरं प्रिये ॥ ४९ ॥ कटिमध्येऽतलमस्ति मर्त्यलोको दरे तथा। पार्श्वदेशे भुवर्लोकस्तदूर्ध्वं च स्वरादयः ।५०। ज्योतींष्यस्यो० | ५ | १ |
| पक्ष्माणि | पक्ष्मणि | ५ | ७ |
| चक्षूंषि | चक्षुषि | ५ | ७ |
| परिकीर्तिताः(तः) | परिकीर्तितः | ५ | १३ |
| इयत्तया परिच्छेद्यं अ, | इयत्तयाऽपरिच्छेद्यम | ५ | १५ |
| किन्तु | किन्तु | ६ | २३ |
| महद्भुतं | महाद्भुतम | ७ | ३ |
| च पुराहितम् | वपुराहितम् | ७ | १० |
| दैवत्तं | दैवतं | ८ | ३ |
| सस्मितं | सस्मितं | ८ | १४ |
| वितथ्य | वितथ | ९ | २ |
| चिते | चित्ते | ९ | १२ |
| व वेद्मि | न वेद्मि | ९ | १३ |
| सुप्त्वा | सुप्ता | १३ | २४ |
| देवसुर | देवासुर | १४ | ६ |
| विगृहीत | निगृहीत | १७ | २१ |
| शिशुमारेण | शिशुमारेण | १८ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| माकारा | मकरा | १८ | २३ |
| पकाशं परमो | प्रकाशपरमो | १९ | ५ |
| अन्यंनि | अन्यान्नि | १९ | १३ |
| यद्मया | पद्मया | २० | १५ |
| ज्ञानदुर्लभाः | ज्ञानदुर्बलाः | २४ | १८ |
| आयास्यान्ते | आयास्यन्ते | २४ | १९ |
| भवति | भवतीं | २४ | २५ |
| कचन | केचन | २६ | १५ |
| कृतार्थोस्मी | कृतार्थास्मी | २६ | १ |
| तारयेतुम्बी | तारयेत्तुम्बी | २७ | १४ |
| पदं इत्यादि | पदम् | २७ | ५ |
| प्राहा | प्राह | २८ | ५ |
| लौकिकं | लौकिके | ३० | २३ |
| हितम् | हि तत् | ३० | २३ |
| शाश्वतीः | शाश्वती | ३१ | १० |
| वायूपरामे देवेशि | वायूपशमने देवि | ३२ | १५ |
| निज धामं | निजं धाम | ३९ | १६ |
| सवेदात्मोप० | स वेदात्मोपदेवोऽपि बहुस्या-मित्यमन्यत | ३६ | ११ |
| तटात्तुङ्गकुटिभैः | तटोत्तुङ्गकुट्टिमैः | ३९ | २१ |
| परं परं परां | परंपरां परां | ४० | ११ |
| भृतां नतदुम्रुवाम् | भृतोन्नतभ्रुवाम् | ४० | ११ |
| पङ्कजाध्रिः | पङ्कजाध्रि | ४२ | १ |
| गुणोरुः | गुणोरु | ४२ | २ |
| मत्यम्बुचतुस्राव वेदिकां | मत्यम्ब चतुरस्रा च वेदिका। | ४२ | २१ |
| लधुध्वनि | लघुध्वनि | ४३ | २४ |
| कुण्डलश्रीः | कुण्डलश्रि | ४३ | २७ |
| चञ्चुभाषा | चञ्चुभासा | ४४ | २ |
| परे कूलं | परे कूले | ४४ | ६ |
| नानावृक्ष | नानावृक्षै | ४४ | ११ |
| यत्रः | यत्र | ४५ | १६ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| प्रियोः प्रियासि | प्रियाः प्रियोऽसि | ४६ | १ |
| दुःकामो विना दुःखं दर्शनं | दुःखकामो विना दुःखदर्शनं | ४६ | १८ |
| वरणत्मिका | वरणात्मिका | ४७ | ९ |
| तद्वासनावसि | तद्वासनावासि | ४७ | १२ |
| प्रपस्यति | प्रपश्यति | ४७ | १३ |
| भित्यन्तरगत | भित्यन्तर्गत | ४८ | १ |
| आत्ममित्ति | आत्मभित्ति | ४८ | ३ |
| शिथिलीयन्ते | शिथिलायन्ते | ४८ | ६ |
| सद्को | सद्को | ४८ | १५ |
| सुनास | सुनासः | ४८ | ३३ |
| शूरस्तस्मा | शूर तस्मा | ५२ | २२ |
| मूढा | मूढ | ५४ | १८ |
| तपो कु० | तपः कु० | ५७ | १९ |
| शतुर्दश | चतुर्दश | ६१ | ७ |
| आलिङ्गत्यालिङ्गमानः | आलिङ्गत्यालिग्यमानः | ६१ | १८ |
| कामं तयो | कामस्तयो | ६२ | ७ |
| गोपिसुतैः | गोपसुतैः | ६२ | ९ |
| रम्याः | रम्या | ६३ | ८ |
| चेतसीम् | चेतसाम् | ६५ | ३ |
| सकृतनिश्चयात् | कृतनिश्चयात् | ६५ | २५ |
| कृत्कृते | सत्कृते | ६६ | १६ |
| प्रेयान् ना | प्रेयाना | ६७ | ८ |
| मन्दांम् | मन्दान् | ६९ | १ |
| तासुः | तासु | ७० | १७ |
| विरुद्धेद | विरुद्धेता | ७३ | ३ |
| मन्तर्भूते | अन्तर्भूते | ७६ | १७ |
| समुद्राह्ये | समुद्राह्य | ७९ | १ |
| देवश | देवेश | ८० | १२ |
| पंदेशकः | पदेशकः | ८० | १२ |
| सिद्धिनूणां | सिद्धिर्नृणां | ८० | १६ |
| मीश्वरः | मीश्वर | ८० | १९ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| तत्रोपदिष्टा | तत्रोपदेष्टा | ८१ | २ |
| चापरान् | नापरान् | ८१ | ४ |
| तेषां | येषां | ८१ | ५ |
| येन | तेन | ८१ | ६ |
| वल्लभाम् | वल्लभा | ८२ | २ |
| तदन्यद्विभावनम् | तदनन्यविभावनम् | ८२ | ३ |
| पातिव्रत्य | पतिव्रता | ८२ | ९ |
| वल्लभां | वल्लभा | ८२ | १० |
| गुरोमुखात | गुरोर्मुखात | ८२ | २५ |
| कृष्णवल्लभाम | कृष्णवल्लभा | ८२ | २६ |
| शंकापका | शङ्कापङ्का | ८३ | २३ |
| भगवान् | भगवन् | ८६ | ३ |
| वृष्ठ्या | वृष्ट्या | ८७ | २२ |
| शरीमूल | शरीरमूल | ८९ | ५ |
| भूतो | मृतो | ९० | १७ |
| वास्तव | वास्तवं | ९२ | २६ |
| बौध | बौद्ध | ९४ | १ |
| बौध | बौद्ध | ९४ | ४ |
| नग्नश्च | नग्नाश्च | ९४ | २२ |
| प्रत्ववावस्य | प्रत्यवायस्य | ९५ | १३ |
| अन्तोन्यथा | अतोऽन्यथा | ९५ | २० |
| सह: | सह | ९६ | ११ |
| सम्भूता | संभृता | ९६ | १२ |
| योनीषु | योनिषु | ९६ | १८ |
| साक्षीतया | साक्षितया | ९९ | २३ |
| न्यवेदयेत् | न्यवेदयत् | १०० | १३ |
| परमात्मान् | परात्मन् | १०१ | ३ |
| क्षुभ्यतते | क्षुभ्यतेत | १०१ | ४ |
| शल्यमहा | शल्यं महा | १०१ | १० |
| लोकनैः | लोकने | १०१ | ११ |
| मरमा | परमा | १०१ | १७ |
| अन्तो | अतो | १०६ | २२ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| नामेरभूत् | नाभेरभूत् | ११२ | १० |
| काम्त्या | कात्म्या | ११३ | २० |
| वकुण्ठ | वैकुण्ठे | ११६ | १२ |
| वृक्षभ्य | वृक्षेभ्य | ११६ | १५ |
| निहत्येवं | निहत्यैवं | ११७ | ७ |
| वैरच्यं | वैरंच्यं | ११७ | १० |
| नैवं | नैव | ११८ | १७ |
| विलंभात्मा | विप्रलंभात्मा | ११९ | ११ |
| सवभावा | सर्वभावा | १२० | २३ |
| पौनःपौन्येन | पौनःपुन्येन | १२२ | १३ |
| त्रविध्यं | त्रैविध्यं | १२२ | २५ |
| सशतेन | तच्छतेन | १२३ | ९ |
| स्वायंभुवः | स्वायंभुव | १२४ | १३ |
| पौनःपौन्येन | पौनःपुन्येन | १२५ | १० |
| निवृत्तय | निवृत्तये | १२८ | ८ |
| प्रातचक्रतुः | प्रतिचक्रतुः | १२८ | १२ |
| यस्मात्व | यस्मात्वं | १२८ | १६ |
| कर्त्तव्यं | कर्त्तव्यः | १३१ | ५ |
| साध्ययं | साध्यं | १३२ | १२ |
| यथाज्येष्ठं | यथाज्येष्ठ | १३४ | ३ |
| दिनेऽष्वेवं | दिनेष्वेवं | १३६ | ५ |
| भक्तारक्षार्थमुदूधृतः | भक्तरक्षार्थमुद्यतः | १३६ | १० |
| तत्प्रियाया अभवत्कामो | तत्प्रियायाभवत्कामो | १४१ | ६ |
| प्रियाः | प्रिया | १४१ | ९ |
| गताः | गता | १४१ | १० |
| मनि | मनी | १४१ | १४ |
| योगत्वे | योग्यत्वे | १४४ | २ |
| मोहेर्ति | मोहेति | ११४ | ९ |
| तथा | तथा | १४५ | ३ |
| वतन्ती परामात्मनः | वतरन्ती परात्मनः | १४५ | ६ |
| मंनुस्मृतः | मंनुः स्मृतः | १४६ | ४ |
| संप्लवः | संप्लवम् | १४६ | १५ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| कान्यापि | कान्यपि | १४६ | १७ |
| मिच्छन्ति | मिच्छा ते | १४७ | २ |
| शक्तिर्नि | शक्ति नि | १४७ | १६ |
| पार्णि | पार्ष्णि | १४८ | ६ |
| बह | बहा | १४९ | ८ |
| नोस्तुङ्ग | नोत्तुङ्ग | १५० | ५ |
| ।वाशि | विशि | १५० | ९ |
| मूर्द्धनिः | मूर्द्धनि | १५२ | १२ |
| विहारस्य | विहारस्थं | १५२ | १९ |
| घाता | घ्राता | १५३ | १ |
| काष्ट | काष्ठ | १५३ | १५ |
| मिनं | मिणं | १५८ | ३ |
| इच्युते | इत्युच्यते | १५८ | ११ |
| भागो स्म | भागोऽस्म | १५९ | २४ |
| निन्द्रि | निद्रि | १६३ | १ |
| स्वेकाग्र | स्वैकाग्र | १६६ | १९ |
| पक्षात्थ | पक्षोत्थ | १६८ | २६ |
| परमात्मा | परात्मा | १७० | २२ |
| पश्यमि | पश्यामि | १७१ | १३ |
| वधिः | वधि | १७२ | १ |
| माहितः | मोहितः | १७२ | ६ |
| मीश्वरीणां | मीश्वराणां | १७३ | ९ |
| चित्तो | चेतो | १७३ | १९ |
| प्राप्यं | प्राप्य | १७६ | १७ |
| स्वेप्न | स्वप्ने | १७६ | १८ |
| राश्रितं | राश्रितं | १७६ | २० |
| देह | देहा | १७६ | २३ |
| रुचिराकृतिः | रुचिराकृति | १७६ | २३ |
| इदन्ताहंविशादाय अहन्तास्राष्टिकल्पिता | इदन्ताहविरादाय अहन्तास्राचि- कल्पितम् | १७७ | २३ |
| स्वोंबिता | स्वायिता | १७९ | २३ |
| यात्र | यत्र | १८० | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पंक्तिः |
|---|---|---|---|
| सर्वादिको | सार्वदिको | १८३ | २५ |
| सवदत्य | संवदत्य | १८४ | १० |
| श्चतुष्क | श्चतुष्कं | १८५ | १६ |
| चालनः | चालनैः | १८७ | २४ |
| वीणायाशाव० | वीणयाशाव० | १८८ | १६ |
| तदि | तदे | १९३ | २० |
| मित्याप | मित्यपि | १९६ | २६ |
| शृण्वन्ती | शृण्वती | १९३ | २२ |
| त्वय्येम | त्वय्येव | १९५ | २६ |
| स्वामिन्यो | स्वामिन्या | २०० | १४ |
| प्रिया | प्रियाः | २०० | २३ |
| मनोदितः | मयोदितः | २०१ | १ |
| विषादेषु | विवादेषु | २०९ | २१ |
| प्राणवल्लभा | प्राणाधिवल्लभा | २०९ | २३ |
| भ्बिन | भ्बि | २०७ | २७ |
| परिघा | परिघा | २११ | १५ |
| च्चेः | च्चैः | २११ | २५ |
| विद्युद्ध | विद्युद्घ | २१२ | २५ |
| वेहि | वेह | २२० | २० |
| सिन्धुं | सिन्धु | २२१ | १२ |
| रस | रसः | २२९ | १५ |
| रसास्त्रवा | रसस्रवा | २३० | १७ |
| तीहि | तीह | २३५ | १२ |
| सिद्धिमवाप्नु | सिद्धिमाप्नु | २३८ | ८ |
| ,, | ,, | ,, | १० |
| प्रवर्त्तानां | प्रवृत्तानां | २३९ | ११ |
| वितिग्रहम् | तिविग्रहम् | २४१ | ९ |
| भांश्रु | भांशु | २४१ | १९ |
| जुहुत्या | जुहुया | २४२ | ७ |
| समाप्येवं | समाप्यैवं | २४२ | १४ |
| व्युञ्जली | व्यञ्जुली | २४६ | २ |
| थत्स | यत्स | ,, | २५ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पङ्क्तिः |
| --- | --- | --- | --- |
| नैर्ऋति | निर्ऋति | २४७ | १४ |
| त्वयासहि | त्वयाऽस्य हि | २४८ | २३ |
| मध्यस्थं | मध्यस्थः | २५१ | ३२ |
| क्षतिरच्युतं | क्षतिरच्युतः | २५१ | ३२ |
| ब्रूत कि | ब्रूत किं | २५२ | १ |
| तत्लोक | त्वल्लोक | " | ६ |
| सृष्टयथ | सृष्टयर्थ | " | ११ |
| गोलोकैश्वर्य | गोलोकैश्वर्यं | २५३ | ३१ |
| पुलिंदिना | पुलिंदिनी | २६० | २३ |
| भृङ्गरवा | भृङ्गरावा | " | २४ |

प्राप्तिस्थानम्—

चौखम्बा संस्कृत पुस्तकालय,

बनारस सिटी।

१६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता । न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता । सम्पूर्णः । ( वेदान्त वि० ११ ) रु० २—८

११७ जन्मपत्रदीपकः । सोदाहरण-सटिप्पण-हिन्दीटीकासहितः । ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः । ( ज्यौ. वि. ५ ) रु० ०—८

११८ गोभिलगृह्यसूत्रम् । सटीकम् । ( कर्म्मकाण्ड वि० १२ ) रु० ३—०

११९ सिद्धान्तकौमुदी । व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता । रूपलेखनप्रकार- पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च । कारकान्तो भागः । ( व्या० वि० १४ ) रु० १—४

१२० कात्यायनशुल्बसूत्रम् । कर्कभाष्य-महिधरवृत्ति सहितम् । ( कर्म्म० वि० १४) रु० ०—६

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु० ४—८

१२२ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य पं० अनन्तरामशास्त्रि कृत टिप्पणी सहितः । ( कर्म्म० वि० १३ ) रु० १—०

१२३ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड महोदयनामाज्ञया न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता । ( सांख्य वि० २ ) रु० १—६

१२४ वाक्यपदीयम् । श्रीमर्तृहरिमहावैयाकरण विरचितम् । न्याय-व्याकरणाचार्य पं० श्रीसूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च सम्पादितम् । ( ब्रह्मकाण्डम् ) । ( व्या० वि० १५ ) रु० १—०

१२५ प्रौढमनोरमा । भैरवी-भावप्रकाश-सरलाटीकोपेतः लघुशब्दरत्नश्च । [ स्त्रीप्रत्ययान्तो भागः ] ( व्या० वि० १६ ) रु० ६—०

१२६ जैमिनीयन्यायमाला । श्रीमन्माधवाचार्यविरचिता । तद्विरचितेन विस्तरेण विभूषिता । मीमांसाचार्य पं० पट्टाभिरामशास्त्रिणा रचितया विषयवाक्यविवरण्या समलङ्कृत्य संशोधिता । [ तृतीयाध्यायान्ता ] ( मीमांसा वि० ७ ) रु० २—०

१२७ शतपथब्राह्मणम् । (शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं) वेदविशारद मीमांसाकेसरिणा पण्डित चिन्नस्वामिशास्त्रिणा टिप्पण्यादिभिर्विभूष्यविशोधितम् । [ काण्डचतुष्टात्मकः प्रथमोभागः ] ( वेद० वि० ७ ) रु० २—८

१२८ लघुशब्देन्दुशेखरः । म. म. श्रीनागेशभट्टविरचितः । [नपादान्तत्सूत्रान्तोभागः] नागेशोक्तिप्रकाश व्याख्यया संवलितः । ( व्या० वि० १७ ) रु० २—८

१२९ कृत्यसारसमुच्चयः । म. म. श्रीअमृतनाथझा शर्मणा विरचितः । पण्डितश्रीगङ्गाधरमिश्रशर्मणा यथास्थलोपयुक्तटिप्पणीभिः प्रयोजनीयविविधपरिशिष्टविषयैश्च समलङ्कृतः । ( धर्म० वि० ४ ) रु० १—१२

१३०-(१)भावप्रकाशः । श्रीभावमिश्रप्रणीतः । वनस्पतिविशेषज्ञ-रूपनिघण्टुकार-श्रीरूपलाल वैश्यवरेण विरचितेन निघण्टुभागीय-सचित्र-विवरणेन समुपबृंहितया भिषग्रत्न-श्रीब्रह्मशङ्करशास्त्रिणा विनिर्मितया विद्योतिनीनामिकया भाषाटीकया संवलितः । [ पूर्वखण्डान्तः ] ( आयुर्वेदवि० ३ ) रु० ५—०

१३०-(२) भावप्रकाशः । विद्योतिनी-भाषाटीका सहितः । [ ज्वराधिकारमात्रः ] रु० १ - ८

१३१ गादाधरी-सामान्यनिरुक्तिः । गंगाख्यव्याख्या टिप्पणी सहितः (न्या० वि० १९) रु० ३—०

१३२ चरणव्यूहसूत्रम । आचार्यमहिदासकृतभाष्यसहितम् । वेदाचार्य डोगरा-अनन्तरामशास्त्रिणा टिप्पण्यापरिष्कृत्य संशोधितम् । । ( वेद वि० ८ ) रु० ०—८

१३३ वैयाकरणभूषणसारः । श्रीहरिवल्लभविरचित-दर्पणटीकया, म. म. श्रीभैरवमिश्रकृतया-परीक्षाटीकया, श्रीकृष्णमित्रकृत-भूषणव्याख्यया, श्रीखुद्दीझाशर्मकृत तिङर्थवादसारेण च सहितः । ( व्या० वि० १८ ) रु० ३—०

---